॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला

२१६



महाकवि श्रीकालिदासविरचितं

# मालविकाग्निमित्रम्

'प्रकाश' नामक संस्कृत-हिन्दीटीकाद्वयोपेतम्

टीकाकारः

मुजफ्फरपुरराजकीयधर्मसमाजसंस्कृतमहाविद्यालयाध्यापक-

व्याकरण-साहित्य-वेदान्ताचार्य-

**पण्डित श्री रामचन्द्र मिश्रः**



प्रकाशकः—

**चौखम्बा संस्कृत पुस्तकालय, बनारस-१**

[ वि. सं. २००८ ] [ सन् १९५१ ]

# प्रस्तावना

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥

ज्योतिस्तमोहरमलोचनगोचरं तज्जिह्वादुरासदरसं मधुनः प्रवाहम् ॥
दूरे त्वचः पुलकबन्धि परं प्रपद्ये सारस्वतं किमपि कामदुघं रहस्यम् ॥

अनुसन्धित्सुविपश्चिद्भिः स्वबुद्धिशास्त्राभ्यासविजृम्भितवादकण्डूत्यपनुत्तये 'अपारे काव्यसंसारे कविरेष प्रजापतिरिति' कवीन् प्रजापतीनुक्त्वा सममन्यन्त तानवामन्यन्त वा प्राचीना जना इति पावन्न निर्धार्यते, नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् । नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति इति मम्मटभट्टीयव्याहृतेः परमार्थस्पर्शित्वं पक्षपातपूर्णव्याहारत्वं वा यावन्न व्यवस्थाप्यते तावत्तु तदुद्बोधितयैव दिशाऽस्माभिरपि प्रयातव्यमित्यकामेनापि सर्वेभ्यः कविभ्यः शिरो नमनीयमेव, का कथा महाकवीनाम् ?

तेष्वेवैकतमं प्रधानं कविमधिकृत्य किमप्यत्र वाग्जालमवतितारयिषुरहं यदि श्रद्धाऽतिरेकसमुद्भावितातिशयोक्तिसंवलितभाषितयोत्प्रेक्ष्यीयेय नूनमयमन्यायो मयि कृतो भवेदिति विवेचकान् वाचकाननभिधाय नाग्रे सर्त्तुमिच्छति चेतः ।

इदं कतमं मन्वन्तरं कतमा चेयं चतुर्युगी, यदवयवभूतस्य कले रन्तराले वयं वर्त्तामहे इति याथातथ्येनाविदन्नपि जनश्चिरादनुवर्त्तमामिमां सृष्टिमभिदधीतैव । सृष्टेश्चास्याः प्रथमायां प्रवृत्तौ निर्णीयमानायां कालविषये काममुत्पद्यन्तां मतभेदाः परन्तु सकालो लक्षैरेवाब्दानां परिच्छेत्तव्य इत्यत्र नास्ति विवादः । सृष्टिप्रथमप्रहरे मनुष्या आसन्नवेत्यत्रापि विद्यते मतभेदसम्भावना, विकासक्रममातिष्ठमाना अपि सत्कार्यवादाभ्युपगन्तार इव केनाऽपि रूपेण मानुष्यकबीजं समये तत्रापि सदवगच्छेयुः । ततः कालात् क्रमशो विकासोन्मुखी मानवसृष्टिः सभ्यतांशेऽपि प्रतिपदमग्रेसरी भवितुमचेष्टत, क्रमेण वाक्स्फुटतामानीयत, वाक्सन्दर्भ उपक्रम्यत, व्यवहारा निरधार्यन्त । सैव सभ्यता यदा स्वानुभवान् परेभ्य आस्वादनाय प्रदातुमन्तः कामपि प्रेरणामाचकलत्तदैव काव्यमात्मानमलब्धेति विदुषां विचारः । लब्धात्मना चानेन महती प्रतिष्ठोपार्जिता, सङ्गीतमपि साहित्यं सरस्वत्याः स्तनद्वयम् इति ब्रुवाणेन केनापि प्राचा साहित्यपदेनाभिलप्यमानस्यास्य काव्यात्मनो वस्तुनो गुणगौरवं प्रति प्राकाश्यतातिशयसंभृतः समादरः । तथा चाह राजशेखरः काव्यमीमांसायाम् :—

'आन्वीक्षिकीत्रयीविद्या दण्डनीतयश्चतस्रो विद्या इति कौटिल्यः। पञ्चमी साहित्यविद्येति यायावरीयः। सा हि चतसृणामपि विद्यानां निष्यन्दः। शब्दार्थयोर्यथावत्सहभावेन साहित्यविद्या'। 'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति' इत्यादावपि सुप्रयुक्तत्वेन काव्यत्वेन प्रयोग एवाभिमत इत्युक्तिरपि नात्यन्ताश्रद्धेया। 'नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा। कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा' इत्यनेन पुराणवचनेनापि विद्यासारभूतस्यास्य कवित्वप्रमापकस्य काव्यस्य माहात्म्यमुपगीतमेव। अतिमहत्त्वशालिनोऽस्य काव्यस्य लोकप्रियता तल्लक्षणनिरूपणप्रकरणगतमतभेदैरप्युन्नेतुं शक्यते तथा हिः—

१. गुणालङ्कारयुक्तौ शब्दार्थौ काव्यमिति वामनः।

२. तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि, इति मम्मटः।

३. एवमेवप्रभाकरोऽपि।

४. निर्दोष गुणालङ्काररसवद्वाक्यं काव्यमिति भोजराजः।

५. गुणालङ्काररीतिरसोपेतः साधुशब्दार्थसन्दर्भः काव्यमिति वाग्भटः।

६. निर्दोषं गुणालङ्कारलक्षणरीतिवृत्तिमत् वाक्यं काव्यमिति पीयूषवर्षः।

७. रसादिमद्वाक्यं काव्यमिति शौद्धोदनिमतम्।

८. वाक्यं रसात्मकं काव्यमिति विश्वनाथभट्टाचार्यः।

९. इष्टार्थव्यवच्छिन्ना पदावली काव्यमिति दण्डी।

१०. रमणीयार्थप्रतिपादकः शब्दः काव्यम्, लणीयता च लोकोत्तराह्लादजनकज्ञानगोचरतेति पण्डितराजः।

११. ध्वन्यात्मकं वाक्यं काव्यमिति महिमभट्टः।

१२. रसालङ्कारयुक्तं सुखविशेषसाधनं वा काव्यमिति केशवमिश्रः।

इयता परिकरेण विवेचितलक्षणस्य काव्यस्य महत्त्वं को नाम सचेतनोऽपह्नोतुं प्रयतेत।

सर्वप्रथमं कस्यां भाषायां काव्यनिर्माणमारभ्यतेत्यधुना निर्णेतुं न शक्यम्, बहवो भाषा उत्पद्य स्वपोषकजात्या सहैवास्तमुपगताः स्युरित्यस्यापि तर्कस्य सारवत्तयोपष्टम्भात्, किन्त्वधुनोपलभ्यमानासु भाषासु वैदिक्या भाषायाः—ऋग्वेदस्य सर्वप्राचीनग्रन्थतयाऽऽस्थितस्य स्वांके धारणात्—प्राचीनत्वमभ्युपयन्तो नैवापराध्यन्ति, सन्ति च तत्र बहवस्तादृशा वाक्सन्दर्भा यान् काव्यत्वेनाभिधातुमीश्महे, तथा हिः—

'अभ्रातेव पुंस एति प्रतीची गर्त्तारुगिव सनये धनानाम्।
जायेव पत्ये उशती सुवासा उषाहस्रेव निरिणीतो अप्सः' ॥ ऋक्. १. [१२४. ७.]

सूर्यस्येव वक्षसो ज्योतिरेषां समुद्रस्येव महिमा गभीरः।
वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवेवः ॥ ऋक्. ७. [३३. ८.]

तदेवमस्यां वैदिकसंस्कृतभाषायां सर्वप्रथमं काव्यमात्मानमलब्धेति वयं भारतीया अभिमन्यामहे ।

काव्यमथ केन रूपेण स्वं प्राकटयदिति चिन्त्यमाने गद्यात्मनैव तदाविरभवदिति मन्तव्यमेव स्वाभाविकतया गद्यस्यैव प्रागात्मलाभस्य सम्भावितत्वात् । यद्यपि बहवः काव्यपदस्य पद्यबद्धवाक्सन्दर्भपर्यायतामङ्गीकुर्वते परन्नैतदाद्रियन्ते विवेचकाः ।

एवं गद्यगतकाव्यकृतचमत्कारस्य चिरपरिचितत्वे सञ्जाते झिल्लीझंकृतेषु पिकरुतेषु निर्झरनिर्गतकलकलनिनादेषु गतिकृत-माधुर्यातिशयमहिम्ना कामपि मादकतामनुभूय तदाधारेण प्रवृत्ताया उद्भाविताया वा सङ्गीतकृतानन्दधाराया गद्यगतभावाभिव्यक्तिपाटवस्य चान्योन्यमुपसङ्गमे कोऽपि नवश्चमत्कारविशेषः-समुदियादिति विचारे प्ररूढवति पद्यात्मकः काव्यस्य परिणामः संभाव्यतेस्य.दुद्भूतः । इति । सोऽयं काव्यप्रवाहः सति हृदये कन्न मदयति कस्य चक्षुषी नार्द्रयति ? कस्य वा सचेतसश्चेतसः स्फीतस्फारतां नादधाति ? तदिदं काव्यं—'काव्यंयशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे । इत्यादिप्रतिपादिततत्तत्फलकतया चिरमुपास्यमानं यदैकरसतया नाधिकमस्वदत सामाजिकेभ्यः केवलश्रुतिवर्त्मनाऽन्तःप्रविशन्ती निःसहाया वर्णराजिर्बहुजनानामेवान्तरानन्दमन्दाकिनीं प्रवाहयितुमशकत् केवलया पद्यपद्धत्या च कियतीमतृप्ततामिवान्वभवन् भावुकाः रसिकमनांसि च प्रतिदिवसं समेधमानानां सभ्यतामुखोद्भासिकानां नृत्यगीतवादित्रादिकलानां सहभावेन समुत्पाद्यमानं कमपि सुखविशेषं कविकर्मणोपस्थापयिष्यमाणमचकमन्त तदैव स्वाभाविकतासहचरवाकोवाक्यसमुज्जीविताभिनयसमर्पितमानन्दमभिलषणीयतयाऽऽदर्तुमारभन्त जनाः नाटकानामध्ययनमितिवृत्तानामप्यवगमकं भवति नैतावता तेषामितिहासरूपता प्रत्येया, नहि कवेरितिवृत्तमात्रनिर्वाहेणात्मपदलाभः इतिहासादेरेव तत्सिद्धेः, इति दर्शनादितिहासेष्वविद्यमानस्य कविकृतविशेषस्य नितरामावश्यकस्य तत्र भेदकत्वात् । इतिहासा हि नीरसा भूतकालिकमानवसमाजस्य निर्जीवचित्राणीव भवन्ति ते हि केवलं तात्कालिकं रूपमनुमापयन्ति न चमत्कुर्वते पुनश्चेतांसि पाठकानाम् । नाटकानि तु न केवलं भूतकालिकीर्घटना आवर्त्तयन्ति किन्तु तात्कालिकसमाजस्थितिं पुरत उपस्थापयन्ति, दर्शकाँश्च तद्भावनाभवितान्तःकरणान् विधाय सहस्राब्दीपूर्वतने काले विनैव कामपि तान्त्रिकीं क्रियां नयन्ति । इतिहासा यत्रास्थिपञ्जराणि नाटकानि तत्र कापि कमनीयाऽऽकृतिर्ललना, इतिहासा यत्र नीरजस्कं सुमं नाटकानि तत्र मकरन्दमेदुरोन्मिषन्ती नवकलिका ।

नाटकानि तथाऽऽख्यायिकाश्च सामाजिकचित्रस्फुटाङ्कनकौशलनिकषा इति सत्यपि साम्ये नाटकानां तथाऽऽख्यायिकानाञ्च महदन्तरम् । नाटकं दृश्यकाव्यम्, आख्यायि-

काः श्रव्यकाव्यप्रभेदाः नाटकदर्शनसमये सममेव चक्षुर्भ्यां हृदयस्यापि तृप्तिर्भवति श्रुतिपथागतकवितामाधुर्या, आख्यायिकाध्ययनेन तु केवलमन्तरेव तृप्यति नाटक-निर्माणावसरे रङ्गमञ्चोपनिपाति व्यावहारिकं काठिन्यमपि कविना ध्यातव्यं भवति, या च कथाऽवतार्यते तत्र कालकर्तृजनशीलावस्थामानसिकस्थितिप्रभृतीनि ध्यातव्यानि भवन्ति अभिनयाऽपेक्षितकालावधानदानायापि सतर्कताऽपेक्ष्यते दर्शकरुचिनिष्ठापनाय रसपरिवर्त्तनकृतायापि चमत्काराय यतितव्यम् भवति यत् किमपि वक्तव्यं तदर्थं पात्र-विशेषावतारणा सुसङ्गता कर्तव्या भवति कविता च सर्वत्रानुस्यूता कर्त्तव्याऽऽपद्यते । आख्यायिकाकारास्तु यथारुचि कस्यापि पात्रस्य मुखेन वा किमपि प्रभवन्ति समुपदेष्टुम् कथाप्रसङ्गस्य सङ्कोचविकासयोरीशते, कमप्येकमेव रसं परिपाच्य कृतित्वमधिगन्तुं च युज्यन्ते ।

यत्र रमणीयनाटकनिर्माणे कथायाः क्रमसन्दब्धता, परस्परसाभिप्रायताऽवान्तर-प्रकरणार्थानाम्, चरित्रसौष्ठवम्, स्वाभाविकता चेति सर्वेऽपि गुणाः सङ्कलय्यापेक्षिताः, तत्र महाकाव्यनिर्माणे कवित्वकृतश्चमत्कार एव केवलः स्वाभाविकतासहचरः समाद्रि-यमाणो दृश्यते । यथैव केवलेन चरित्रचित्रणेन न कवित्वकार्यं निरुध्यते तथैव केव-लया कवितया नाटके नाधिकशोभनत्वमाधियते । महाकाव्येषु यद्येकत्र सर्गे मृग-यावर्णनमेव क्रियतेऽपरत्र च जलक्रीडा मात्रं प्रस्तूयते न तावता कापि क्षतिः, प्रत्युत नवनवकल्पनाप्रसूततद्वाग्भङ्गीभिरुपह्रियत एव कोऽपि प्ररूढः प्रमोदः नाटकेषु तु तथा क्रियमाणे कोऽपि विरसभाव उपस्थापितो भवतीति ।

## नाटक–साहित्य–प्राचीनता

भारतीयं नाटकीयं साहित्यं मूलत एव विचारधारायां विासक्रमे च स्वतन्त्र-मित्याधुनिका अपि विवेचकाः स्वीकुर्वन्ति । एतदीयमूलान्वेषणे क्रियमाणे ऋग्वेद-पर्यन्तं गन्तव्यं भवति यत्र नाटकीयवार्त्तालाप[1]प्रकारः समाविष्टो विद्यते । रामा-यणे[2] महाभारते[3] च नाटकस्य प्रसङ्ग आयातः । कृष्णलीलाविषयकनृत्यगीताद्या-

---

१—ऋग्वेदस्य दशमे मण्डले प्रथमाध्याये दशमे च चतुर्दशर्चे सूक्ते यमयमी-संवादो नाटकीयकथोपकथनपद्धत्योपनिबद्धस्तमेवाधारीकृत्यायमूहः ।

२—रसैःशृङ्गारकरुणहास्यरौद्रभयानकैः ।
वीरादिभी रसैर्युक्तं काव्यमेतदगातम् ॥ १।४।८
नाराजके जनपदे प्रकृष्टनटनर्त्तकाः । २–६७–१५.
'श्रेष्ठ्यं शास्त्रसमूहेषु प्राप्तो व्यामिश्रकेषु च' । २–१–१७.
वादयन्ति तथा शान्ति लासयन्त्यपि चापरे ।
नाटकान्यपरे प्राहुर्हास्यानि विविधानि च ॥ २–६९–४.
शैलूषाश्च तथा स्त्रीभिर्यान्ति । २–८३–१५.

३—इत्यब्रवीत् सूत्रधारः सूतः पौराणिकस्तथा ।

धारेणास्य प्रकटः प्रसारः स्वीक्रियत एव। षष्ठे बी. सी. शताब्दीसमये समुद्भूतेन वैयाकरणप्रधानेन पाणिनिना न केवलं नाटकं स्मृतमेवाऽपि तु निर्मितमपि[1]।

भरतेन स्वकीयं नाट्यशास्त्रं खैष्टाब्दस्य तृतीये शतके निरमियत, तस्मिंश्च समये नाटकानां प्रबलः प्रचार आसीदित्यगत्यापि स्वीकरणीयम्।

विहारप्रान्ते छोटानागपुरनामके विभागे एका रङ्गशालाऽनुसन्धातृभिरासादिता या बी. सी. द्वितीयशताब्दीसमये निर्मितोच्यते। एतेन संस्कृतभाषायां नाटकानां निर्माणमपि बी. सी. तृतीयशतके प्राप्तप्रकामप्रचारमासीदिति वक्तुं शक्यते बुद्धचरितंनामकाव्यं प्रबद्धवतोऽश्वघोषस्य महाकवेर्नाटकमप्युलब्धमस्ति यो जन्मना खैष्टाब्दप्रारम्भकालमलमकृत। प्राचीनत्वेन समर्थितानि यानि नाटकानि दृश्यन्ते, तेषु यानि प्राचां कवीनां नाटकानि स्मर्यन्ते यदि तान्यपि लभ्येरन्नवश्यमत्र विषये प्रचुरः प्रकाश आधीयेत।

यद्यपि वेवर (Weber) प्रभृतयः कतिपये पाश्चात्यविद्वांसो भारतीय 'मूलभूतं' 'ग्रीक' नाट्यप्रणालीप्रचारमामनन्ति, तत्र च 'यवनिका' शब्दप्रयोगं साधनत्वेनाङ्गीकुर्वते परमिदं मतन्न सर्वमान्यम्, लेवी (Levi) प्रभृतीनां पण्डितानां तत्र विसंवादात्[2], जवनिकाशब्दस्यैवं वर्णन्यासाच्चास्य तर्कस्य पराहतेः।

---

ननृतुर्नर्तकाश्चैव जगुर्गेयानि गायकाः॥
'पश्यन्तो नटनर्त्तकान्'॥

'नाटका विविधाः काव्याः कथाख्यायिककारकाः'। 'आनर्त्ताश्च तथा सर्वे नटनर्त्तकगायकाः'

१—तथा च स्मरामः—'स्वस्ति पाणिनये तस्मै येन रुद्रप्रसादतः।
आदौ व्याकरणं प्रोक्तं ततो जाम्बवतीजयम्'॥

इदमेव तज्जाम्बवतीजयं यत्र—

'गतेऽर्धरात्रे परिमन्दमन्दं गर्जन्ति यत्प्रावृषि कालमेघाः।
अपश्यती वत्समिवेन्दुबिम्बं तच्छर्वरी गौरिव हुङ्करोति'॥
'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।
यथा समस्तं तिमिरांशुकं तथा पुरोऽपि रागाद् गलितं न लक्षितम्'॥
'विलोक्य सङ्गमे रागं पश्चिमाया विवस्वतः।
कृतं कृष्णं मुखं प्राच्या नहि नार्यो विनेर्ष्यया'॥
'शरदि रविरश्मितप्ता विभ्राणाः शोषमतिशयक्लपिताः।
ज्वरिता इव लक्ष्यन्ते लङ्घनयोग्या महासरितः'॥

इत्यादीनि पद्यानि सन्तीति।

२—दृश्यताम्—History of Sanskrit Classical Literature by Krishnamacharia.

पुराणपद्धत्याऽपि नाटकीयसाहित्यस्य प्राचीनता स्पष्टमुद्घोषिता। तथा च नाट्यशास्त्रः—

महेन्द्रप्रमुखैर्देवैरुक्तः किल पितामहः। क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेत् ॥
न वेदव्यवहारोऽयं संश्राव्यः शूद्रजातिषु। तस्मात्सृजापरं वेदं पञ्चमं सार्ववर्णिकम् ॥
एवमस्त्विति तानुक्त्वा देवराजं विसृज्य च। सस्मार चतुरो वेदान् योगमास्थाय तत्त्ववित्
धर्म्यमर्थ्यं यशस्यञ्च सोपदेशं ससंग्रहम्। भविष्यतश्च लोकस्य सर्वकर्मानुदर्शकम् ॥
सर्वशास्त्रार्थसम्पन्नं सर्वसिल्पप्रदर्शकम्। नाट्यसंज्ञमिमं वेदं सेतिहासं करोम्यहम् ॥
एवं सङ्कल्प्य भगवान् सर्ववेदाननुस्मरन्। नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसम्भवम् ॥
जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च।
ययुर्वेदादभिनयान् रसानाथर्वणादपि। वेदोपवेदैः सम्बद्धो नाट्यवेदो महात्मना ॥
एवं भगवता सृष्टो ब्रह्मणा ललितामकम् ॥
आज्ञापितो विदित्वाहं नाट्यवेदं पितामहात्। पुत्रानध्यापयं योग्यान् प्रयोगं चास्य तत्त्वतः
एवं प्रयोगे प्रारब्धे दैत्यदानवनाशने। अभवन् क्षुभिताः सर्वे दैत्याये तत्र सङ्गताः,॥
देवतानामृषीणाञ्च राज्ञामथ कुटुम्बिनाम्। कृतानुकरणं लोके नाट्यमित्यभिधीयते ॥

आह च नाट्योत्पत्तिमधिकृत्य शारदातनयोऽपि स्वीये 'भावप्रकाशने—

'कल्पस्यान्ते कदाचित्तु दग्ध्वा लोकान्महेश्वरः। स्वेमहिम्नि स्थितःस्वैरं नृत्यन्नानन्दनिर्भरम्
मनसैवासृजद्विष्णुं ब्रह्माणं च महेश्वरः। नियोगाद्देवदेवस्य ब्रह्मा लोकानथासृजत् ॥
सृष्ट्वा स देवदेवस्य पुरावृत्तमथास्मरत्। दिव्यं चरित्रमैशं मे कथमध्यक्षतामियात् ॥
इति चिन्तापरे तस्मिन्नभ्यगान्नन्दिकेश्वरः। सनाट्यवेदमध्याप्य सप्रयोगं चतुर्मुखम् ॥
उवाच वाक्यं ब्रह्माणं नन्दी तच्चिन्तितार्थवित्। नाट्यवेदोपदिष्टानि रूपकाणि च यानि तु
विधाय तेषामेकं तु रूपकम् लक्षणान्वितम्। भरतेषु प्रयोज्य तत्त्वया सम्यग् विधानता
तस्मिन् प्रयुक्ते भरतैर्भावाभिनयकोविदैः। प्राक्तनानि च कर्माणि प्रत्यक्षाणि भवन्ति तेः
एवं ब्रुवन्नन्तरधान्नन्दी स भगवान् प्रभुः। श्रुत्वैतद्वचनं प्रीतो ब्रह्मादेवैः समन्वितः ॥
ततस्त्रिपुरदाहाख्यं रूपकं सम्यगभ्यधात्। अध्याप्य भरतानेतत्प्रयुङ्ध्वमितिचाब्रवीत्।
तस्मिंस्त्रिपुरदाहाख्ये कदाचिद् ब्रह्मसंसदि। प्रयुज्यमाने भरतैर्भावाभिनयकोविदैः ॥
तदेतत्प्रेक्षमाणस्य मुखेभ्यो ब्रह्मणः क्रमात्। वृत्तिभिः सह चत्वारः सृङ्गाराद्या विनिर्गताः'

एतत्प्रकरणद्वयपर्यालोचनया नाट्या वेदस्य प्रयोगपदेनाभिलप्यमानस्याभिनयस्य च परमप्राचीनता प्रतीता सती स्वोपपादकतया नाटकीयसाहित्यस्य प्राचीनतामवगमयति, त्रिपुरदाहाख्यं ब्रह्मविरचितं रूपकम् चोदाहरणतया स्मारयति। आस्तां तावत्।

कस्यांचिदपि भाषायां काव्यस्य विधासु पद्यकाव्ये प्ररूढप्रचारे सत्येव गद्यसाहित्यं प्रथत इति प्राचीन इतिहासः समर्थयति। संस्कृतसाहित्येऽपि व्यासवाल्मीकिप्रभृतिभिः क्षुण्णायां पद्यनिर्माणसरणौ नाटकनिर्माणमारभ्यत इति स्वीक्रियते। प-

द्यसाहित्यस्येतिहासश्च पृथक् प्रबन्धमर्हतीति नेह प्रतन्यते, सङ्क्षेपतः प्राचीनाचार्यरीत्या साहित्यस्य युगचतुष्टयमास्थीयते १. कृतयुगम्, २. त्रेतायुगम्, ३. द्वापरयुगम्, ४.कलियुगम् इति च। तत्र तत्र प्रथमं युगं वाल्मीकिमारभ्य भट्टबाणान्तम्। द्वितीयं युगं भारविमारभ्य धनपालान्तम्। अत्रैव युगे माघादयोऽन्तः पतन्ति। तृतीयं युगं राजशेखरमारभ्य पण्डितराजान्तम् तुरीयं च ततः परतः। अथवाऽलं नामग्राहम् युगविभागकल्पनया, अर्थमुखप्रेक्षितया युगविभागस्य स्फुटावसेयत्वात्। तथा चोक्तं प्राचा—

'कृते युगे व्यञ्जनयाऽवतीर्णा त्रेता युगे सैव गुणी बभूव।
ततस्तृतीये तु युगेऽर्थचित्र युगे तुरीये यमकप्रपञ्चः' ॥

यद्यपि कल्पनायामस्यामपि सम्भवति व्यभिचारः, कस्यापिचन कृतिनः कवितायाः सौभाग्येन लोकानां स्वसदृशकवितान्तराघटितेऽपि युगेऽवतारस्य सम्भवात्तथापि प्राधान्येन व्यपदेशा भवन्तीति मनसि कृत्यैवेदृशी प्रविभागकल्पना।

तात्कालिक्या भारतवर्षस्य राजनैतिक्या सामाजिक्या च परिस्थित्या युगेष्वेषु संस्कृतभाषा समुन्नतेः परां कोटिमाटीकत। महाकाव्यानि, गद्यकाव्यानि, नाटकानि च तानि निर्मीयन्त यान्यद्यत्वेऽपि भारतीयस्य सभ्यतायास्तत्सहचरस्यैतदीयसाहित्यस्य च विजयवैजयन्ती प्रसारयन्ति, यान्न केवलं भारतीया एव किन्तु वैदेशिका अपि प्रह्वीभावेन वादन्ते।

## कालिदासस्य मालविकाग्निमित्रम्

अस्मिन् नाटके राज्ञोऽग्निमित्रस्य मालविकायाश्चान्योन्यप्रणयकथोपनिबद्धा। अभिनयदृष्ट्या कथानकमाधुर्येण च नाटकमिदमतीव हृदयङ्गमम्। प्रणयस्य प्रणयोन्मादस्य वर्णने कविरत्र नाटके चमत्कारातिषयन् जनयामास। सम्भाव्यते कालिदासो बुद्धिपूर्वकमेवात्र समाजहितमेकत कृत्वा केवलां प्रणयलीलामेव प्रदर्शितवान्भवेत्। समाजस्य तात्कालिक्या अवस्थायाश्चित्रत्वेनैव नाटकमिदम् विज्ञाजनेभ्य उपाहरत्। अस्य नाटकस्य भाषानितान्तसरलाऽस्त, गद्यानि चातिशयमृदूनि तेनास्य प्रयोगे कथोपकथनावसरे वैरस्यं नोद्भासते। आदित एवारभ्यास्मिन्नाटके सरसाः प्रसङ्गा अवतार्यन्ते येन दर्शकानां मनस आवर्जना सुकरा सम्पद्यते। यैराधुनिकैः प्राचीननाटकेषु नृत्यगीतादेर्वैरल्यमुत्प्रेक्षमाणैरुदास्यते तैरत्यत्र नृत्यगीतादेः प्रचुरा सामग्रीसमासाद्येत। आधुनिकं नृत्यं गीतञ्च तत्र न स्यादितित्वन्यत्। अत्र नाटके धारिण्याश्चरित्रं सर्वापेक्षया रमणीयं चित्रितम्, सा हि राजानं कामुकमुत्प्रेक्षमाणानवगतां मालविकां तद्दर्शनपथादेव रक्षति नच तां राजधान्या दूरयति, न वा तामुत्पीडयति। दैवाच्चित्रफलकद्वारा राजन्यात्तत्तद्गन्धे तद्दिदृक्षाव्याकुले च विदूषककल्पितोपायेन मालविकायां दर्शनपथमवतरन्त्यामपि राज्ञो विशेषदर्शनव्यग्रता तस्या धैर्यं पराभवति, तथापि सा नाधिकं कुप्यति केवलं राजानं सकटाक्षक्षेपमाह—

'यदि राजकार्येष्वपीदृशी निपुणताऽऽर्यपुत्रस्य, ततः शोभनं भवतीति'

अयमत्र तस्या आशयः—येन प्रपञ्चेन भवान् विगतनेपथ्याया मालविकाया दर्शनमिच्छति, तत्र प्रपञ्चे. यावती बुद्धिरुपयुज्यते, तावती चेद्राजकार्ये उपयुज्यते बहवोऽर्थाः साधिताः स्युः इति। एतेन तस्या राजविषयः प्रेमा समर्थितः । अतः परमपि सा न किमपि तादृशमाचरति येन तस्या मालविकां राजानं प्रति वेर्ष्याभावः प्रकटी भवेत्। इरावत्यां प्रत्यक्षीकृत्य मालविकाया राजनि भावबन्धं निवेदितवत्यामपि सा केवलमिरावत्या वचनं रक्षितुमेव तां मालविकां कारावासे निक्षिपति, न तु स्वयमाकुलत्वं व्यनक्ति। अवसानेऽपि पुत्रविजयवार्ताश्रवणप्रसादेन सर्वाभ्यो दासीभ्य उपहारान् प्रदाय राज्ञे उपहारभावेन मालविकामङ्गीकृतदेवीशब्दां समर्पयति, न केवलं समर्पयत्यपि तु तस्या राज्ञे समर्पणमनुमन्तुं सपत्नीमिरावतीमपि स्वानुरोधेन बाधते, तस्या अनेन व्यापारेण तदीयं गौरवमुद्दीप्यते।

राज्ञोऽग्निमीत्रस्य चरित्रं केवलं विलासमन्थरमत्र वर्णितम्, स हि मालविकामभिलष्यति परं धारिण्या भयेन तदग्रे स्वं भावं गोपयतीव। इरावत्यां प्रमदवने तदीयं गुप्तंप्रणयव्यापारं दृष्टवत्यां तमन्यथाभावेनोपच्छन्दयति। मिथ्याभाषणादपि न त्रपते, प्रणये मिथ्याभाषणस्याकिञ्चित्करत्वात् इरावत्या अवमाननयाऽपि न क्रुध्यति,परासक्तस्यापरस्त्रीकृतावमाननायाः सोढव्यत्वात्तदेभिराचरणैः प्रणयमूर्त्तिरयं राजाऽत्र नाटके चित्रितः । सुङ्गवंशस्य वीरो राजा पुष्पमित्रस्तस्यायं तनयोऽग्निमित्रः स च नृत्यगीतवादित्रादिरसिकः प्रणयपेशलहृदन्तरश्च मन्ये तेनैवायं पित्रा परत्र राजभावेन प्रतिष्ठापितः।

अत्र ग्रन्थे विदूषकस्य चरितमपि ध्यानदानयोग्यम्। प्रायः सर्वेष्वप्यन्यनाटकेषु विदूषकस्य हासमात्रप्रयोजनकता प्रमीयते। परमत्र नाटके विदूषकः प्रारम्भत एवराज्ञो नर्मसचिवभावेनोपनिबद्धः,स हि मालविकाया दर्शनाय राजानमुत्कण्ठयति तदनुकूलमवसरं निर्मिमीते। सति कस्मिँश्चिन प्रतिबन्धे तदपाकरणाय प्रयस्यति क्षमते च। यथा मालविकायां कारानिरुद्धायां तदुन्मुक्तये स सर्पदंशमभिनीय नागमुद्रासनाथाङ्गुलीयकमासाद्य तामुन्मोच्य राज्ञा सह साक्षात्कारयति । अस्मिंश्च व्यापारे सहायिका अपि भवन्ति राजान्तःपुरपरिचारिकाः एतेन प्रतीयते यदेतदीयव्यापाराणां राजानुमोदितता सर्वैर्विदिताऽवर्त्ततेति।

इरावती राज्ञो द्वितीया पत्नी, साऽत्र नाटके मध्ये समायाता स्वाभाविकेनस्वामिनः परस्यामासक्तिमालोच्य समुद्भूतेन मनोविकारेण परं विषीदति। विषादविश्रृङ्खलमनोदशा च सा राज्ञा क्रियमाणाननुनयानवधीरयति । राज्ञश्चामुमविनयं प्रधानमहिष्यै धारिण्यै निवेद्य समुचितां दण्डव्यवस्थां मालविकायाःकारावासरूपां विधापयति। राजकृताविनयस्य तस्या हृदि तादृशः प्रभावो येनासौ पश्चात्तपत्यपि न।परं सैवेरावती वसुमित्रस्य सपत्नीपुत्रस्य विजयवार्त्तामुपश्रुत्य परं प्रसीदति। स्वाभूषणानि दासी-

भ्यो वितीर्यापि न सन्तुष्यति। राज्ञे मालविका सम्प्रदानमप्यनुमोदयति। अस्याश्चरित्रे भावुकता सर्वत्र प्रतीयते।

मालविका सर्वत्रात्र नाटके प्रणयविह्वला प्रदर्शिता। सा हि स्वस्या विगतनेपथ्याया रङ्गभूमाववतारणां न प्रतिषेधति, गानेऽप्यात्मनोऽनुरागं प्रकटयति, राजदर्शनाय वकुलावलिकया सख्या क्रियमाणं प्रबन्धं चेतसा कामयते, जाते चेरावती साक्षात्कारे न बिभेति। कारावासमपि प्रियप्राप्त्युपायप्रतिफलतया बहुमन्यते। अवसाने च सर्वजनसमक्षं नवागतशिल्पिदारिकाद्वयेन परिचय इव दीयमाने परिव्राजिकाकृतां स्ववार्त्तां निशमितवतो राज्ञो मनोभावस्य विषये 'किन्नु खलु साम्प्रतं भर्त्ता भणति' इति ब्रुवाणा सा स्वस्याः प्रणयोन्मादं शब्देनेवाह। मधुरचरित्रा गुणवती सुन्दरीचेयमस्य नाटकस्य हृदयम्।

वकुलावलिकादीन्यन्यानि पात्राणि तु न विशिष्यालोचनामर्हन्ति, केवलं परिव्राजिकायाश्चरित्रं ध्यानमाकर्षति, सा हि प्रारम्भत एव स्वामिकार्यं भ्रात्रा चिन्त्यमानं सम्पादयितुमिव परिव्राज्याविरुद्धमपि राजहृदयानुवर्त्तनमारभते, लोकदृष्टौ स्वस्या विनिपातमपि न गणयति। अवसाने च सा स्वं रूपं प्रकटयति कार्यसिद्धौ प्रसीदति च।

तदिदं नाटकं कथांशेऽतिमनोरमम्। कवित्वेऽप्यस्य नाटकस्य स्थानमुत्कृष्टमेव। यद्यपि कालिदासस्येदं नाटकं प्रथमा कृतिरिति प्रतिभाति तथापि कविकुलगुरुरसौ प्रथमकृतावपि प्रगाढम् कवित्वं प्रदर्शितवान्। प्रथमकृतित्वेन नवीनकविकृतित्वेन वा किमपि काव्यं नाटकं वा नोपहासास्पदं भवति तदीया श्रेणी तु परीक्षणैकनिर्धार्या, यथोक्तं तेनैव—

'पुराणमित्येव न साधु सर्वं नचापि काव्यं नव मित्यवद्यम्। सन्तः परीक्ष्यान्यतरद्भजन्ते' इति। मन्ये कालिदासोऽपि समसामयिकविद्वत्समुदयमुद्दिश्यैवेत्थमभिहितवान्। राजप्रभाववर्णनेऽत्र निबद्ध्यमानं निम्नलिखितं पद्यं नितान्तं हृदयावर्जकम्।

नच न परिचितो नचाप्यरम्यश्चकितमुपैमि तथापि पार्श्वमस्य।
सलिलनिधिरिव प्रतिक्षणं मे भवति स एव नवो नवोऽयमक्ष्णोः' ॥

पद्यमिदं दृष्ट्वैवमाद्येन 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति लिखितमुत्प्रेक्षे। मध्याह्नवर्णनाय निवेश्यमानं पद्यम्—

'पत्रच्छायासु हंसा मुकुलितनयना दीर्घिका पद्मिनीनां
सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि।
विन्दूत्क्षेपान् पिपासुः परिसरति शिखी भ्रान्तिमद्वारियन्त्रं
सर्वैरुस्रैः समग्रस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः ॥'

किदृशीं स्वाभाविकीं स्थितिं प्रकाशयति। प्रणयदशायाश्चित्रणमस्य कवेरतिसुन्दरं भवतीति प्रसिद्धं तदंशेऽपीदं नाटकं न हीयते। दृश्यताम्—

अनातुरोत्कण्ठितयोः प्रसीद्‌ध्यता समागमेनापि रतिर्न मां प्रति ।
परस्परप्राप्तिनिराशयोर्वरं शरीरनाशोऽपि समानुरागयोः,

कीदृश आदर्शप्रणयः, ? कीदृशी च भावनामयता ?

चतुर्थेऽङ्के मालविकया सह राज्ञः संयोगे निबद्‌ध्यमानं पद्यम्—

'विसृज सुन्दरि सङ्गमसाध्वसं तव चिरात्प्रभृतिप्रणयोन्मुखे' इति ॥

शाकुन्तलस्थं—अयं सते तिष्ठति सङ्गमोत्सुको विशङ्कसे भीरु यतोऽवधीरणम् ।

इतिपद्यम् ध्यानपथं प्रापयति । अधिकं विज्ञैः स्वयं परीक्ष्यम् ।

अवसिता प्रस्तावना पुस्तकमधुना प्रकाशनाय प्रदेयम्, अधुना मदीया मानसिकी स्थितिर्दुःखमयी सुखमयीचेति भावद्वयाकुला, ग्रन्थः प्रकाश्यत इति सुखम्, इतः परमेतदीयमनुशीलनं विरमतीति दुःखं च । तत्स्मृतमत्रत्यमेव पद्यम्

'कान्तां विचिन्त्य सुलभेतरसम्प्रयोगां श्रुत्वा विदर्भपतिामनमितं बलैश्च ।
धाराभिरातप इवाभिहतं सरोजं दुःखायते मम मनः सुखमश्नुते च, ॥

अस्य नाटकस्य निम्नलिखिताष्टीकाः श्रूयन्तेः—

१. काटेयवेमकृता, २ नीलकण्ठकृता, ३ वीरराघवकृता, ४ मृत्युञ्जयनिश्शङ्ककृता, ५ तर्कवाचस्पतिकृता, ६ श्रीकण्ठकृता, ७ परीक्षितकुञ्जुनीराजकृता । आसु प्रथमा मुम्बईतः पूनातश्च प्रकाशित, द्वीतीया मुम्बईतः, तृतीयाऽप्रकाशिता, चतुर्थी मद्रासनगरतः, पञ्चमी च कलिकातातः प्रकाशिता । शेषयोर्विषये विशिष्य न ज्ञायते, मन्ये ते अप्रकाशिते एव भवेताम् ।

तासु तिस्रो मद्दृष्टिगोचरतां गताः— एका हरिदासी द्वितीया कुमारगिरिराजीया, तृतीया जीवानन्दी च ताश्चानुशील्य मयेयं प्रकाशटीका प्रणीता, हिन्दीगद्यानुवादश्चाधः समावेशितः । मन्ये परीक्षकाणां विदुषां परीक्षार्थिनामन्तेवसतां च सन्तुष्टये जायेत मम श्रमो यदि ते विमत्सराः सन्तः सकृदप्यवलोकयेयुरिमाम् ।

परगुणपरमाणून् पर्वतीकृत्य निजहृदि विकसतां सतां नित्यक्षमामयतया दोषैकदृशामसतां तु पुरः क्षमा प्रार्थना व्यापारस्यापि स्वप्रवञ्चनामात्रसारतया क्षमाप्रार्थनामन्तरेव समापयामि स्वीयां प्रस्तावनामिमामिति ।

मुजफ्फरपुरम्
हरिशयनी २००८

विदुषामाश्रवः—
श्री रामचन्द्र मिश्रः

# कालिदास का काल

हमारे प्राचीन कवियोंका काल बड़ी कठिनतासे निर्णीत होता है, क्यों कि वे अपने सम्बन्धमें कुछ लिखते नहीं थे, ऐहलौकिक प्रसङ्गसे उनको कुछ घृणासी रहती थी। इस लिये केवल अनुमान तथा दूसरों द्वारा किये गये उल्लेखोंके आधार पर ही कालिदासका समय भी निर्णीत हो सकता है। इस तरहके अनुमानोंमें कुछ तथ्य हो भी सकता है, इसी कारण यहाँ कुछ मत संक्षिप्तमें उद्धृत किये जाते हैं।

१—सर विलियमजोन्सने विक्रमादित्यकी सभामें वर्त्तमान मानकर कालिदासको ईशवी सन् से पूर्वका माना है। पूनाके पं. नन्दर्गीकर महाशय ने भी इस मतका समर्थन किया है।

२—डाक्टर वेवर, लोसन, जैकॉवी, मॉनियर विलियम्स, सी. एच. रानी महानुभावों क मतसे ईशवीय द्वितीय शतकसे चतुर्थ शतकके वीचमें कालिदास हुये थे। 'विसेण्टस्मिथ' साहव का भी मत यही है।

३—डाक्टर भाऊ दाजी महाशयका मत है कि मातृगुप्तका ही नामान्तर कालिदास था, जिसे उज्जयिनीनरेश हर्षविक्रमादित्यने काश्मीरका शासक वनाकर भेजा था। इसका समय छठी शताब्दी है।

४—डाक्टर मैक्डोनल्ड महाशयके मतमें कालिदास ५ वीं सदीके थे, क्योंकि वत्सभट्टिका शिलालेख मिला है जिस पर ५२९ मालवसम्वत् (ईशवी ४७३) खुदा है। उस शिलालेखकी भाषा कालिदासकी भाषासे अधिक मिलती है।

५—डाक्टर हार्नले प्रभृति पण्डितोंकी रायमें कालिदासका समय ५ वीं या ६ ठी शताब्दी है। उन लोगोंने कालिदासको गुप्तवशीय राजोंका आभारी माना है और कालिदासकी कविताओंमें 'गोप्त्रे' 'गोप्ता' 'गुप्त' 'कुमार' 'स्कन्द' आदि शब्दोंसे गुप्तवंशी राजोंकी ही ध्वनि मानी है।

६—श्रीयुत ए. सी. चटर्जीका मत है कि कालिदास मालवनरेश यशोधर्माके कालमें थे, अतः उनका समय ईशवी छठी सदी है।

७—पण्डित रामचन्द्र विनायक पटवर्धन महाशयने 'आषाढस्य प्रथमदिवसे' 'प्रत्या-

सन्ने नभसि' इत्यादि पदोंके आधार पर ज्यौतिष की गणना करके सिद्ध किया है कि कालिदासको पैदा हुए १८०० वर्षोंसे अधिक ही हुए हैं।

८—आर. कृष्णमाचारियर महोदयने 'मेघसन्देशविमर्श' नामक अपने ग्रन्थमें लिखा है कि दिङ्नागाचार्य कालिदासके समकालिक थे, जैसा कि-'दिङ्नागानां पथि' इस श्लोककी मल्लीनाथीसे प्रतीत होता है, उनका समय ई० छठी सदी है, अतः कालिदासका भी वही समय हुआ।

९—महामहोपाध्याय रामावतार शर्माने लिखा है कि कालिदास द्वितीय चन्द्रगुप्तके समयमें (३७५ ई० से ४५० ई० तक) थे, इस मतको अधिक प्रमाणयुक्त मानकर उन्होंने स्वीकार किया है। यह सँक्षिप्त विवरण है जिन्हें इस विषयमें अधिक जानना हो वे कृपया निम्नलिखित पुस्तकें देखें:—

1. History of Sanskrit Classics by Krishnamachariar
२. संस्कृतसाहित्यका इतिहास (श्रीसीताराम जयराम जोशी)
३. " " (बलदेव उपाध्याय)
४. संस्कृत कविचर्चा-( " )
५. कालिदास (आचार्य महावीरप्रसाद द्विवेदी)
६. कालिदास (राजेन्द्रनाथदेव शर्मा, कलकत्ता)
७. भारतीयमितिवृत्तम् (म० म० प. रामावतार शर्मा) इत्यादि।

कालिदास काश्मीरके निवासी थे, क्योंकि उन्होंने हिमालय अलकाके वर्णनमें प्रत्यक्षदृष्ट वस्तुओंके वर्णनका दर्शन कराया है, इसके अलावा मेघको जो मार्ग उन्होंने अलका जानेके लिये बताया है उससे भी ज्ञात होता है कि उनका वासस्थान काश्मीर था। यदि वे काश्मीरके न होकर किसी और उष्ण स्थानके वासी होते तो अपने नाटकोंमें वारवार ग्रीष्म ऋतुका वर्णन न करके किसी और ऋतुका वर्णन करते इससे भी मालूम होता है कि उनका स्थान काश्मीर ही था। सबसे बड़ा प्रमाण यह है कि विह्लणने अपने विक्रमाङ्कदेव चरितमें लिखा है कि—

सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कविताविलासाः।
न शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः॥

यदि कालिदास काश्मीरके न होकर किसी और भूभागके होते तो यह गर्वोक्ति नहीं निकलती।

कालिदासका दृष्टिकोण यद्यपि उदार था, उन्होनें सनातन धर्मानुमोदित सभी देवी देवताओंका आदर किया है, तथापि प्रधानतः वह शैव थे, जैसा कि उनके तीनों नाटकों और रघुवंशके मङ्गलाचरणको देखनेसे ज्ञात होता है। मेघदूतमें 'महाकाल मन्दिर' के वर्णनका भी यही स्वारस्य है।

कालिदास इस नामसे बहुतसे कवियोंने ग्रन्थ लिखे हैं ज्योतिर्विदाभरण, श्रुतबोध द्वात्रिंशत् पुत्तलिका; पुष्पबाणविलास, नलोदय, कामकला, रघुवंश, कुमारसम्भव, मेघदूत, मालविकाग्निमित्र, ऋतुसंहार, अभिज्ञान शाकुन्तल, विक्रमोर्वशी; इतने ग्रन्थ कालिदासके नाम पर चलते हैं परन्तु ये सभी ग्रन्थ किसी एक कालिदास के बनाये नहीं हैं । तीन कालिदास तो पुराने हो गये हैं हीं, जैसा कि कहा है—

"एकोऽपि जीयते हन्त कालिदासो न केनचित् । शृंगारे ललितोद्गारे कालिदासत्रयी किमु" हो सकता है और चौथे पांचवें कालिदास पैदा हुये हों, । संक्षेपमें मालविाकाग्निमित्र, अभिज्ञान शाकुन्तल, विक्रमोर्वशी ( यह तीन नाटक ) मेघदूत, ( खण्ड काव्य ) कुमारसंभव तथा रघुवंश ( दो महाकाव्य ) यही छः ग्रन्थ प्रधान कलिदासकृत हैं । वंगदेशीय विद्वान् ऋतुसंहारको भी प्रधान कालिदासकी रचना मानते हैं ।

# मालविकाग्निमित्र-कथासार ।

ईशवी सदीसे कुछ पूर्व विदिशामें अग्निमित्र नामके एक राजा थे । उनकी धारिणी और इरावती दो रानियां थीं । विदर्भके राजा माधवसेन भी अपनी छोटी वहन मालविकाका विवाह अग्निमित्रसे कराना चाहते थे और शीघ्र ही इसकार्यके लिये अग्निमित्रसे मिलना चाहते थे । माधवसेनके चचेरे भाई यज्ञसेन भी वहीं राजा थे । वे अग्निमित्रसे वैर रखते थे । माधवसेनके साथ भी उनकी अनवन हुई और उन्होंने माधवसेनको राज्यच्युत करके वन्दी वना लिया । उनके मन्त्रीने स्वामीकी इच्छा पूर्त्तिके लिये मालविकाको अग्निमित्रके पास पहुंचा देना चाहा । तदनुसार वह मालविका और अपनी वहन कौशिकीको साथ लेकर राजधानीसे वाहर आकर बिदिशायात्रिदल में सम्मिलित होगया । रास्ता चलनेसे श्रान्त होकर उन लोगोंने एक जङ्गलमें डेरा डाला । वहां दस्युओंने आक्रमण करके उन्हें तितर वितर कर दिया, माधवसेनके मन्त्री सुमति उस युद्धमें मारे गये । उनकी वहन कौशिकी मूर्च्छित होगई, कुछ देरके वाद चेतना आनेपर उसने मालविकाको नहीं देखा । शोकाभिभूत होकर भाईकी अग्निक्रिया करनेके बाद विदिशामें आकर कौशिकीने संन्यास ग्रहण करलिया । कालक्रमसे उसका प्रवेश अग्निमित्रके अन्तःपुरमें हुआ, और वह रानी धारिणी की कृपासे वहीं सम्मानित होकर जीवन व्यतीत करने लगी। इधर दस्युओंने मालविका को वन्दी वनाकर उपहार रूपमें वीरसेन नामक धारिणीके भाई और अग्निमित्रके सीमान्त रक्षकको समर्पित कर दिया । वीरसेनने देखा कि मालविकाको सङ्गीतकी रुचि है इस लिये उसे अपनी वहन धारिणी देवीके पास इस संवादके साथ भेजदिया कि इसे संगीत तथा अभिनयकी शिक्षा दिलाई जाय । धारिणी देवीने भी मालविका की कलापटुतासे प्रसन्न हो कर उसे नाट्याचार्य गणदाससे शिक्षा प्राप्त करनेकी समुचित व्यवस्था कर दी । कौशिकीने मालविकाको देखा, और पहचाना भी, परन्तु विशेष कारणवश उसका परिचय किसी को नहीं दिया ।

एक दिन धारिणीने अपना एक चित्र वनवाया, जिसमें उसके परिजनके रूपमें मालविकाका भी चित्रण किया गया था, वह चित्र रंगा गया था ही कि चित्रशालामें बैठी धारिणी उस चित्रको देख रही थी, पीछे से आकर राजा वहाँ खड़े हो गये । चित्रमें एक अपरिचित सुन्दर तरुणीको देखकर राजाने उत्सुकभावसे

उसके विषयमें पूछना प्रारम्भ किया। रानीने जानबूझकर उत्तर नहीं दिया। वहीं कुमारी वसुलक्ष्मी भी थी, बालसुलभ चञ्चलतासे उसने कहा— इसका नाम मालविका है। राजाद्वारा किये गये कुतूहलप्रश्नोंसे उनकी उत्सुकताका अनुमान करके रानीके हृदयमें खटका पैदा हो गया और मालविका को राजा की नजरसे बचाए रखने की व्यवस्था कर ली गई। चित्रमें मालविकाको देखकर राजा उसकी रूपमाधुरी पर मोहित हो गये, उन्होंने अपने विदूषकसे अपनी मनोदशा बता दी और मालविकाको दिखा देने तथा उसे मिलाकर संगम करा देनेके लिए उपाय करनेको कहा। विदूषकने उस दरबारके दोनों नाट्याचार्य गणदास तथा हरदत्तमें झूठी अफवाहें फैलाकर विरोधका वातावरण पैदा कर दिया। उन लोगोंने राजासे यह निर्णय कर देनेको कहा कि उनमें कौन विशेष-जानकारी रखता है। राजाने इसमें कौशिकीको मध्यस्थ बनाया, कौशिकीने राजासे भी मध्यस्थमें रहनेको कहा। किस आधार पर विशेषज्ञता निर्धारितकी जाय इस प्रसङ्गमें कौशिकीने निर्णय दिया कि – दोनों आचार्य अपनी २ शिष्याओंको स्वाभाविक वेशमें छलिक अभिनय प्रदर्शित करनेको कहें, जिसकी शिष्या प्रथम होगी वह विशेषज्ञ माना जायगा। दोनों आचार्य इस बात पर राजी हुए। विदूषकका प्रथम उपाय सफल रहा। धारिणीने बहुत प्रयत्न किया कि यह बात किसी तरह दब जाय, प्रदर्शन न हो, लेकिन सभी मिले हुए थे, उसे हताश होना पड़ा। प्रदर्शन होना निश्चित हो गया और रङ्गशालामें साजबाज ठीक किये जाने लगे।



## ( द्वितीय अङ्क )

वृद्ध होनेके कारण गणदासको पहले प्रयोग दिखाने का अवसर दिया गया, राजा, धारिणी, कौशिकी, विदूषक और परिजन सभी उपस्थित थे। राजा मालविकाको देखने के लिये अधीर हो रहे थे, पर्दा उठनेपर मालविका सीधे सादे वेशमें सामने आई। उसके लावण्यने राजाको चकित कर दिया। अब तक उनकी धारणा थी कि चित्रगत मालविकाकी छवि चित्रकारकी कुशलता प्रसूत है, वह इतनी सुन्दरी नहीं होगी, किन्तु साक्षात् मालविकाको देखकर उन्होंने स्थिर किया कि चित्रकार मालविकाके रूपको सम्पूर्णभावसे चित्रमें नहीं लासका है, यह चित्रसे कहीं अधिक सुन्दरी है। नृत्य प्रारम्भ हुआ। शर्मिष्ठाप्रवर्त्तित चतुष्पद संगीतमें भावप्रदर्शन द्वारा मालविकाने राजाके प्रति आत्मनिवेदन किया। राजा मन्त्रमुग्धकी तरह देखते रहे। नृत्य समाप्त हुआ। हरदत्तको यह कह कर टरका दिया कि आपका प्रयोग फिर कभी देखा जायगा, 'अभी भोजनका समय

उपस्थित है। सब लोग भोजन आदिके लिये उठकर चले गये। राजाने विदूषकसे कहा—वयस्य, सचमुच यह बड़ा ही सुन्दरी है, विधातामें सौन्दर्यसृष्टिकी जितनी क्षमता थी वह सब इसमें लगादी गई है। अब तुम शीघ्र ऐसा उपाय करो जिससे इसके साथ मेरा मिलन हो जाय। राजाकी विरहवेदना दिनानुदिन बढ़ती गई, वह बराबर उसीके मिलनकी चिन्तामें रहने लगा। विदूषकने राजाके कथनानुसार राजाकी स्थितिसे बकुलावलिकाको अवगत कराया, वह मालविकाकी सखी तथा स्नेहपात्री थी।



## ( तृतीय अङ्क )

अग्निमित्रके अन्तःपुरकी चाहारदिवारीमें रमणियोंके सुखविहारार्थ एक बाग लगाया गया था, जिसका नाम प्रमदवन था। उसमें 'धारिणी'द्वारा लालित एक अशोकवृक्ष था, उसके पत्ते सुनहले रंग के थे, इसीसे उसका नाम तपनीयाशोक रखा गया था। उसके दोहदके लिये किसी तरुणीको उसपर नूपुरयुक्त चरणों-से प्रहार करना था। धारिणीके पैर में पीड़ा थी, अतः उन्होंने मालविकाको यह कहकर उस कार्यके लिये भेजा कि 'यदि पांच रात्रिके बीच इस अशोकवृक्षके फूल निकल आये तो तुम्हारा मनोरथ पूर्ण कर दूंगी'। मालविका अपनी सखी बकुलावलिकाको साथ लेकर प्रमदवन पहुँची, बकुलावलिकाने उसके चरणोंको रंगकर नूपुर पहनाया, अशोकके दोहद पूरे हुए। इसी समय घूमते घामते राजा वहां पहुँच गये। उनके वहाँ पहुँचनेसे पहले ही बकुलावलिकाने राजाका अभिप्राय मालविकाको वताया। राजाने स्वयं भी अपना अनुराग प्रकट किया। उसके और बकुलावलिकाके बीच जो बातचीत हुई थी, उससे राजाको मालविकाकी मानसिक-स्थितिका पता चल गया था। उन्होंने प्रकट शब्दोंमें प्रणय याचना की। जिस समय राजा, मालविका और बकुलावलिकाके बीच बातें हो रही थीं, उसी समय कार्यान्तरसे राजाको ढूंढ़ती हुई राजाकी द्वितीय पत्नी इरावती वहाँ आ गई, उसके आनेसे इस प्रणयवार्ताका रंग उतर गया। पर तुरंत राजाने अपने को सम्हालते हुए इरावती से कहा—देवि! तुम्हारा ही अन्वेषण करता हुआ मैं यहाँ आया और ( देर से ) तुम्हारी प्रतीक्षा कर रहा था किन्तु जब तक तुम नहीं आ रही थी तब तक इससे बातें करके मैं अपना दिल बहला रहा था। इन बातोंका इरावती पर कुछ असर नहीं हुआ, वह क्रोधमें भरी राजाकी उपेक्षा करके वहाँ से चली गई। जाने के पहले वह बकुलावलिकाको भी फटकार सुना गई। इरावती इस बातकी उपेक्षा नहीं करना चाहती थी, वह धारिणीके यहाँ जाकर राजाके इस अविनयकी सूचना कुछ विस्तार के साथ दे आई। इस बात के सुनने से धारिणीको भी इरावती की बात रखनेके लिये कठोर व्यवस्था

करनी पड़ी । मालविका और बकुलावलिकाको कारावास की सजा दी गई। उनकी रखवाली के लिये धारिणीने अपनी एक विश्वासभाजन परिचारिकाको वहाँ बैठा दिया और उसको आज्ञा देदी कि विना धारिणी की मुहर देखे उन दोनों कैदियों को किसी प्रकार मुक्त न करे ।



( चतुर्थ अङ्क )

मालविका तथा बकुलावलिकाके कारावाससे राजाको बड़ा खेद हुआ। उनके खेद तथा प्रार्थनासे परवश होकर विदूषकने एक उपाय सोचा और तदनुसार राजा को धारिणीके पास उनकी खबर लेने के लिये भेजा। इधर विदूषकने एक तिकड़म उपस्थित किया। उसने अपने हाथ में केतकी कण्टक से सर्पदंशन का दाग़ बना लिया और मिथ्या सर्पदंशन की बात फैलाकर सबको चिन्तित कर दिया। उसने यह प्रचार किया कि रानी को सलामीमें देनेके लिये मैं फूल लेने गया था कि मुझे कालासर्पने काट लिया। रानीको इससे बड़ी चिन्ता होने लगी कि संयोगवश अगर इस सर्पदंशनसे इसके प्राण गये तो यह ब्रह्महत्या कलङ्क मेरे ही मत्थे चढ़ेगा। विदूषक विषवेग वाले जनका स्वांग बनाकर दरबारमें उपस्थित हुआ जहाँ राजा, रानी और कौशिकी वगैरह उपस्थित थे। विदूषकने विषवेगका ऐसा प्रदर्शन किया कि सभी चिन्तित हो उठे। राजाने विदूषककी विषचिकित्साके लिये अपने वैद्य ध्रुवसिद्धिको आदेश भेजा, विदूषक ध्रुवसिद्धि के पास गया। ध्रुवसिद्धिने उसकी चिकित्सामें 'नागमुद्रा' की आवश्यकता बताई । सभी के सामने एक ब्राह्मणके जीवन का प्रश्न था। किसी को कुछ सोचने का अवसर नहीं था। धारिणी के पास नागमुद्रावाली अंगूठी थी, रानी ने तत्क्षण वह अंगूठी जयसेना को दे दी। अंगूठी देखते ही विदूषकका कृत्रिम विषवेग उतर गया। उसने वही अंगूठी दिखाकर मालविका और बकुलावलिकाको कारावाससे मुक्त कराया। वहाँ की रक्षिकासे कहदिया कि राजाकी कुण्डली देखकर दैवज्ञोंने बताया कि ग्रहस्थिति कुछ मन्द है, इसीलिये उसके शान्त्यर्थ सभी वन्दी जन छोड़े जा रहे हैं। देवी ने केवल इरावती का दिल रखने के लिये अपनी परिचारिकाको नहीं भेजकर मुझे भेजा है जिससे इरावतीको यही मालूम हो कि राजा छोड़ रहे हैं इसमें देवीका कोइ हाथ नहीं है । संकेतानुसार—राजा, विदूषक, मालविका और बकुलावलिका—सभी समुद्रगृहमें मिले। मालविका और राजा दोनों एक दूसरे से दिलखोलकर मिले, मालविकाने देवीका भयमात्र अपने मिलनका प्रतिबन्धक बताकर आत्मनिवेदन कर दिया। विदूषक और बकुलावलिका आसपास छिपे बैठे रहे। यह प्रणयलीला चल ही रही थी कि इरावती फिर वहाँ आ गई,

उसके साथ उसकी परिचारिका निपुणिका भी थी। समुद्रगृहके दरवाजे पर बैठा विदूषक स्वप्न में बक रहा था—मालविके, राजप्रियाहोओ, इरावतीको राजप्रणयसे जीत लो' इत्यादि। निपुणिकाको यह अप्रियलगा, उसने वहीं का कोई कुटिल काष्ठदण्ड उठाकर विदूषकके ऊपर चला दिया, जिससे विदूषकको पुनः सर्पभय हो आया, राजा विदूषक की सभय आवाज पर बाहर निकले, स्नेहाधीन मालविका भी उनके पीछे थी, बकुलावलिका भी वहाँ आ गई। इरावती इस दृश्य को देखकर तमक उठी, उसने एक एक को फटकारें सुनाई। राजाने कितना समझाया कि इसमें कुछ और बात नहीं है, केवल कारामुक्ति की कृतज्ञता सूचित करने के लिये यह यहाँ मेरे पास आई है। बकुलावलिका के ऊपर इरावती बहुत बिगड़ी, क्योंकि इरावती की धारणा थी कि इन फसाद की जड़ बकुलावलिका ही है। बकुलावलिका ने भी कह दिया कि जब राजा ही आकृष्ट हो रहे हैं तब इसमें मेरा क्या दोष है। सभी स्तम्भित भाव में खड़े रहे, इरावती क्रोध में भरी थी, राजा उसे प्रसन्न करने की चेष्टा कर रहे थे, लेकिन वह क्यों मानती। उसने अपनी परिचारिका से कहा, जाकर देवी से कह दे—'आपका पक्षपात देखा गया, अब हमारे हृदय में विश्वास हो गया कि आपने जानकर इन लोगों को मिलाने का प्रयत्न किया है'। इस संवाद से सभी चिन्ता में पड़ गये, क्योंकि धारिणी इसे पाकर बिगड़ उठेंगी, तब तो यह कार्य और सविघ्न हो जायगा। इसी समय अन्तःपुर की ओर से एक दासी दौड़ती हुई वहाँ आकर कहने लगी—'पिङ्गल वानर ने कुमारी वसुलक्ष्मी को इस तरह डरा दिया है कि उनकी घिग्घी बँध गई है। महारानी गोद में रखकर आश्वासन दे रही हैं फिर भी उन्हें होश नहीं हो रहा है।' राजाने सुनते ही कहा—चलो, मैं होश कराता हूँ। इधर यह खबर फैलने लगी कि तपनीयाशोक में फूल लग गये हैं। मालविका को इस पर कुछ आशा बंधी। बकुलावलिकाने भी कहा—देवी सत्यप्रतिज्ञ है, वह आपके मनोरथ अवश्य पूर्ण करेंगी।



## ( पञ्चम अङ्क )

राजाके पास विदर्भ से सूचना आई कि सैनिकों ने यज्ञसेन को परास्त करके माधवसेन को बन्दीगृहसे मुक्तकर आधे राज्य पर अधिकार करा दिया है। वन्दियों चारणोंने राजाकी स्तुति की। राजा और विदूषक तपनीयाशोक की कुसुम समृद्धि देखने के लिये प्रमदवन चले गये। धारिणी ने मालविकाको प्रसाधन निपुण कौशिकी की सहायता से वैवाहिक वेश से अलंकृत करके उसे, पण्डित कौशिकी और परिजन को साथ लेकर प्रमदवन में वर्त्तमान राजा का दर्शन किये। विदूषक ने इस साज सज्जा को देखकर राजा से कहा—आपके मनोरथ अब पूरे होंगे। इसी

समय अग्निमित्र के पिता पुष्यमित्रने, जो उन दिनों अश्वमेध यज्ञ में दीक्षित थे, दूत के साथ एक पत्र भेजा जिसमें यह सूचना थी कि 'कुमार वसुमित्र ने यज्ञाश्व की रक्षा में बड़ी बहादुरी दिखाई है, समुद्र के किनारे यवन सैनिकों ने उस अश्व को घेर लिया था किन्तु धनुर्धर वसुमित्र ने सबको परास्त कर यज्ञको निर्विघ्न बना दिया है। आप सपरिवार यज्ञ में सम्मिलित हों'। पुत्रविजय वार्त्ता से रानी को बड़ा आनन्द हुआ। इसकी सूचना तत्काल अन्तःपुर में दी गई और अन्य रानियोंने भी संवाद देने वाली दासी को पुरस्कार दिये। अनन्तर धारिणीने राजा से कहा—आपने भी प्रिय संवाद सुनाया है अतः अनुरूप पारितोषिक को स्वीकार करें। इसी समय माधवसेन द्वारा उपहार स्वरूप भेजी गई दो शिल्पिकायें वहाँ हाजिर की गईं। उन बालिकाओं ने मालविका को देखकर आश्चर्य प्रकट किया, और बरबस उनके मुखसे यह शब्द निकल पड़े—'यह तो राजकुमारी हैं' उन बालिकाओं देखकर पूर्व परिचयवश मालविकाकी आँखों से आंसू निकल पड़े। बालिकाओंने रूपपरिवर्त्तन हो जाने पर भी स्वर से कौशिकी को पहचान लिया। इस पर आश्चर्यित होकर राजा ने जिज्ञासा प्रकट की तदनुसार कुछ बालिकाओं ने और शेषांश में कौशिकी ने मालविका का कुलक्रम, यहाँ आना, प्रभृति वृत्तान्त कह सुनाया, जिससे प्रमाणित हुआ कि मालविका राजकुमारी है। सभी को बड़ी खुशी हुई, किन्तु मालविका को चिन्ता होने लगी कि कहीं ऐसा न हो कि राजा मुझे सत्कृत करके भैया के पास भेज दें। इधर धारिणी ने कौशिकी से पूछा—इतने दिनों तक आपने मालविका का परिचय न देकर उसका मेरे द्वारा जो अपमान कराया सो क्या उचित हुआ ?, कौशिकी ने इसका उत्तर दिया—यह जानबूझ कर ही किया गया है, आप सुनें—'जिस समय मालविका के पिता भी जीवित थे उसी समय तीर्थ यात्रा में आये हुए एक सिद्ध पुरुष ने कहा था कि 'मालविका' एक वर्ष तक दासी का कार्य करके अपने योग्य पुरुष के साथ ब्याही जा सकेगी'। यहाँ आपके आश्रय में मैने देखा कि वह अनायास पूरा हो रहा है, इसलिये मैं चुप रही। अगर मैं उस समय इसका परिचय दे देती तो इसे वह विधिविधान किसी और जगह भोगना पड़ता, जो अच्छा नहीं होता। इसके बाद धारिणी ने इरावती की भी अनुमति से कौशिकी को पूछ कर राजा से कहा—आप पूर्वोक्त पारितोषिक में मालविका को स्वीकार करें। राजा ने कहा—जब आप इसे स्वतुल्यमान कर देवी शब्द दे रही हैं और घूंघट दी हैं, तो मैं आपकी इस आज्ञा को स्वीकर करता हूँ।

समाप्त।

—+—

# पात्रपरिचयः



| | |
|---|---|
| **पुरुषाः—** | |
| सूत्रधारः— | नाटकोद्बोधकः। |
| पारिपार्श्विकः— | सूत्रधारस्य सहचरः। |
| गणदासः— | नाट्याचार्यः। |
| अग्निमित्रः— | नायको विदिशाधिपतिश्च। |
| वाहकः— | अग्निमित्रस्य मन्त्री। |
| गौतमः— | विदूषकः। |
| मौद्गल्यः— | कञ्चुकी। |
| हरदत्तः— | अपरो नाट्याचार्यः। |
| सारसः— | कुब्जोऽन्तःपुरस्थपरिचारकविशेषः। |
| वैतालिकौ— | स्तुतिपाठकौ। |
| परिवाराः— | राज्ञः पार्श्वचराः। |
| **स्त्रियः—** | |
| बकुलावलिका— | राज्या धारिण्याश्चेटी मालविकायाश्च वयस्या। |
| कौमुदिया— | अपरा चेटी। |
| पण्डितकौशिकी— | काचित् परिव्राजिका (माधवसेनाख्यविदर्भाधिपामात्यस्य सुमतेर्भगिनी) |
| धारिणी— | अग्निमित्रस्य पट्टराज्ञी। |
| मालविका— | विदर्भाधिपमाधवसेनस्यानुजा नायिका च। |
| समाहितिका— | पण्डितकौशिक्याः परिचारिका। |
| मधुकरिका— | उद्यानपालिका। |
| इरावती— | अग्निमित्रस्य द्वितीया स्त्री। |
| निपुणिका— | इरावत्याश्चेटी। |
| जयसेना— | प्रतीहारी। |
| रमणीया— ज्योत्स्निका— | विदर्भाधिपतेर्माधवसेनस्य शिल्पिन्यौ परिचारिके। |
| परिवाराः— | राज्याः पार्श्वचारिण्यः। |



# श्लोकानामकारादिक्रमसूची



# मालविकाग्निमित्रम्

## 'प्रकाश' नामकसंस्कृत–हिन्दीटीकाद्वयोपेतम्

## प्रथमोऽङ्कः

एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः

---

यस्मिन्नुद्धततताण्डवव्यसनिनि त्रुट्यन्नभोबन्धन-
भ्रान्तिं तन्निटिलस्थलाद्विगलिता भीमा भुजङ्गा व्यधुः ।
गङ्गावारिपृषन्ति भानि पतितानीव व्यभुर्मौलगो
वह्निः कालहुताशवद्विमृशे पायात्स नो धूर्जटिः ॥ १ ॥
प्रणयकुपितराधाऽऽराधनायाञ्जलिर्यद् व्यरचि चिरमुदीतं तत्स्मितं तेन सद्यः ।
अकलिकलितमुक्ताभूषणोरःस्थलो यः समुदयतु स चित्तव्योम्नि मे कृष्णचन्द्रः ॥ २ ॥
श्रद्धानतेन शिरसा पितरं 'मधुसूदनम्' ।
प्रसूं 'जयमणिं' चाहं ध्यायामि हृदि सन्ततम् ॥ ३ ॥
श्रीकालिदासकविताभावानवबोधबद्धवैमुख्यान् ।
मन्ये कतिचन बालान् प्रोत्साहयिता 'प्रकाशो'ऽयम् ॥ ४ ॥
सन्तो गुणेन तुष्यन्ति सनैकान्तेन दुर्लभः ।
दोषाविलेऽपि तेनात्र दृक्पातः क्रियतां वुधैः ॥ ५ ॥

नाटकप्रणयनप्रधानाचार्यतया सरस्वतीवरपुत्रतया च प्रथितः कालिदासमहाकविर्ललितकथं मालविकाग्निमित्रं नाम नाटकरत्नं प्रणिनीषुः प्रारम्भे तस्य चिकीर्षितग्रन्थसमाप्ति–तत्सानन्दाभिनयसम्पत्ति–विद्वत्समुदयप्रतिपत्तिप्रतिबन्धिदुरितत्रयसाधनं मङ्गलमाचरन् सामाजिकजनानामप्यानुषङ्गिकमङ्गलसिद्धयेऽत्र निबध्नाति–'एकैश्वर्ये'

---

प्रणतजनोंके लिये अभिमतफलप्रद, अद्वितीय ऐश्वर्यसे युक्त रहते हुए भी जो सदा

कान्तासंमिश्रदेहोऽप्यविषयमनसां यः परस्ताद्यतीनाम् ।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥ १ ॥

इति । प्रणतानां कृतनमस्काराणाम् बहूनि अपरिमितानि फलानि धनसुतस्वर्गादीनि यस्मात्तादृशे तथोक्ते । यद्वा प्रणतानि स्वयमुपनतानि बहूनि मनसाप्यविभाव्यानि फलानि अणिमादिसिद्धयो यत्र तादृशे, एकञ्च तदैश्वर्यम् एकैश्वर्यन्तत्र असाधारणप्रभुत्वे सजातीयद्वितीयशून्येश्वरत्वे इत्यर्थः, स्थितः स्वभावतो वर्त्तमानः अपि ( नतु केनापि देवान्तरेणानुगृह्य स्थापितः ) यः सदा सर्वदा ( नतु कस्याश्चित् क्रियायाः साधनकालमात्रे ) कृत्तिः व्याघ्रचर्म वासः वसनं यस्य तादृशः । एतेन स्वेच्छापरिगृहीतव्याघ्रचर्मताप्रतिपादनेन किमप्यलौकिकत्वमुक्तम् । कान्तया रमण्या ( नतु केवलया स्त्रिया ) गौर्या सम्मिश्रः अर्धभागेन सम्मिलितः देहः समग्रं शरीरं यस्य सः तथोक्तः ( नतु कुत्राप्यंशे स्पृष्टमात्रः ) अपि, विषिण्वन्ति बध्नन्ति ( षिञ् बन्धने ) स्वेन रूपेण निरूपणीयं कुर्वन्तीति विषयाः शब्दस्पर्शादयो वेद्याः, ( तत्कृतः समग्रोऽपि भोग्यप्रपञ्चोऽत्र विषयपदेनाभिधित्सितो बोध्यः ) न विद्यन्ते विषया अभिलषणीयपदार्था यत्र तानि अविषयाणि विषयनिरपेक्षाणि मनांसि हृदयानि येषां तेषामविषयमनसां यतीनाम् संयमिनाम् परस्तात् श्रेष्ठतमः । 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' इत्यस्तातिप्रत्ययः । अष्टाभिः अष्टसङ्ख्यकाभिः तनुभिः मूर्त्तिभिः ( पृथिवीजलशिखिवायुवियद्यजमानेन्दुसूर्यरूपाभिः ) कृत्स्नं समस्तम् स्थावरजङ्गमात्मकं विनाशधर्मभुवनम् बिभ्रतः धारयतः पोषयतो वा अपि यस्य अभिमानः अहङ्कारः कृत्स्नजगद्धारणगर्वो न (नतु कतिपयजनधारणपोषणादिभिरस्य न गर्वः) स ईशः परमेश्वरो वः युष्माकम् सामाजिकानाम् सन्मार्गालोकनाय मोक्षोपायभूतयमनियमादियोगाङ्गादेरालोकनाय तामसीं तमोगुणजाताम् वृत्तिं चेतोवृत्तिम् ( अज्ञानात्मिकाम् ) व्यपनयतु दूरीकरोतु । उपनतबहुसम्पदि परमैश्वर्ये वर्त्तमानोऽपि यो व्याघ्रचर्माम्बरः, रमणीगणभूषाभूतया गौर्याऽर्धनारीश्वरत्वं गमितोपि यो विषयवि-

---

व्याघ्रचर्माम्बर रहते हैं, रमणीरत्न गौरीसे नित्यसम्बद्ध रहकर भी जो संयमियोंके अग्रणी गिने जाते हैं, अपनी आठो मूर्त्तियोंके द्वारा सम्पूर्ण जगत्‌के भरण-पोषण करने पर भी जिनको अहङ्कार नहीं होता है, ऐसे ईश—महादेव, सन्मार्गमें प्रवृत्ति हो, एतदर्थ आपलोगोंकी तामस वृत्तिको दूर करें ॥ १ ॥

( नान्द्यन्ते । )

मुखजनाग्रगण्यः, यस्य धरण्यादिभिरष्टाभिः स्वमूर्त्तिभिरखिलां भुवं बिभ्रतोऽपि नाहङ्कार-लेशश्च, सः शिवो वः पारमार्थिकज्ञानोद्भवाय तमः शमयत्विति भावः । अत्रत्य-विशेषणेषु विरोधेनेश्वरस्य लोकातिगत्वमुक्तम् । 'ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते' इत्यमरः । शिवस्यार्धनारीश्वरत्वमुक्तं तन्त्रसारे—

'अर्धाम्बिकेशमनिशं प्रविभक्तभूषं बालेन्दुबद्धमुकुटं प्रणमामि रूपम्' । इति । तस्य मूर्त्तयोष्टावुक्तास्तोडलतन्त्रे—

'क्षितिं जलं तथाचाग्निं वायुञ्चाकाशमेव च ।
यजमानं तथा सोमं सूर्यञ्च मूर्त्तिना सह' ॥ पूजयेदिति शेषः ।

विष्णुपुराणे—'सूर्यो जलं मही वायुर्वह्निराकाशमेव च ।
दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः स्मृताः' ॥

भुवनेश्वरीस्तोत्रे रुद्रयामलेऽपि—'पृथ्व्या जलेन शिखिना मरुताऽम्बरेण होत्रे-न्दुना दिनकरेण च मूर्त्तिभाजः । देवस्य मन्मथरिपोरपि'······इत्यादि ।

अत्र प्रणतबहुफले एकैश्वर्यस्थित्या कान्तासम्मिश्रदेहत्वेन जगद्भरणेन च समृद्धो धीरललितः प्रजापालनपटुश्च कश्चिद्राजाऽस्मिन्नाटके वर्ण्य इति सूच्यते । सन्मार्गालोकनायेत्यनेन चात्र कश्चिन्मार्गाभिनयः प्रतिपाद्यते इति प्रतीयते । अस्ति हि मार्गो नाम नाट्यविशेषः, तथाचोक्तम्—

'मार्गोऽपि देशी तद्भेदः कथितो नाट्यवेदिभिः ।
अत्र मार्गो भवेन्नाट्यं नाट्यवेदोक्तलक्षणम्' ॥

एष नान्दीश्लोकः—तल्लक्षणं परिशिष्टे द्रष्टव्यम् । 'यद्यपि 'पदैर्युक्ता द्वादशभि-रष्टाभिर्वा पदैरुत' इति नान्दीविषये श्रूयते । अत्र पदशब्दः श्लोकपादार्थकः सुप्तिङन्तान्यतरवाचको वेति द्वैधम् । उभयथाऽप्यत्र तदभावस्तथाऽपि 'पदादिनियमोऽपि वा' इति प्राचीनोक्तौ वेति विकल्पदर्शनात् पदादिनियमो नानुसृत इति बोध्यम् । विरोधाभासोऽलङ्कारः । स्रग्धरावृत्तम् ॥ १ ॥

अथ प्रस्तावनां निबन्धुमिच्छुस्तदङ्गयोः प्ररोचनामुखयोः प्ररोचनां प्रस्तौति—नान्द्यन्त इति । नन्दयति आनन्दयति स्तवेन देवादीन् आशीर्वादेन सभ्यादीन् वेति

( नान्दीपाठके बाद )

सूत्रधारः—अलमतिविस्तरेण(नेपथ्याभिमुखमवलोक्य)मारिष, इतस्तावत् ।

नान्दी स्तुत्याशीरन्यतरपरा वाक्, नन्देः पचाद्यजन्तान्नन्दशब्दात् प्रज्ञादित्वात्स्वार्थेऽण्, ततः स्त्रियां ङीप्। तदुक्तं नाट्यप्रदीपे—

'नन्दन्ति काव्यानि कवीन्द्रवर्गाः कुशीलवाः पारिषदाश्च सन्तः ।
यस्मादलं सज्जनसिन्धुहंसी तस्मादियं सा कथितेह नान्दी' ॥

भरतोऽप्याह—'देवद्विजनृपादीनामाशीर्वादपरायणा ।
नन्दन्ति देवता यस्मात्तस्मान्नान्दीति कीर्त्तिता' ॥

अत्र द्वादशपदत्वाष्टपदत्वयोरन्यतरस्य नान्दीस्वरूपेऽपेक्षणीयस्याभावात्कथं लक्षणसमन्वय इति तु मा शङ्कि, 'पदादिनियमोऽपि वा' इति पदादिनियमस्य वैकल्पिकत्वेनानास्थेयत्वात्, सत्याग्रहे तु पदशब्दस्य तालपरत्वं शाकुन्तलव्याख्यायां राघवानन्दमहापात्रैराश्रितमनुसर्त्तव्यम्, ततश्च स्रग्धरायां सप्तमाक्षरेष्वेकैकस्ताल इति प्रतिचरणं तालत्रयेणात्र द्वादशपदतोपपन्ना। तस्या नान्द्या अन्ते अवसाने। अत्र नान्दी श्लोकात्मिका, अतश्च श्लोकचरमवर्णध्वंस इत्यर्थः ।

सूत्रम् अभिनेयसूचनं धारयतीति सूत्रधारः प्रधाननटः । आहेति क्रियापदमध्याहृत्यान्वयः करणीयः। सूत्रधारलक्षणं यथा सङ्गीतसर्वस्वे—

'वर्णनीयतया सूत्रं प्रथमं येन सूच्यते । रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते' ॥

अतिविस्तरेण—भूयसा। (नान्दीप्रयोगेण) अलम्—नास्ति फलमित्यर्थः। एतावतैव नान्दीपाठेन विधेयमङ्गलाचरणस्य कृतत्वादतोऽधिको नान्दीपाठः फलविशेषाजनकतयाऽत्र मा कारीति तात्पर्यम्।

नेपथ्याभिमुखमवलोक्य—वेशरचनार्थमवधारितं प्रदेशं प्रति दृक्पातं कृत्वा। तथाचरणं च तत्र वर्त्तमानस्य पारिपार्श्विकस्यामन्त्रणार्थमामन्त्रणीयपुरुषाध्युषितप्रदेशं विलोक्यैवामन्त्रणस्य लोकपरिप्राप्तत्वादिति बोध्यम्। नेपथ्यपदं तद्रचनास्थानोपलक्षकम्। 'आकल्पवेशौ नेपथ्य'मित्यमरः।

इतस्तावत्—अत्र, आगम्यताम् इति शेषः, रङ्गशालाप्रविश्यतामिति भावः। पारिपार्श्विकस्य मारिषपदेन सूत्रधारः सम्बोधनं करोति, यथोक्तं प्राचा—

'सूत्री नटेन भावेति तेनासौ मारिषेति च'। सूत्री—सूत्रधारः।

---

सूत्रधार—अधिककी आवश्यकता नहीं है। (नेपथ्यकी ओर देखकर) मारिष, इधर आनाजा।

( प्रविश्य । )

पारिपार्श्वकः—भाव, अयमस्मि ।

सूत्रधारः—अभिहितोऽस्मि विद्वत्परिषदा—"कालिदासग्रथितवस्तु मालविकाग्निमित्रं नाम नाटकमस्मिन्वसन्तोत्सवे प्रयोक्तव्यमि"ति । तदारभ्यतां संगीतम् ।

---

परि समन्तात् पार्श्वे सूत्रधारसमीपे चरतीति पारिपार्श्विकः । परिमुखञ्चेति चकाराट्ठक् । पारिपार्श्विकः प्रधाननटान्यतमः । प्रविश्य-सूत्रधारसमीपमागत्येत्यर्थः । भावयति-प्रयोजयति अभिनयमिति भावः विद्वान् । अत्र सूत्रधारे योगरूढोऽयं शब्दः । अयमस्मि—भवदादेशं श्रोतुमुपस्थितोऽस्मीत्यर्थः ।

अभिहितः—उक्तः । विद्वत्परिषदा-पण्डितसभया । अनेन सभाप्रशंसनेन तदादेशस्यानुपेक्षणीयत्वं ध्वनितम् । यद्यपि-'त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः । त्रयश्चाश्रमिणः पूर्वे परिषत्स्याद्दशावरा' इति मनूक्तेः पण्डितसभाया एव परिषत्पदप्रतिपाद्यता प्रतीयते तथापि विशिष्टवाचकानां पदानां सति विशेषणवाचकपदपृथक्समवधाने विशेष्यमात्रपरत्वस्य 'स कीचकैर्मारुतपूर्णरन्ध्रै'रित्याद्यर्थमास्थेयतयात्र परिषत्पदस्य सभामात्रपरत्वमिति नाधिकपदत्वम् । कालिदासग्रथितवस्तु-कालिदासेन तदाख्यया प्रसिद्धेन कविना ग्रथितं गुम्फितं वस्तुकथा यस्मिंस्तत्तथोक्तम् । मालविका नायिकाविशेषः, अग्निमित्रस्तदाख्यो राजा नायकस्तावधिकृत्य कृतं मालविकाग्निमित्रं नाम नाटकम् । 'अधिकृत्य कृते ग्रन्थे' इत्यण् । वसन्तोत्सवे वसन्तागमप्रयोज्ये लोकैराचर्यमाणे प्रसादे । एतेन कालनिर्देशः कृतो वेदितव्यः । प्रयोक्तव्यम्—अभिनीय दर्शयितव्यम् । एतावदभिहित इत्यस्य द्वितीयं कर्म । सङ्गीतकम्—अल्पं सङ्गीतम् । सङ्गीतं तौर्य-त्रिकम् , तथाचोक्तं सङ्गीतरत्नाकरे—

'नृत्तं गीतं तथा वाद्यं त्रयं सङ्गीतमुच्यते ।' इति ।

आरभ्यताम्—प्रयोक्तुं यत्नः क्रियताम् । इह सङ्गीतानुष्ठानञ्च सामाजिकजनमनांसि विषयान्तरेभ्यो निवर्त्त्य स्वविधेयेऽभिनये समासञ्जयितुम् ।

---

**पारिपार्श्वक—( प्रवेश करके ) भाव, मैं यही तो हूँ ।**

**सूत्रधार—इस वसन्तोत्सवमें कालिदासकृत 'मालविकाग्निमित्र' नामक नाटक खेलनेके लिये सभासदोंने मुझे आदेश दिया है ।**

पारिपार्श्वकः—मा तावत्। प्रथितयशसां भाससौमिल्लककविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं बहुमानः।

सूत्रधारः—अयि, विवेकग्रस्तमभिहितम्। पश्य—

पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः॥ २॥

---

मा तावत्—माशब्दो वारणे, तावदिति चावधारणे, मालविकाग्निमित्रं नाम नाटकमभिनेतुं निषेधामीति तदाशयः। 'मास्म माऽलञ्च वारणे'। 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे'। इत्युभयत्राप्यमरः। निषेधे साधकमाह–प्रथितयशसां .विख्यातकीर्त्तीनाम्। भासकविपुत्रसौमिल्लकाद्यप्राचीनाः कवयः, (तत्र भासस्य कृतयः प्रसिद्धा एव प्रतिमानाटकादयः। कविपुत्रसौमिल्लकयोर्ग्रन्थाः सम्प्रति दुर्लभाः) तेषाम् प्रबन्धान्–ग्रन्थान्। अतिक्रम्य–उल्लङ्घ्य परिहृत्येत्यर्थः। कालिदासस्य (वयसा यशसा चावृद्धस्य) कृतौ–क्रियायाम् (अत्र 'कृदभिहितो भावो द्रव्यवत् प्रकाशते' इति कृतावित्यन्तस्य तद्विरचिते नाटक इत्यर्थः)। बहुमानः आदरभूमा। कथम् केन प्रकारेण? प्रसिद्ध्यादेस्तत्प्रयोजकस्याभावादयं प्रश्नः।

विवेकग्रस्तम्—विचारविकलम्। अभिहितम् उक्तम्। प्रसिद्ध्यनुरोधेनानुधावनस्य विवेकदारिद्र्यसूचकत्वादित्थमधिक्षेपः। स्वोक्तमर्थमुपपादयितुमाह—

पुराणमिति। पुराणं सर्वं प्राचीनं काव्यं पुराणमित्येव प्राचीनमितीयन्मात्रेण हेतुना साधु रम्यम् न (भवतीति शेषः) (तथा) सर्वम् नवम् अचिरनिर्मितम् काव्यम् नवमिति कारणेन अवद्यम् निन्दनीयम् इत्यपि च न, युक्तमिति शेषः। पुराणस्यापकर्षदर्शनान्नवस्योत्कर्षदर्शनाच्च पुराणत्वमुत्कर्षसूचकं नवत्वञ्चापकर्षसूचकमिति नास्थेयमिति भावः। नन्वेवं व्यवस्था न स्यादत आह–सन्त इति। सन्तः विद्वांसः परीक्ष्य गुणदोषौ विविच्य अन्यतरत् पुराणत्वनवत्वाननुरोधेन एकतरम्। काव्यं नवम्पुराणं वा यदुत्कृष्टं तदित्याशयः। भजन्ते सेवन्ते रसयन्तीत्यर्थः। एतेन

---

पारिपार्श्वक—ऐसा न कहें। धावक, सौमिल्लकविरत्न आदि प्रसिद्ध कविओंके नाटकोंको छोड़कर नवीन कवि कालिदासकी कृतिपर सभ्योंके अनुरागका क्या कारण हो सकता है?

सूत्रधार—यह तो विवेकदरिद्रता हुई। देखो—

न पुराना होनेसे सब अच्छा हो सकता है, और न नया होनेसे कोई काव्य उपहसनीय होता है। विद्वान्लोग परीक्षा करके उत्तमका ग्रहण करते हैं, दूसरोंके विश्वासके आधारपर राय कायम करना तो मूर्खोंका काम है॥ २॥

पारिपार्श्वकः—आर्यमिश्राः प्रमाणम् ।

सूत्रधारः—तेन हि त्वरतां भवान् ।

शिरसा प्रथमगृहीतामाज्ञामिच्छामि परिषदः कर्तुम् ।

---

विद्वदादरपात्रत्वमेवोत्कृष्टकाव्यत्वे प्रमाणमिति बोध्यम् । मूढः मूर्खः परस्य अन्यस्य प्रत्ययेन ज्ञानेन तत्प्रसूतेन विश्वासेन वा नेया प्राप्या बुद्धिर्यस्य तादृशः, परकीय-सम्मत्यैव स्वसम्मतिव्यवस्थापक इति भावः । एतेन परिषदा समादरदर्शनात् मालविकाग्निमित्रं नाटकं नवमपि सारवदेव मन्तव्यं, तेन चाभिनीतेन सभ्यानां सन्तोषः स्यादेवेति त्वया क्रियमाणस्तदभिनयनिषेधोऽनुचित इति तात्पर्यम् । 'सन् सुधीः कोविदो बुधः' इति 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इतिचामरः । अनेन कवि-काव्यप्रशंसा कृता । उपजातिर्वृत्तम् ॥ २ ॥

आर्यमिश्राः—सभ्यश्रेष्ठाः, (१)प्रमाणम्—निर्णयकारिणः, प्रधानसभ्या यदुत्कृष्टत्वेन स्वीकुर्वते तदेवोत्कृष्टं मन्तव्यमिति भावः । 'महाकुलकुलीनार्यसभ्यसज्जनसाधवः' इति, 'स्यादुत्तरपदे मिश्रस्त्रिषु श्रेष्ठार्थवाचकः' इति चामरः ।

तेन—सभ्यजनानुगृहीततया नवस्यापि कालिदासीयप्रबन्धस्याभिनेयताप्रत्ययेन । त्वरताम्—क्षिप्रकारितां श्रयताम् । भवान्—पारिपार्श्विकः । तत्र हेतुमाह—

शिरसेति । शिरसा मूर्ध्ना प्रथमगृहीतां स्वीकृतपूर्वाम् परिषदः सभायाः आज्ञाम् आदेशम् कालिदासकृतं मालविकाग्निमित्ररूपं रूपकमभिनीयतामित्येवं रूपं शासनम्

---

**पारिपार्श्वक—इस विषयमें सभ्यगण ही प्रमाण हैं ।**

**सूत्रधार—इस लिये शीघ्रता करो—**

**धारिणी देवीके परिचर्या-प्रवीण परिजनोंकी तरह मैंने सभ्योंकी आज्ञा पहले ही**

---

(१)इह प्रमाणशब्दस्याजहल्लिङ्गतया नपुंसकत्वम् । एकवचनं तु वेदाः प्रमाणमित्यत्रेव, ननु नीलाघट इत्यादेः साधुत्ववारणाय विशेष्यविशेषणवाचकपदयोरसति विशेषानुशासने समानवचनकत्वनियमस्य स्वीकर्त्तव्यतया वेदाः प्रमाणमित्यादयः प्रयोगाः कथम् ? इति चेन्न, यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषय-संख्याविरुद्धसंख्याया अविवक्षितत्वं तत्रैव विशेष्यविशेषणपदयोः समानवचनकत्व-नियमस्याङ्गीकारात् । वेदाः प्रमाणमित्यत्र च विशेषणपदोत्तरविभक्त्या बहुत्ववि-रुद्धमेकत्वं विवक्षितं तच्च प्रमितिकरणत्वेऽन्वेति, शाब्दप्रमाकरणत्वं च शाब्दत्वा-वच्छिन्नं यावच्छब्दनिष्ठमेकमेवेति व्युत्पत्तिवादेऽभिहितम् ।

देव्या इव धारिण्याः सेवादक्षः परिजनोऽयम् ॥ ३ ॥

( इति निष्क्रान्तौ । )

इति प्रस्तावना ।



( ततः प्रविशति बकुलावलिका । )

बकुलावलिका—आणत्तम्हि देवीए धारिणीए । अइरप्पउत्तोवदेसं छलिअं णाम णट्टअं अन्दरेण कीरिसी मालविअत्ति णट्टाअरिअं अज्जगणदासं पुच्छिदुं । ता दाव संगीदसालं गच्छम्हि ( इति परिक्रामति । )

---

कर्त्तुम् निर्वर्त्तयितुम् इच्छामि अभिलषामि । 'शिरसा गृहीताम्' इति भक्त्यतिशयद्योतनमुखेन तदादेशपालने समुचितमौत्सुक्यं द्योतयति । तत्रैव कथामवतारयितुमुपमामाह—देव्या इवेति । धारिण्या देव्याः, धारिणी नाम कथानायकस्याग्निमित्रस्य महिषी तस्या आज्ञाम् आदेशम् सेवादक्षः परिचरणनिपुणः अयम् पुरोदृश्यमानः परिजन इव परिचर्याधिकृतदासीसमुदय इव । यथा देव्या धारिण्या आज्ञामयं परिजनः सद्यः सम्पादयितुमिच्छति तथाऽस्याः परिषदः सम्मतमचिरेण निर्वर्त्तयितुमिच्छामि, तत्त्वरस्व तदुपयुक्तेऽनुष्ठान इति भावः ॥ अनेन पात्राक्षेपहेतुः प्रयोगो नाम मुखाङ्गमुक्तम् । उपमाऽलङ्कारः । आर्यावृत्तम् ॥ ३ ॥

प्रस्तावना—प्रस्तावयति अभिनेयमर्थमवतारयति या सा प्रस्तावना । सा चात्र पदावली रूपा । तल्लक्षणं तु परिशिष्टे द्रष्टव्यम् । सा चेयं सादृश्यप्रदर्शनेन पात्रप्रवेशादवलगिताख्या । तदुक्तं दर्पणे—

'यत्रैकत्र समावेशात् कार्यमन्यत् प्रसाध्यते ।
प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधैः' ॥

---

स्वीकार कर ली है, अब उसका पालन कर लेना चाहता हूँ ।

( दोनोंका प्रस्थान )

प्रस्तावना समाप्त ।

( बकुलावलिका का प्रवेश )

बकुलावलिका—देवीकी आज्ञा है कि नाट्याचार्य गणदाससे जाकर पूछो कि छलिक नृत्यमें मालविकाने कैसी प्रगति की है ? इस लिये रङ्गशालाकी ओर चलूं । ( चलती है )

[ आज्ञप्तास्मि देव्या धारिण्या। अचिरप्रवृत्तोपदेशं छलिकं नाम नाट्यमन्तरेण कीदृशी मालविकेति नाट्याचार्यमार्यगणदासं प्रष्टुम्। तत्तावत्संगीतशालां गच्छामि। ]

( ततः प्रविशत्याभरणहस्ता द्वितीया चेटी। )

प्रथमा—( द्वितीयां दृष्ट्वा ) हला कोमुदीए, कुदो दे दाणिं इअं धीरदा। जं समीवेण वि अदिक्कमन्ती इदो दिट्ठिं ण देसि। [ सखि कौमुदिके, कुतस्त इदानीमियं धीरता। यत्समीपेनाप्यतिक्रामन्तीतो दृष्टिं न ददासि। ]

द्वितीया—अम्हो बउलावलिआ। सहि, देवीए इदं सिप्पिसआसादो आणीदं णागमुद्दासणाहं अङ्गुलीअअं सिणिद्धं णिज्झाअन्ती तुह उवालम्भे पडिदम्हि। [ अहो बकुलावलिका। सखि, देव्या इदं शिल्पिसकाशादानीतं नागमुद्रासनाथमङ्गुलीयकं स्निग्धं निध्यायन्ती तवोपालम्भे पतितास्मि। ]

---

आज्ञप्ता—आदिष्टा। देव्या–पट्टराज्ञ्या। धारिण्या–तदाख्यया। अचिरोपनीता–गानमभ्यसितुमबहोः कालात् कृतारम्भा। छलिकनामनाट्यान्तरे–वृषपर्वनामकासुरस्य कन्यया शर्मिष्ठया प्रवर्त्तिते छलिकनामके गीतप्रकारे। उपदेशग्रहणे–शिक्षालाभे। दक्षा–योग्या। नाट्याचार्यम्–नाट्याभिनयशिक्षानियुक्तम्। आर्यगणदासम् सम्मानार्हम् गणदासनामानम्। प्रष्टुम्–जिज्ञासितुम्।

कुतः कस्मात् कारणात्। ते तव। इयम्–पूर्वकालासाधारणी प्रत्यक्षीक्रियमाणा च। धीरता–गम्भीरभावः। अतिक्रामन्ती–अतिक्रम्य उल्लङ्घ्य यथोचितोपचारमपहायासम्भाष्य च मां गच्छन्ती। इतः–मदध्युषितदेशे। मत्समीपादेव गच्छन्त्या त्वया मयि दृष्टिरपि न प्रक्षिप्यत इतीदृशी तव धीरता किं प्रयोज्येति प्रश्नाशयः।

'अम्हो' इति विस्मयसूचकमव्ययम्। देव्याः–धारिण्याः। शिल्पिसकाशात् निर्माणदक्षस्य स्वर्णकारस्य गृहात्। नागमुद्रासनाथम्–सर्पचिह्नाङ्कितम्। स्निग्धम्–सस्नेहम्। धृतमनोयोगमित्यर्थः। निभालयन्ती अवलोकयन्ती (पश्यन्ती) उपालम्भे स्नेहसूचकतिरस्कारे (इतो गच्छन्त्यपि मां नेक्षसे इत्येवंरूपे) अङ्गुलीयशोभाहृतचित्त-

---

( आभरण हाथमें लिये एक दूसरी चेटीका प्रवेश )

पहली चेटी—( दूसरी चेटीको देख कर ) अरी कौमुदिका, आज इतनी गम्भीर क्यों दीख रही है? जो पाससे ही जाती हुई इधर देखती भी नहीं।

दूसरी चेटी—अहा बकुलावलिका, सखी, सर्पमुद्रायुक्त देवीकी यह अंगूठी सोनारके यहांसे लिये जा रही थी, गौरसे उसे देखने लगी, इसीसे तुह्मारे उलाहने सुनने पड़े।

**प्रथमा**—( विलोक्य ) **ठाणे सज्जदि दिट्ठी। इमिणा अङ्गुलीअएण उब्भिण्णकिरणकेसरेण कुसुमिदो विअ दे अग्गहत्थो।** [स्थाने सज्जति दृष्टिः। अनेनाङ्गुलीयकेनोद्भिन्नकिरणकेसरेण कुसुमित इव तेऽग्रहस्तः।]

**द्वितीया**—**हला, कहिं पत्थिदासि।** [सखि, कुत्र प्रस्थितासि।]

**प्रथमा**—**देवीए एव्व वअणेण णट्टाआरिअं अज्जगणदासं पुच्छिदुं, उवदेसग्गहणे कीरिसी मालविएत्ति।** [देव्या एव वचनेन नाट्याचार्यमार्यगणदासं प्रष्टुम्, उपदेशग्रहणे कीदृशी मालविकेति।]

**द्वितीया**—**सहि, ईरिसेण वावारेण असण्णिहिदा वि सा कहं भट्टिणा दिट्ठा।** [सखि, ईदृशेन व्यापारेणासन्निहितापि सा कथं भर्त्रा दृष्टा।]

---

तया मया तथाकृतं, नान्यत् किमपि त्वदुपेक्षाकारणमिति मा किमपि चेतसि कृथा इति तदाशयः।

ते तव। दृष्टिः नयनम्। स्थाने युक्ते स्थले, दर्शनीये इत्यर्थः। सजति आसक्तिमेति। दर्शनीयमेवेदं सुन्दरतममङ्गुलीयं तद्वीक्षमाणा त्वं नानुपयुक्तमकृथा इति भावः। तत्र हेतुमाह—अनेनेति। उद्भिन्नानि—प्रकटीभूतानि किरणा एव केशराणि( पुष्परजसमाश्रयभूतास्तदग्रलम्बिनस्तदवयवविशेषाः ) किञ्जल्कानि यस्य तेन। अनेन अङ्गुलीयकेन। अग्रहस्तः—हस्ताग्रभागः। कुसुमितः—सञ्जातपुष्प इव। अङ्गुलीयप्रभाप्रकाशात्तव हस्ते किमपि पुष्पं धृतमिव प्रतीयत इति भावः। एतेन तस्या निर्दोषताऽनया समर्थिता बोध्या। कस्मिन् प्रस्थितासि—कुत्र कार्ये व्यापृतासि ?

देव्याः धारिण्याः। वचनेन—आदेशेन। प्रष्टुम् जिज्ञासितुम्। ( प्रश्नाकारमेवाह ) उपदेशग्रहणे—शिक्ष्यमाणनाट्यप्रयोगकलायाम्। कीदृशी कतमाङ्कोटिमागता।

ईदृशेन व्यापारेण अभिनयशिक्षाग्रहणार्थमन्यत्र निवासात्मना कर्मणा। असन्निहिता असमीवर्त्तिनी। सा मालविका। भर्त्रा स्वामिना राज्ञाऽग्निमित्रेण। अतिरूपवत्या मालविकाया दर्शने जाते राजा जातुचिदासजेत्तस्यामिति भयादेव तां

---

प्रथमा—( देखकर ) ठीक जगहपर नजर बैठी थी, इस अंगूठीकी किरणोंसे तुह्मारे हाथ पुष्पित-से लग रहे हैं।

द्वितीया—सखी, कहाँ चली हो।

प्रथमा—देवीकी आज्ञासे नाट्याचार्य गणदाससे यह पूछने कि शिक्षामें मालविकाकी क्या स्थिति है ?

द्वितीया—इस तरह दूरस्थ रहनेपर भी वह राजाकी आँखोके सामने कैसे आई ?

प्रथमा—आम् । सो जणो देवीए पास्सगदो चित्ते दिट्ठो । [ आम् । स जनो देव्याः पार्श्वगतश्चित्रे दृष्टः । ]

द्वितीया—कहं विअ । [ कथमिव । ]

प्रथमा—सुणाहि । चित्तसालं गदा देवी जदा पच्चग्गावण्णराअं चित्तलेहं आआरिअस्स आलोअन्ती चिट्ठदि । भट्टा अ उवट्ठिदो । [ शृणु । चित्रशालां गता देवी यदा प्रत्यग्रवर्णरागां चित्रलेखामाचार्यस्यालोकयन्ती तिष्ठति । भर्ता चोपस्थितः । ]

द्वितीया—तदो तदो । [ ततस्ततः । ]

---

नृत्याभिनयशिक्षाऽपदेशेन महिषी राजानुपेये स्थाने स्थापितवत्यथापि कथं राज्ञो दृष्टिस्तस्यामपप्तदिति दास्योः कथोपकथनयोरभिप्रायः ।

'आम्' इति स्मरणसूचकमव्ययम् । स जनः मालविकालक्षणा व्यक्तिः । देव्याः धारिण्याः । पार्श्वगतः समीपे वर्तमानः । चित्रे आलेख्ये । दृष्टः साक्षात्कृतः । देव्याः सामूहिके चित्रे मालविकाया अपि चित्रितत्वेन देवी चित्रदर्शनावसरे समान-चित्राङ्कितत्वेन मालविकाऽपि भर्त्रा साक्षात्कृतेति तात्पर्यम् । कथमिव केन प्रकारेणेदं घटितम् ? । या मालविका राज्ञो दर्शनपथाद्रक्ष्यते तस्याश्चित्रेण सङ्कीर्णे स्वस्याश्चित्रं द्रष्टुमवसरमेव राज्ञे देवी कथं दत्तवतीति प्रश्नाशयः ।

चित्रशालाम् राजकीयमालेख्यागारम् । गता प्रविष्टा । देवी धारिणी । प्रत्यग्र-वर्णरागाम् प्रत्यग्रः अचिरनिर्वर्त्तितः वर्णस्य शुक्लत्वादे रागो रञ्जनं मसीन्यासो यस्यां सा ताम् अचिरक्लृप्तवर्णविन्यासामित्यर्थः । चित्रलेखाम्—आलेख्यम् । आचा-र्यस्य शिल्पिनः । प्रलोकयन्ती पश्यन्ती ( नतु दृष्टवती द्रक्ष्यन्ती वा, एतेन गोपनस्या-सम्भाव्यता व्यञ्जिता ) । तस्मिन्नन्तरे एतन्मध्ये । भर्त्ता राजा । उपस्थितः स्वयमागतः ।

ततस्तत इति द्विरुक्तिरुत्कण्ठाव्यञ्जकसम्भ्रमसूचनार्था, तथाचोक्तम् :—

'विवादे विस्मये हर्षे खेदे दैन्येऽवधारणे । प्रसादने सम्भ्रमे च द्विस्त्रिरुक्तिर्न दुष्यति' ॥

---

प्रथमा—हां, उसे देवीके चित्रमें राजाने देख लिया ।

द्वितीया—सो कैसे ?

प्रथमा—सुनो, देवी एक दिन चित्रशालामें बैठकर चित्रकार द्वारा निर्मित एक नवीन चित्र देख रही थीं, इसी बीच महाराज वहाँ आ गये ।

द्वितीया—उसके बाद ?

प्रथमा—उवआराणन्तरं एक्कासणोवविट्ठेण भट्टिणा चित्तगदाए देवीए परिअणमज्झगदं आसण्णदारिअं देक्खिअ देवी पुच्छिदा। [ उपचारानन्तरमेकासनोपविष्टेन भर्त्रा चित्रगताया देव्याः परिजनमध्यगतामासन्नदारिकां दृष्ट्वा देवी पृष्टा। ]

द्वितीया—किं ति। [ किमिति। ]

प्रथमा—अपुव्वा इअं दारिआ देवीए आसण्णा आलिहिदा किण्णामहेएत्ति। [ अपूर्वेयं दारिका देव्या आसन्ना आलिखिता कन्नामधेयेति। ]

द्वितीया—आकिदिविसेसेसु आअरो पदं करेति। तदो तदो। [ आकृतविशेषेष्वादरः पदं करोति। ततस्ततः। ]

प्रथमा—तदो अवहीरिअवअणो भट्टा संकिदो देवीं पुणोवि

---

उपचारानन्तरम् उपचारो व्यवहारो राजनि समायाते स्वासनत्यागप्रणिपातजयजीवादिपदप्रयोगादिरूपस्तत्पश्चात्। एकासनोपविष्टेन देव्या सह समानमासनमुपेयुषा। चित्रगतायाः आलिखितायाः। परिजनमध्यगताम्—चित्रितपरिचारिकावर्गवर्त्तिनीम्। आसन्नदारिकाम्—देव्याः समीपे चित्रितां बालिकाम्। देवी धारिणी। पृष्टा जिज्ञासिता।

किमिति प्रश्नस्वरूपजिज्ञासाऽव्यञ्जकम्।

अपूर्वा आश्चर्यजनकरूपा। इयम् चित्रगता। आसन्ना समीपगता। किंनामधेया किमभिधाना। इति शब्दः प्रश्नाकारपूर्त्तिसूचकः। आकृतिविशेषे ( परमसुन्दरतनौ ) विशिष्टायामाकृतौ। आदरः बहुमानः। पदं करोति स्थानं लभते। रमणीयामाकृतिं निरीक्ष्य सर्वस्यापि तद्रूपवद्व्यक्तिविषयः समादरः समुत्पद्यत इति भावः। आदर एव चात्र तद्विषयकप्रश्नस्योद्भवे हेतुरिति तस्यात्रावतारणा। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इति कोषः।

---

प्रथमा—स्वागत सत्कारके बाद देवीके साथ आसनासीन होकर देवीके चित्रमें चित्रित परिजनोंके बीचमें एक बालिकाको चित्रित देखकर राजाने पूछा।

द्वितीया—क्या पूछा ?

प्रथमा—देवीके साथ चित्रित यह बालिका बड़ी सुन्दरी है, इसका नाम क्या है ?

द्वितीया—सुन्दर-आकृति आकर्षण उत्पन्न करती है, उसके बाद ?

प्रथमा—कुछ भी उत्तर नहीं मिला, इससे राजाकी शङ्का बढ़ी, राजाने साग्रह-

अणुबन्धिदुं । तदो कुमारीए वसुलच्छीए आअक्खिदम् । अज्ज, एसा मालविएत्ति । [ ततोऽवधीरितवचनो भर्ता शङ्कितो देवीं पुनरप्यनुबन्धुम् । ततः कुमार्या वसुलक्ष्म्याख्यातम् । आर्य, एषा मालविकेति । ]

द्वितीया—( सस्मितम् । ) सरिसं खु बालभाअस्स । अदो अवरं कहेहि । [ सदृशं खलु बालभावस्य । अतोऽपरं कथय । ]

प्रथमा—किं अण्णं । संपदं मालविआ सविसेसं भट्टिणो दंसणपहादो रक्खीअदि । [ किमन्यत् । सांप्रतं मालविका सविशेषं भर्तुर्दर्शनपथाद्रक्ष्यते । ]

---

अवधीरितवचनः—अवधीरितम् प्रत्युत्तराप्रदानेन तिरस्कृतं वचनं प्रश्नवाक्यं यस्य तादृशः । ( अत एव च ) शङ्कितः–सञ्जाताशङ्कः, मदीयप्रश्नेष्ववधानदानपूर्वकं सदोत्तरं दत्तवत्या देव्याः सम्प्रति मयाऽस्या बालिकाया नामनि जिज्ञास्यमाने किमर्थं मौनावलम्बनं तदत्र केनापि गूढेन कारणेन भाव्यमिति जातसंशय इत्यर्थः । पुनरप्यनुबन्धुम् भूयोभूयस्तमेव प्रश्नमावर्त्तयितुम् । प्रवृत्तः प्रारब्धवान् । ततः तदीयाग्रहे प्रवर्त्तमाने । कुमार्या पञ्चवर्षदेशीयया बालिकया । आख्यातम् उक्तम् । अत्रोच्चरयन्त्या वसुलक्ष्म्याः कुमार्येति विशेषणेन तस्याः स्वमातुरनीप्सितेऽपि तन्नामनिवेदने प्रवृत्तेः क्षम्यत्वमुक्तम् । उक्तं च कुमारपदस्यार्थविषये श्रीधरस्वामिना—

'कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि ।
कैशोरमा पञ्चदशात् यौवनन्तु ततः परम्' ॥ इति ।

एतत्—मातुरनीप्सितमपि मालविकानामनिवेदनरूपं कार्यम् । बालभावस्य बाल्यावस्थायाः । सदृशम् अनुकूलम् । शिशवो हि सरलधियो न गूढं चिन्तयन्तीति यथावस्तु रहस्यमपि विवृण्वन्तीति भावः ।

सविशेषम्—पूर्वापेक्षयापि विशेषरूपेण । स्वामिनः राज्ञः । दर्शनपथात् दृष्टिपातविषयात् । रक्ष्यते अपवार्यते । यथा राजा तां नेक्षेत तथा मालविका राजागम्ये स्थाने स्थाप्यत इत्याकूतम् । अत्र 'अपूर्वा इयं दारिका' इत्यारभ्य 'दर्शनपथाद्रक्ष्यते' इति यावद्राज्ञो मालविकाविषयोऽभिलाषोऽत्र बीजमिति बोध्यम् । नियोगम्–कर्त्तव्यम्

---

पूछना जारी रक्खा, इसपर कुमारी वसुलक्ष्मीने कह दिया कि यह 'मालविका है' ।

द्वितीया—( हंसकर ) यह तो लड़कपनके अनुकूल ही है । आगे कहो ।

प्रथमा—और क्या ? उस दिनसे मालविकाको राजाकी आंखोंसे खासकरके अलग रखा जाता है ।

द्वितीया—हला, अणुचिट्ठ अत्तणो णिओअं। अहं वि एदं अङ्गुलीअअं देवीए उवणइस्सम्। ( इति निष्क्रान्ता। ) [ सखि, अनुतिष्ठात्मनो नियोगम्। अहमप्येतदङ्गुलीयकं देव्यै उपनेष्यामि। ]

प्रथमा—( परिक्रम्यावलोक्य। ) एसो णट्टाअरिओ संगीदसालादो णिग्गच्छदि। जाव से अत्ताणं दंसेमि। ( इति परिक्रामति। ) [ एष नाट्याचार्यः संगीतशालातो निर्गच्छति। यावदस्मा आत्मानं दर्शयामि। ]

( प्रविश्य। )

गणदासः—कामं खलु सर्वस्यापि कुलविद्या बहुमता। न पुनरस्माकं नाट्यं प्रति मिथ्यागौरवम्। तथा हि।

देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषं

---

( नियोक्तुरादेशपालनरूपम् ) अनुतिष्ठ सम्पादय। आचार्यगणदासमुपेत्य मालविकायाः शिक्षाविषये स्थितिं ज्ञातुं गच्छेति भावः। उपनेष्यामि—प्रापयिष्यामि। देव्यै इति चतुर्थी तादर्थ्ये।

निर्गच्छति—बहिरायाति। यावदिति वाक्यालङ्कारे। आत्मानं दर्शयामि स्वं प्रकटयामि गणदाससमीपे स्वमुपस्थापयामीति भावः।

कुलविद्या वंशपरम्परागता विद्या। बहुमता अत्यादरपात्रम्। एतेन कुलविद्यात्वेन कदाचिन्मिथ्याऽऽदरोऽपि सम्भवतीति प्रतिषेधति—नेति। अस्माकं पुनर्नाट्यं प्रति मिथ्यागौरवेण—कुलविद्यामात्रकृतो नाट्यं प्रति नास्माकमस्थानादरः, किन्तु तन्महत्त्वकृतो युक्त एवादर इति भावः।

देवानामिति। मुनयो भरतमतङ्गादयो नाट्यशास्त्रप्रवर्त्तका इदं नाट्यं देवानामिन्द्रादीनां शान्तम् पशुविशसनाद्यभावात्सौम्यम् चाक्षुषम् चक्षुरनुभाव्यम् क्रतुं यज्ञमामनन्ति उपदिशन्ति। अस्य नाट्यस्य क्रतुत्वप्रतिपादनञ्च चतुर्वेदसारभूतनाट्य-

---

द्वितीया—सखी, अच्छा अपना कार्य देखो, मैं भी यह अङ्गूठी देवीको देने जाती हूँ। ( जाती है )

प्रथमा—( कुछ चलकर और देखकर ) यही तो नाट्याचार्य सङ्गीत शालासे बाहर आरहे हैं, इनसे साक्षात्कार करूं। ( आगे बढ़ती है ) ( गणदासका प्रवेश )

गणदास—कुल विद्याके लिये सबके हृदयमें गौरव होता है। हमलोगोंके हृदयमें नाट्य विद्याके लिये जो गौरव है वह मिथ्या गौरव नहीं है। क्योंकि—

मुनियोंने इस कलाको देवताओंके लिये सौम्य नेत्रयज्ञ कहा है, महादेवने अपने

रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधकम् ॥ ४ ॥

वेदविहितकर्मत्वाद्विहितम् । किञ्च ( इदं नाट्यम् ) रुद्रेण महादेवेन उमया पार्वत्या कृतो व्यतिकरः सम्बन्धो यस्य स तथोक्तस्तस्मिन् पार्वत्या नित्याश्लिष्ट इत्यर्थः । स्वाङ्गे आत्मदेहे द्विधा लास्यताण्डवरूपप्रकारद्वयेन विभक्तम् विभागं लम्भितम् । तथा चोक्तं सङ्गीतविद्याविनोदे—उद्दण्डताण्डवमुदञ्चितलास्यलीलं कर्त्तुं स्वयं युगपदेव समुत्सुकात्मा । यः कामिनीकलितकम्रतरार्धकायः सोऽयं विभाति विभुरादिनरः सुराणाम् । इति । 'स्त्रीनृत्यं लास्यमित्युक्तं पुन्नृत्यं ताण्डवं मतम्' इति च नारदीये । अत्र नाट्ये त्रैगुण्योद्भवम् त्रयो गुणाः सत्त्वरजस्तमांस्येव त्रैगुण्यम् ( चातुर्वर्ण्यादिवत्स्वार्थे ष्यञ् ) तत उद्भवः समुत्पत्तिर्यस्य तादृशम् त्रिगुणात्मकम् ( अत एव च सुखदुःखमिश्रात्मकम् ) लोकचरितं लोकस्थानां रामाद्यनुकार्याणां चरितमाचरणं चरित्रमिति यावत् नानारसम् नाना बहुविधा रसाः प्रियतयोपभोग्याः शृङ्गारवीरादयो यस्मिंस्तत्तथोक्तं दृश्यते ज्ञायते । आस्वाद्यत इति भावः । लोकेऽनुकार्यस्य रामादेश्चरितं सुखदुःखमिश्रात्मकमपि नाट्याभिनयसमर्पितं सत् सुखरूपेणैव सामाजिकैरास्वाद्यत इति हृदयम् । तथा चोक्तं साहित्यदर्पणे—

'करुणादावपि रसे जायते यत्परं सुखम् । सचेतसामनुभवः प्रमाणं तत्र केवलम् '
किञ्च तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः ।
तथा रामायणादीनां भविता दुःखहेतुता' ॥
'अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात् ।
सुखं सञ्जायते तेभ्यः सर्वेभ्योऽपीति का क्षतिः' ॥
'हेतुत्वं शोकहर्षादेर्गतेभ्यो लोकसंश्रयात् ।
शोकहर्षादयो लोके जायन्तां नाम लौकिकाः'
'अश्रुपातादयस्तद्वद् द्रुतत्वाच्चेतसो मताः'

तदेवं नाट्यं नटनप्रयोगः एकमपि एकैकमपि भिन्नरुचेः भिन्ना बहुविध

अर्धनारीश्वररूपमें इसे दो ( लास्य और ताण्डव ) भागोंमें विभक्त किया, इस नाट्यकलामें शृङ्गारादि नव रस तथा सत्त्वादि तीन गुणोंसे लोकचरित दिखलाया जाता है, जिससे इस एक ही कलाके द्वारा भिन्न भिन्न रुचिवालोंका मनोविनोद हो जाता है ॥ ४ ॥

बकुलावलिका—( उपेत्य । )अज्ज, वन्दामि । [ आर्ये, बन्दे । ]

गणदासः—भद्रे, चिरं जीव ।

बकुलावलिका—अज्ज, देवी पुच्छदि, अवि उवदेसग्गहणे णादिकोलि-

---

प्रीतयोऽभिलाषा मनोबन्धा इति यावत्, यस्य तस्य जनस्य बहुधा नानाविधेन शृङ्गारादिना प्रकारेण समाराधकं प्रीतिजनकम् । भवतीति शेषः । तथा चोक्तं भारतीये—

'त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम् ।
धर्मो धर्मप्रवृत्तानां कामः कामोपसेविनाम् ॥
अर्थोपजीविनामर्थो धृतिरुद्विग्नचेतसाम् ।
नानाभावोपसम्पन्नं नानावस्थान्तरात्मकम् ॥
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम् । एतद्रसेषु भावेषु सर्वकर्मक्रियासु च ॥
सर्वोपदेशजननं नाट्यमेतद् भविष्यति' ॥
न तज्ज्ञानं न तच्छिल्पं नासौ विद्या न सा कला ।
नासौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते' ॥ इति ।

अस्य नाट्यस्य चतुर्वेदसारत्वं भारतीये प्रोक्तम्, यथा—

'सर्वशास्त्रार्थसम्पन्नं सर्वशिल्पप्रदर्शनम् । नाट्यसंज्ञमिमं वेदं सेतिहासं करोम्यहम् ॥
एवं सङ्कल्प्य भगवान् सर्ववेदाननुस्मरन् । नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसंभवम् ॥
जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च । यजुर्वेदादभिनयान् रसानाथर्वणादपि ॥
वेदोपवेदसम्बद्धो नाट्यवेदो महात्मना । एवं भगवता सृष्टो ब्रह्मणा ललितात्मना ॥
उत्पाद्य नाट्यवेदं तु ब्रह्मोवाच सुरेश्वरम्' ॥

नाट्यस्य क्रतुत्वमपि तत्रैवोक्तम्, यथा—

'प्रयोगं यश्च कुर्वीत प्रेक्षते चावधानवान् । या गतिर्वेदविदुषां या गतिर्यज्ञयाजिनाम् ॥
या गतिर्दानशीलानां तां गतिं प्राप्नुयान्नरः' ॥

शार्दूलविक्रीडितं वृत्तम् । 'सूर्याश्वैर्मसजास्ततः सगुरवः शार्दूलविक्रीडितम्' इति च तल्लक्षणम् ॥ ४ ॥

भद्रे—कल्याणमयि ।

---

बकुलावलिका— आर्य, नमस्कार ।

गणदास—चिरजीविनी होओ ।

बकुलावलिका—देवीने पूछा है कि शिक्षा ग्रहणमें मालविकाकी कैसी प्रगति है ?

स्सदि वो सिस्सा मालविएत्ति । [ आर्य, देवी पृच्छति, अप्युपदेशग्रहणे नातिक्लिश्नाति वः शिष्या मालविकेति । ]

गणदासः—भद्रे, विज्ञाप्यतां देवो परमनिपुणा मेधाविनी चेति । किं बहुना ।

यद्यत्प्रयोगविषये भाविकमुपदिश्यते मया तस्यै ।
तत्तद्विशेषकरणात्प्रत्युपदिशतीव मे बाला ॥ ५ ॥

बकुलावलिका—( आत्मगतम् । ) अदिक्कमंतीं विअ इरावदिं पेक्खामि । ( प्रकाशम् । ) किदत्था दाणिं वो सिस्सा । जाए गुरुअणा एवं

---

आर्य—शिक्षकतया माननीय । उपदेशग्रहणे शिक्षाऽभ्यासे । नातिक्लिश्नाति नाधिकं व्यथयति । कुशिष्यशिक्षणस्याचार्यक्लेशप्रदत्वादीदृशः प्रश्नः । वाक्यार्थः पृच्छतेः कर्म । विज्ञाप्यताम् अभिधीयताम् । मदुक्तदिशा त्वयेति योजनीयम् । देवी धारिणी । परमनिपुणा अतिकुशला । एतेन तस्याः श्रमकृतं योग्यत्वमुक्तम् । मेधाविनी शिक्षाविषयपदार्थचिरधारणाशक्तिर्मेधा तद्युक्ता । 'धीर्धारणावती मेधा' इत्यमरः । बहुना अधिकः । बहुशब्दस्यात्र तिरोहितावयवभेदविवक्षयैकवचने प्रयोगः ।

यद्यदिति । प्रयोगविषये अभिनयसम्बन्धे मया ( शिक्षकेण ) तस्यै मालविकायै यद्यत् भाविकम् भाववत् ( 'अत इनिठनौ' इति ठन् ) शृङ्गाराद्यभिव्यञ्जनप्रकारादि उपदिश्यते बोध्यते तत्तत् ( भाविकम् ) विशेषकरणात् मदपेक्षयाऽपि निपुणतया प्रदर्शनात् अथवा तत्तद्विशेषकरणात् तस्य तस्य भाविकस्य विशेषेणातिशयेन करणं निवर्त्तनं तस्मात् , मे मह्यं सा बाला अनतिवया मालविका प्रत्युपदिशतीव समधिकमुपपाद्य समर्पयतीव । सुतरामियमतीव विचक्षणाऽतः परमप्रसन्नोऽस्मि तस्यामिति भावः । अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षाऽलङ्कारः । भावेन संसृष्टं भाविकम् । तथा चोक्तम्—

'आङ्गिकाभिनयप्रायमल्पवाचिकसात्त्विकम् ।
भावानामास्पदं नृत्यं पदार्थव्यञ्जनात्मकम्' ॥

आर्या जातिः ॥ ५ ॥

---

गणदास—भद्रे, देवीसे कहना कि मालविका शिक्षाग्रहणमें निपुण है, अधिक क्या? अभिनय विषयमें मैं जो भाविक उसे उपदेश देता हूँ, उसमें विशेष दिखलाकर मालविका मेरे प्रति प्रत्युपदेश-सी करती है ॥ ५ ॥

-तुस्सदि । [ अतिक्रामन्तीमिवेरावतीं पश्यामि । कृतार्थेदानीं वः शिष्या । यस्या गुरुजन एवं तुष्यति । ]

गणदासः—भद्रे, तद्विधानामसुलभत्वात्पृच्छामि । कुतो देव्या तत्पात्रमानीतम् ।

बकुलावलिका—अत्थि देवीए वण्णावरो भादा वीरसेणो णाम । सो भट्टिणा णम्मदातीरे अन्तवालदुग्गे ठाविदो । तेण सिप्पाहिआरे जोग्गा इअं दारिएत्ति भणिअ भइणीए देवीए उवाअणं पेसिदा । [ अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम । स भर्त्रा नर्मदातीरेऽन्तपालदुर्गे स्थापितः । तेन शिल्पाधिकारे योग्येयं दारिकेति भणित्वा भगिन्या देव्या उपायनं प्रेषिता ।

---

अतिक्रामन्तीम् गुणगरिम्णातिशयानाम् । पूर्वं नृत्यादिकलायामिरावत्येवात्रावरोधे प्राथम्येनाकत्थताधुनेमां मालविकां तां तैर्गुणैर्जयन्तीं सम्भावयामीति भावः । कृतार्था साधितकार्या । वः शिष्या मालविका । तुष्यति गुणैर्जितैः प्रसीदति । शिष्यजनकृतार्थताया गुरुजनसन्तोषाधानप्रमाप्यत्वादिति भावः ।

तद्विधानाम्—मालविकासदृशीनाम् । असुलभत्वात् दुर्लभत्वात् । किं पृच्छसीत्याकाङ्क्षायामाह—कुत इति । तत्पात्रम् मालविकालक्षणयोग्यव्यक्तिविशेषः ।

वर्णावरः जात्या नीचः । देवीपितुर्वैश्यजातीयभार्यागर्भजातत्वात् देवीतो नीचजातिरित्यर्थः । अनुलोमसङ्कराणां मातृजातिवृत्तित्वादियमुक्तिः । वीरसेनो नाम तदाख्यया प्रसिद्धः । तेन वीरसेनेन । शिल्पाधिकारे नृत्यगीतादिकलाविद्यायाम् । इयं दारिका मालविका । योग्या सम्भाव्यमानसमुत्कर्षा ( तदुपयुक्ताङ्गभङ्गीस्वरादिसहितत्वात् ) उपायनम् उपहारः, क्षत्रियस्य वैश्यापरिणयेऽधिकारमाह मनुः—

'शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते ।
ते च स्वा चैव राज्ञः स्युस्ताश्च स्वा चाग्रजन्मनः' ॥ इति ।

---

बकुलावलिका—( स्वगत ) मैं देखती हूँ कि यह इरावतीको अतिक्रमण कर जायगी । ( प्रकाश ) जिसके प्रति गुरुजन इसतरह प्रसन्न हैं, मैं समझती हूँ, कि—उसकी शिक्षा सफल हुई ।

गणदास—भद्रे, उसतरहका पात्र आसानीसे नहीं मिलता, इसलिये तुमसे पूछता हूँ, देवीने उसे कहाँ पाया ?

बकुलावलिका—निम्न वंशोद्भव देवीके एक भाई हैं जिनका नाम है वीरसेन, ।

गणदासः—( स्वगतम्। ) आकृतिविशेषप्रत्ययादेनामनूनवस्तुकां संभावयामि। ( प्रकाशम्। ) भद्रे, मयापि यशस्विना भवितव्यम्। यतः।

पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥ ६ ॥

---

नच—'समुद्रयात्रास्वीकारः कमण्डलुविधारणम्।
द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥ इत्यादि प्रक्रम्य
..................कलेरादौ महात्मभिः।
निवर्त्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः' ॥ इत्यादिपुराणवचनैः।

कलियुगे कथमीदृशाचारः समर्थ्यत इति वाच्यम्, तत्र देशे तदानीमपि प्रोक्तादिपुराणीयवचनस्य व्यवहाराप्रश्रयात, असवर्णविवाहस्य व्यवहारसिद्धत्वाच्च। तथाह मरीचिः—

'येषु स्थानेषु यच्छौचं धर्माचारश्च यादृशः।
तत्र तन्नावमन्येत धर्मस्तत्रैव तादृशः' ॥

आकृतिविशेषप्रत्ययात्—आकारविज्ञानात्। एनाम् मालविकाम्। अनूनवस्तुकाम् अनूनमनल्पम् ( विशिष्टम् ) वस्तु वृत्तं यस्याः सा ताम्, यद्वा अनूनवस्तुकाम् अनीचवंशाम्। सम्भावयामि मन्ये। आकृतिविशेषं दृष्ट्वाऽपि कुलशीलादयो विशेषज्ञैरवधार्यते, तथा चोक्तमन्यत्र—'सेयमाकृतिर्न व्यभिचरति शीलम्' इति, तदनुरोधेनेत्थमुक्तिः। मया गणदासेन। यशस्विना उत्तमशिक्षकताप्रयुक्तकीर्तिशालिना। पात्रविशेष इति। आधातुः उपदेशकरस्य शिल्पम् कला विद्या पात्रविशेषे विशिष्टे पात्रे ( प्रखरमतौ क्वचन शिष्ये ) न्यस्तं निहितं ( सङ्क्रमितं ) सत् गुणान्तरं कमपि गुणातिशयम् व्रजति प्रतिपद्यते। शिक्षकेण दीयमान उपदेशः सति योग्ये ग्राहके कामपि दीप्तिमासादयतीति भावः। अत्रोपमामाह—पयोदस्य मेघस्य

---

राजाने उन्हें नर्मदातटवर्ती 'अन्तपाल' दुर्गमें रक्षक नियुक्त कर रक्खा है, उन्होंने ही इसे शिल्पशिक्षा की अधिकारिणी समझकर अपनी बहन देवीके पास भेज दिया है।

गणदास—( स्वगत ) आकृति देखनेसे यह महाकुलप्रसूत ज्ञात होती है। ( प्रकाश ) भद्रे, मैं भी सफल हूँगा, क्योंकि—

मेघका जल जैसे समुद्र शुक्तिमें पड़कर मुक्ता बन जाता है वैसे ही उत्तम पात्रमें दीगई शिक्षा उत्कर्ष प्रकट करती है ॥ ६ ॥

बकुलावलिका—अज्ज, कहिं दाणिं वो सिस्सा। [ आर्य, कुत्रेदानीं वः शिष्या। ]

गणदासः—इदानीमेव पञ्चाङ्गादिकमभिनयमुपदिश्य मया विश्र-

---

जलं वारि समुद्रशुक्तौ सामुद्रिकशुक्तिकायां न्यस्तं सत् मुक्ताफलताम् मौक्तिकत्वमिव। पयोधरो हि ऊषरगिरिसरिद्द्रुमसमुद्रेषु समानभावेन वर्षति परं समुद्रशुक्तिरेव मुक्ताफलति तथैव समानमध्याप्यमानेष्वपि शिष्येषु कश्चित्प्राक्तनपुण्यपाकवशादासादयति प्रकर्षमिति तात्पर्यम्। उक्तश्चायमर्थो भवभूतिनाऽपि—

'वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे न च खलु तयोर्ज्ञाने शक्तिंकरोत्यपहन्ति वा।
भवति च पुनर्भूयान् भेदः फलं प्रति तद्यथा प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः' ॥

मुक्तोत्पत्तिस्थानानि निर्दिष्टानि युक्तिकल्पतरौ—

"गजाहिकोलमत्स्यानां शीर्षे मुक्ताफलोद्भवः।
त्वक्सारशुक्तिशङ्खानां गर्भे मुक्ताफलोद्भवः॥
धाराधरेषु जायेत मौक्तिकं जलबिन्दुभिः"।

आर्या जातिः ॥ ६ ॥

अथ किम्—सत्यमुच्यते भवतेत्यर्थः। कस्मिन्—कुत्रस्थाने। वः शिष्या मालविका, इदानीमेव अधुनैव। पञ्चाङ्गादिकम्—पञ्चाङ्गम् आदौ यस्य तम्। आदिना चतुरङ्गस्य ग्रहणम्। प्ररणं पञ्चाङ्गमित्यनर्थान्तरम्। तस्याभिनयः प्रयोगस्तम्। उपदिश्य शिक्षयित्वा। विश्रम्यताम् विश्रामः क्रियताम्। इति अभिहिता उक्ता दीर्घिका वापी तामवलोकयन्त्यनेनेति दीर्घिकावलोकनो गवाक्षः भित्तिभेदः। तत्र गता वर्त्तमाना प्रवातम् प्रशस्तवातयुक्तम् प्रदेशम्। आसेवमाना अध्यासीना। अङ्गपञ्चकमुक्तं सङ्गीतरत्नाकरे—

'नृत्तं तथा च कैवारो मर्मरो जागरं तथा।
गीतं चेति समाख्यातं प्रेरणस्याङ्गपञ्चकम्'॥
त्रिभिस्त्वेतत् प्रयोज्यं स्यात् कैवारं जागरं विना'॥

अत्र पञ्चाङ्गरूपवृत्तान्तरोपक्रमकथनेन छलिकं नाम नृत्यं साकल्येन परिशीलितमिति व्यञ्जयति—

---

**बकुलावलिका—हाँ, आपकी शिष्या है कहाँ?**

**गणदास—अभी तो पञ्चाङ्गप्रभृति अभिनयकी रीति बताकर मैंने उसे विश्राम करनेको कहा है और वह वापीकी ओरवाली खिड़की के सामने खुली हवामें बैठी है।**

-भ्यतामित्यभिहिता दीर्घिकावलोकनगवाक्षगता प्रवातमासेवमाना तिष्ठति।

बकुलावलिका—तेण हि पुणो अणुजाणादु मं अज्जो। जाव से अज्जस्स परितोसणिवेदणेण उस्साहं वड्ढेमि। [ तेन हि पुनरनुजानातु मामार्यः। यावदस्या आर्यस्य परितोषनिवेदनेनोत्साहं वर्धयामि। ]

गणदासः—दृश्यतां सखी। अहमपि लब्धक्षणः स्वगृहं गच्छामि।

( इति निष्क्रान्तौ। )

मिश्रविष्कम्भकः।

( ततः प्रविशत्येकान्तस्थितपरिजनो मन्त्रिणा लेखहस्तेनान्वास्यमानो राजा। )

---

अनुजानातु गन्तुमादिशतु आर्यः भवान्। अस्याः मालविकायाः। आर्यस्य भवतः। परितोषनिवेदनेन सन्तोषश्रावणेन। उत्साहम् कर्त्तव्यनिष्ठाम्। वर्धयामि समेधयामि। शिक्षकसन्तोषज्ञानेन शिष्यस्योत्साहो वर्द्धत इति हि भूतार्थव्याहृतिः।

दृश्यताम् प्रत्यक्षीक्रियताम्। लब्धक्षणः कृतकृत्यतया लब्धविरामावसरः। मिश्रविष्कम्भकः पूर्वापरकथायोजकसन्दर्भः। तल्लक्षणं यथा—

वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः।
······स तु सङ्कीर्णो नीचमध्यमकल्पितः॥

सङ्कीर्णस्य विष्कम्भकस्यैव मिश्रविष्कम्भक इत्याख्या। समन्वय ऊहनीयः। एकान्तस्थितपरिजनः एकदिगवस्थितपरिचारकवर्गः। मन्त्रिणा प्रधानामात्येन वाहतकेन। लेखहस्तेन लिपियुक्तकरेण। अन्वास्यमानः सहोपविष्टः। राजा अग्नि-

---

बकुलावलिका—तब आप मुझे आज्ञा दें कि मैं आपकी प्रसन्नतासे उसे अवगतकराकर उसका उत्साह बढ़ाऊं।

गणदास—जाओ, सखीसे मिलो, मैं भी अवसर पाकर घर जाता हूँ।

( दोनो जाते हैं )

( मिश्र विष्कम्भक )

( इसके बाद राजाका प्रवेश, जिनके परिजन एक ओर बैठे हैं, और मन्त्री समीप में हाथमें चिट्ठी लिये बैठे हैं )

राजा—( अनुवाचितलेखममात्यं विलोक्य । ) वाहतक, किं प्रतिपद्यते वैदर्भः ।

अमात्यः—देव, आत्मविनाशम् ।

राजा—संदेशमिदानीं श्रोतुमिच्छामि ।

अमात्यः—इदमिदानीमनेन प्रतिलिखितम् । पूज्येनाहमादिष्टः । भवतः पितृव्यपुत्रः कुमारो माधवसेनः प्रतिश्रुतसंबन्धो ममोपान्तिकमुपसर्पन्नन्तरा त्वदीयेनान्तपालेनावस्कन्द्य गृहीतः। स त्वया मदपेक्षया सकलत्रसादर्यो मोक्तव्य इति । एतन्नु वो विदितम् । यत्तुल्याभिजनेषु

---

मित्रः । अनुवाचितलेखम् श्रावितलिपिम् । वैदर्भः विदर्भदेशाधिपतिर्यज्ञसेनः । किम्प्रतिपद्यते किमभिसन्धायैवं लिखतीति प्रश्नाशयः ।

आत्मविनाशम् स्वक्षयम् , यादृशस्तस्य विचारस्सोऽवश्यं तं नाशयेदिति भावः । निदेशम् विदर्भराजेन यज्ञसेनपत्रे लिख्यमानं विषयम् ।

इदम् वक्ष्यमाणप्रकारम् । प्रतिलिखितम् प्रत्युत्तररूपेण लिखितम् । पूज्येन समृद्ध्या वयसा च श्रेष्ठेन भवता । अहं यज्ञसेनः ।. आदिष्टः पत्रद्वाराऽऽज्ञप्तः । प्रतिश्रुतसम्बन्धः ·प्रतिश्रुतः अङ्गीकृतः ·सम्बन्धः स्वभगिन्या मया सह परिणयरूपो यौनसम्बन्धो येन तादृशः। मम अग्निमित्रस्य उपान्तिकम् समीपम् उपसर्पन् आगच्छन् । अन्तरा मध्येमार्गम् त्वदीयेन यज्ञसेनसम्बन्धिनाऽन्तपालेन सीमान्तरक्षाधिकृतेन। अवस्कन्द्य आक्रम्य गृहीतः युद्धे बन्दीकृतः। त्वया यज्ञसेनेन। मदपेक्षया मदीयेनानुरोधेन । सकलत्रसोदर्यः भार्याभगिनीसमेतः । सः माधवसेनः । मोचयितव्यः बन्दीभावाद्

---

राजा—( मन्त्रीके चिट्ठी पढ़ लेनेपर ) वाहतक, वैदर्भ क्या करना चाहते हैं ?

मन्त्री—महाराज, आत्मनाश ।

राजा—अब उनका संदेश सुनाइये ।

मन्त्री—उन्होंने लिखा है—'आपकी आज्ञा है आपके चचेरे भाई हमारे साथ सम्बन्ध करना तय करके मेरे पास आरहे थे, उन्हें आपके सीमारक्षकोंने आक्रमण करके बन्दी बना लिया है, उन्हें मेरे कहनेसे स्त्री और बहनके साथ आप मुक्त कर दें' । इस सम्बन्धमें आपको जानना चाहिए कि समान वंशोत्पन्न राजाओंमें परस्पर शत्रुता होती है, उसमें मध्यस्थ होना चाहिये और उसकी बहन तो आक्रमणके समय ही खोगई । उसे खोजनेका यत्न होगा । अथवा—यदि आप

राज्ञां वृत्तिरीदृशी। अतोऽत्र मध्यस्थः पूज्यो भवितुमर्हति। सोदरा पुनरस्य ग्रहणविप्लवे विनष्टा। तदन्वेषणाय प्रयतिष्ये। अथवा, अवश्यमेव माधवसेनो मया पूज्येन मोचयितव्यः, श्रूयतामभिसंधिः।

मौर्यसचिवं विमुञ्चति यदि पूज्यः संयतं मम श्यालम्।
मोक्ता माधवसेनस्ततो मया बन्धनात्सद्यः॥ ७॥ इति।

राजा—(सरोषम्।) कथं कार्यविनिमयेन मयि व्यवहरत्यनात्मज्ञः।

---

बहिष्करणीयः। एतावदन्तोऽग्निमित्रपत्रानुवादः। अतः परं स्वविचारमाह—एतदिति। एतद् वक्ष्यमाणम्। वः युष्माकम्। तुल्याभिजनेषु समानवंशेषु ज्ञातिष्वित्यर्थः। राज्ञाम् वृत्तिः व्यवहारः ईदृशी एवंविधा विरोधात्मिका। तुल्यवंशोद्भूतेषु समानलभ्यलाभप्रयत्नकृतविरोधस्य स्वाभाविकतयेदृश एव व्यवहारः प्रचलतीति ज्ञायत एव भवतेति भावः। अतः अस्मात् कारणात्। मध्यस्थः तटस्थीभूय निर्णयकरः पूज्यः भवान् भवितुमर्हति युज्यते। ननु किमर्थमहं मध्यस्थतां विदध्याम्, माधवसेनभगिन्या माधवसेनपक्षाश्रयणेनैव लभ्यत्वादत आह—विनष्टेति। विनाशोऽत्रादर्शनम्, तिरोहितेत्यर्थः। "विनष्टार्थस्य लाभोऽन्वे शीघ्रं मन्दे प्रयत्नतः" इत्यादावपि विनष्टपदस्य तिरोहितार्थतैव स्वीकृता। अथापि ताटस्थ्यरक्षायै प्रलोभयति—तदन्वेषणायेति। तस्याः माधवसेनस्वसुः अन्वेषणाय गवेषणाय। मया प्रयोज्यकर्त्रा। पूज्येन भवता प्रयोजककर्त्रा। अभिसन्धिः पणः।

मौर्यसचिवमिति। पूज्यो भवानग्निमित्रः संयतं निगडितम् मम श्यालम् पत्नीभ्रातरम् मौर्यसचिवं तदाख्यम् विमुञ्चति बन्धनात् त्यजति यदि चेत् ततः तदनन्तरम् (मौर्यसचिवे मुक्ते) मया सद्यः झटिति माधवसेनः बन्धनात् कारावासात् मया मोक्ता मोचयिष्यते। मुचेः कर्मणि लुट्। स्पष्टमन्यत्॥

आर्याप्रभेदो वृत्तम्॥ ७॥

इतिर्वक्तव्यसमाप्तिसूचनाय।

कार्यविनिमयेन—यदि भवानिदं करोति तदाऽहमिदं करोमीति कर्त्तव्यपरिवर्त्त-

---

माधवसेनको मुझसे अवश्य छुड़ाया चाहते हैं तो मेरी शर्त्त सुन लें—'यदि आप हमारे साले मौर्यसचिबको, जो आपका बन्दी है, छोड़ दें, तो मैं भी माधवसेनको अविलम्ब बन्धनसे मुक्त कर दूँगा'' ॥ ७ ॥

राजा—(क्रोधसे) तो क्या यह अनात्मज्ञ बदलेका व्यवहार कर रहा है?

वाहतक, प्रकृत्यमित्रः प्रतिकूलकारी च मे वैदर्भः। तद्यातव्यपक्षे स्थितस्य पूर्वसंकल्पितसमुन्मूलनाय वीरसेनमुखं दण्डचक्रमाज्ञापय।

अमात्यः—यदाज्ञापयति देवः।

राजा—अथवा किं भवान्मन्यते।

अमात्यः—शास्त्रदृष्टमाह देवः।

अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात्।
नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्तुम्॥ ८॥

---

नेन। अनात्मज्ञः आत्मसामर्थ्यानभिज्ञः। मदपेक्षया क्षीणबलस्य तस्य मया सह तुल्यतास्पर्द्धा नोचितेति भावः। प्रकृत्यमित्रः स्वभावशत्रुः। प्रतिकूलकारी विरुद्धाचरणशीलश्च। यातव्यपक्षे आक्रमणीयकोटौ। पूर्वसङ्कल्पितसमुन्मूलनाय पूर्वतः स्थिरीकृताय दण्डाय। वीरसेनमुखम् तत्प्रधानम्। दण्डचक्रम् परनिग्रहैककार्ये सैन्यमण्डलम्। आज्ञापय आदिश।

भवान्मन्यते कर्त्तव्यत्वेनावधारयति।

शास्त्रदृष्टम्–नीत्यागमपरिशुद्धम्। अतः शास्त्रसमर्थिते भवद्विचारे विचारान्तरसमर्थ्यता नापेक्षणीयेति भावः। शास्त्रदृष्टत्वमुपपादयति—

अचिराधिष्ठित इति। अचिराधिष्ठितराज्यः अबहुकाललब्धाधिपत्यः शत्रुः अरिः नवसंरोपणशिथिलः नवसंरोपणेन सद्यो रोपिततया शिथिलः असञ्जातमूलतयाऽदृढभूबन्धनः तरुः वृक्ष इव प्रकृतिषु सचिवप्रभृतिषु राज्याङ्गेषु अरूढमूलत्वात् असमुत्पन्नगाढानुरागत्वात् समुद्धर्त्तुम् उत्पाटयितुम् राज्यात् परिभ्रंशयितुञ्च सुकरः सुसाध्यः। यथा नवरोपितो वृक्षोऽसञ्जातमूलतया शिथिलोऽतश्च सुकरः समुत्पाटयितुं तथा प्रकृतिष्वनुत्पन्नदृढस्नेहः नवो नृपतिः परिभ्रंशयितुं सुकर इति भावः। 'स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च। राज्याङ्गानि प्रकृतयः' इत्यमरः। 'नृपं जिगीषे-

---

वाहतक, विदर्भराज, स्वभावतः हमारे शत्रु तथा प्रतिकूलाचारी हैं, इसलिये शत्रुभूत विदर्भराजके उन्मूलनके लिये वीरसेन वगैरह सैनिकोंको आज्ञा दे दीजिये।

अमात्य—महाराजकी जो आज्ञा।

राजा—अथवा, आप क्या सोचते हैं?

अमात्य—आपने नीतिसङ्गत आदेश दिया है—जिसकी जड़ भूमिमें बहुत दूर तक न जा सकी है ऐसे नवरोपित वृक्षकी तरह प्रजाओंमें जिसने अपने प्रति

राजा—तेन ह्यवितथं तन्त्रकारवचनम् । इदमेव वचनं निमित्तमुपादाय समुद्योज्यतां सेनाधिपतिः ।

अमात्यः—तथा । ( इति निष्क्रान्तः । )

( परिजनो यथाव्यापारं राजानमभितः स्थितः । )

( प्रविश्य । )

विदूषकः—आणत्तोम्हि तत्तभवदा रण्णा । गोदम, चिन्तेहि दाव उवाअं । जह मे जदिच्छादिट्ठप्पदिकिदी मालविआ पच्चक्खदंसणा होदित्ति । मए अ तं तहा किदं दाव से णिवेदेमि । ( इति परिक्रामति । )

[ आज्ञप्तोऽस्मि तत्रभवता राज्ञा । गौतम, चिन्तय तावदुपायम् । यथा मे यदृच्छा-

---

न्नवलब्धराज्यम्' इति कामन्दकीयवचनाद् भवदुक्तं शास्त्रसमर्थितमतो नाधिकां चोदत्नमतामर्हतीति तात्पर्यम् ।। ८ ।।

तेन अरूढमूलत्वेन हेतुना । तन्त्रकारवचनम् शास्त्रकृदुक्तिः । अवितथम् सत्यम् । भविष्यतीति शेषः । इदम् वैदर्भस्य कार्यविनिमयाभिसन्धिरूपमौद्धत्यम् । वचनम् वाक्यम् । निमित्तम् हेतुम् । उपादाय आलम्ब्य । समुद्योज्यताम् प्रवर्त्यताम् ।

यथाव्यापारम्—यथाऽधिकारम्, एतेन मन्त्रणाकाले छत्रचामरादिधारणपरायण-परिजनापसारणा व्यक्ता, सा च 'षट्कर्णो भिद्यते मन्त्रः' इति नीत्यनुसारिणी ।

विदूषकः—राज्ञो नर्मसचिवकल्पो वयस्यः, तल्लक्षणमुक्तं साहित्यदर्पणे—

'कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः ।
हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः' ।।

यदृच्छाकृतप्रतिकृतिः अपृथक्प्रयत्ननिर्वर्त्तितचित्रा । प्रत्यक्षदर्शना साक्षादक्षि-

---

अनुराग नहीं पैदाकर पाया है ऐसे अचिरासादितराज्य शत्रुको आसानीसे उखाड़ फेंका जा सकता है ॥ ८ ॥

राजा—तब तो नीतिकारका कहना ठीक ही है। इसी बहाने सेनापतिको भिड़ा दीजिये ।

अमात्य—जो आज्ञा । ( जाता है )

( परिजन यथाव्यापार राजाके समीपमें रह जाते हैं )

विदूषक—( प्रवेश करके ) राजाकी आज्ञा है-'गौतम, भाग्यवश मालविकाका चित्र देखनेको मिल गया, अब उसे प्रत्यक्ष रूपसे देखकर आंखें जुड़ा सकूं ऐसा

दृष्टप्रतिकृतिर्मालविका प्रत्यक्षदर्शना भवतीति । मया च तत्तथा कृतं तावदस्मै निवेदयामि । ]

राजा—( विदूषकं दृष्ट्वा । ) अयमपरः कार्यान्तरसचिवोऽस्मानुपस्थितः ।

विदूषकः—( उपगम्य । ) वड्ढदु भवं । [ वर्धतां भवान् । ]

राजा—( सशिरःकम्पम् । ) इत आस्यताम् ।

( विदूषक उपविष्टः । )

राजा—अपि कच्चिदुपेयोपायदर्शने व्यापृतं ते प्रज्ञाचक्षुः ।

विदूषकः—पओअसिद्धिं पुच्छ । [ प्रयोगसिद्धिं पृच्छ । ]

---

विषयः । तथा कृतम् उपायश्चिन्तित इत्यर्थः । अत्र गम्यमान राज्ञो मालविकादर्शनौत्सुक्यं तदारम्भो नाम प्रथमावस्थेति ज्ञेयम् । अत्र बीजारम्भयोः समन्वयान्मुखसन्धिश्च बोध्यः । अयम् विदूषकः । अपरः अन्यः । कार्यान्तरसचिवः अन्यस्मिन् रहस्यभूते मालविकासाक्षात्करणरूपे सचिवः साहाय्यकरः ।

सशिरःकम्पम् शिरःकम्पः शिरश्चालनम् तेन सह । शिरश्चालनं च तत्कृताशीर्वादग्रहणसूचनाय ।

उपेयोपायदर्शने—उपेयस्य प्राप्यस्य प्रियाप्रत्यक्षदर्शनस्य उपायदर्शने साधननिश्चये ते प्रज्ञाचक्षुः प्रतिभादृष्टिः कच्चित् ईषदपि व्यापृतम् प्रसृतम् । अपिरत्र प्रश्ने। अत्र गम्यमानस्य मालविकारूपस्य बीजस्योपन्यासादुपक्षेपो नाम सन्ध्यङ्गमुक्तं भवति ॥

---

उपाय सोचो' । मैंने भी वैसा प्रबन्ध कर दिया है, अब उन्हें सूचना दे दूँ। ( कुछ चलकर )

राजा—(विदूषकको देखकर) यह हमारे दूसरे कार्यके सहायक सचिव आ रहे हैं।

विदूषक—( समीप जाकर ) जय हो महाराजकी ।

राजा—( सिर हिलाकर ) यहाँ बैठो ।

( विदूषक बैठ जाता है )

राजा—तुम्हारी बुद्धिने कुछ उपाय सोचा ?

विदूषक—कार्यसिद्धिके बारेमें पूछिये, उपाय क्या पूछ रहे हैं ।

राजा—कथमिव ।

विदूषकः—( कर्णे । ) एव्वमिव[1]। [ एवमिव । ]

राजा—साधु वयस्य, निपुणमुपक्रान्तम् । इदानीं दुरधिगमसिद्धावप्यस्मिन्नारम्भे वयमाशंसामहे । कुतः

अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव ।
दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥ ९ ॥

---

प्रयोगसिद्धिम्—उपायपरिणतिम् । पृच्छ जिज्ञासस्व । उपायसिद्धौ जातायामुपायप्रश्नो वृथेति भावः । अत्रोपायस्याव्यभिचरितसिद्धिताविश्वासकृतेयं निर्भरोक्तिः ।

एवमिव विद्याप्रकर्षविषये गणदासहरदत्तयोर्विरोध उत्पादितः, गणदासश्च स्वप्रकर्षप्रमापणाय राजसमीपे स्वशिष्याया मालविकाया अभिनयं कारयिष्यतीति राजमनोरथोऽनायाससिद्ध इति विदूषकोक्तिरूहनीया ।

निपुणमुपक्रान्तम् साधुकृतम् । दुरधिगमसिद्धौ अत्यन्तदुर्लभसाफल्ये ( देव्याः प्रतिबन्धकतया दुर्लभसिद्धितोक्ता ) अस्मिन्नारम्भे त्वया प्रक्रान्ते उपाये । सिद्धिम् साफल्यम् । आशंसामहे सम्भावयामः ॥

अर्थं सप्रतिबन्धमिति । सहायवान् सहायकोपेतः एव जनः सप्रतिबन्धं सविघ्नम् अर्थं वस्तु अधिगन्तुं समासादयितुं प्रभुः समर्थः । प्रतिबन्धकसद्भावेऽभीष्टावाप्तिः सहायकापेक्षैवेत्यर्थः । अमुमेवार्थं व्यतिरेकिदृष्टान्तेनोपपादयति—दृश्यमिति । सचक्षुः चक्षुष्मानपि जनः दीपेन विना आलोकमन्तरेण तमसि अन्धकारे दृश्यम् दर्शनयोग्यम् घटादिवस्तु न पश्यति नेक्षते, आलोकसहकृतस्यैव चक्षुषः प्रत्यक्षं प्रति कारणतया तमसि प्रत्यक्षोपयोग्यालोकस्य दीपमात्रोपपादनीयत्वात । तव साहाय्येनैवाहं मालविकां प्रत्यक्षीकर्तुमीशिताह इति प्रसङ्गसङ्गतोऽर्थः । अत्र दृष्टान्तालङ्कारोऽप्रस्तुतप्रशंसया सङ्कीर्यते । 'इदानी'मित्यादिना 'सहायवान' इत्यन्तेन तस्य बीजस्य बहुलीकरणात् परिकरो नाम सन्ध्यङ्गमुक्तं भवति । आर्या वृत्तम् ॥

---

राजा—कैसे ?

विदूषक—( कानमें ) इस तरह । ( ऐसे कहता है )

राजा—वाह दोस्त, खूब किया । यह कार्य है तो कठिन, किन्तु अब आशा की जा सकती है, क्योंकि सहायकसम्पन्न जन ही किसी विघ्नयुक्त कार्यका सम्पादन कर सकते हैं । आँखोंके रहते भी अन्धकारमें वर्त्तमान किसी चीजको दीपकी सहायता से ही देखा जा सकता है ॥ ९ ॥

( नेपथ्ये । )

अलं बहु विकत्थ्य । राज्ञः समक्षमेवावयोरधरोत्तरयोर्व्यक्तिर्भविष्यति ।

राजा—( आकर्ण्य । ) सखे, त्वत्सुनीतिपादपस्य पुष्पमुद्भिन्नम् ।

विदूषकः—फलं वि अइरेण दक्खिस्ससि । [ फलमप्यचिरेण द्रक्ष्यसि । ]

( ततः प्रविशति कञ्चुकी । )

कञ्चुकी—देव, अमात्यो विज्ञापयति । अनुष्ठिता प्रभोराज्ञा । एतौ पुनर्हरदत्तगणदासौ

---

बहु विपुलम् । विकथ्य आत्मश्लाघां कृत्वा । अलम् वृथा । 'अलङ्खल्वोः प्रतिषेधयोः प्राचां क्त्वा' इति क्त्वाप्रत्ययः । गुणप्रकर्षापकर्षयोः परीक्षकसाक्षि-प्रत्याय्यत्वादिति भावः । राज्ञः समक्षं राज्ञः सविधे । अधरोत्तरयोः नीचोच्चयोः । अभिव्यक्तिः प्रकाशः । राजैवावयोः कोटिमवधारयिष्यतीति भावः । सुनीतिपादपस्य नीतिप्रयोगतरोः । नीतिश्चात्र मालविकादर्शनोपायः, स च हरदत्तगणदासयोर्विद्याक-लहोत्पादनरूपोऽवगन्तव्यः । पुष्पम् ईषदुद्भेदरूपः प्रथमः प्रकाशः । उद्भिन्नम् प्रकटीभूतम् । फलोन्मुखस्ते प्रयास इत्याशयः । परम्परितरूपकमलङ्कारः ।

फलम् मालविकासाक्षात्काररूपम् । अचिरेण शीघ्रतया । अत्र बीजस्य दृढीकरणात् परिन्यासो नाम सन्ध्यङ्गमुक्तम् ।

कञ्चुकी अन्तःपुरस्त्रीणां रक्षणावेक्षणाधिकृतो वर्षीयान् ब्राह्मणजातिः परिजनः ।

तदुक्तम्—'अन्तःपुरचरो विप्रो वृद्धो गुणगणान्वितः ।
सर्वशास्त्रार्थकुशलः कञ्चुकीत्यभिधीयते' ॥

अमात्यः मन्त्री । विज्ञापयति सूचयति । प्रभोः महाराजस्य । आज्ञा आदेशः । अनुष्ठिता चरितार्थतां गमिता । वक्तव्यान्तरमारभते—एतौ पुनरिति ।

---

( नेपथ्यमें ) ज्यादे अपनी तारीफ मत करो । राजाके सामने ही हम दोनोंमें कौन बड़ा है ? इसका फैसला होगा ।

राजा—( सुनकर ) मित्र, तुम्हारे नीतिवृक्षमें फूल लगने लगे ।

विदूषक—शीघ्र ही फल भी दिखा देगा ।

( कञ्चुकीका प्रवेश )

कञ्चुकी—महाराज, मन्त्रीजीने कहा है कि आदेशका पालन कर दिया गया और यह हरदत्त और गणदास आये हुए हैं ।

उभावभिनयाचार्यौ परस्परजयैषिणौ ।
त्वां द्रष्टुमुद्यतौ साक्षाद्भावाविव शरीरिणौ ॥ १० ॥

राजा—प्रवेशय तौ ।

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रम्य ताभ्यां सह प्रविश्य । ) इत इतो भवन्तौ ।

गणदासः—( राजानं विलोक्य । ) अहो, दुरासदो राजमहिमा ।

न च न परिचितो न चाप्यरम्य-
श्चकितमुपैमि तथापि पार्श्वमस्य ।

---

उभाविति । उभौ द्वौ अभिनयाचार्यौ नृत्यगीतादिशिक्षाऽधिकृतौ परस्परम् अन्योन्यम् जयैषिणौ पराभिभवेच्छाशालिनौ साक्षात् प्रत्यक्षम् मूर्तिमन्तौ शरीरिणौ भावौ नृत्यगीतादिपदार्थौ इव त्वाम् द्रष्टुम् अवलोकयितुम् उद्यतौ उद्युक्तौ ( तेनात्र समागतावित्यर्थः) उत्प्रेक्षालङ्कारेणाचार्ययोर्नृत्यादिष्वसाधारणं पटुत्वं वस्तु ध्वन्यते ॥१०॥

प्रवेशय प्रवेष्टुमनुमन्यस्व । तौ हरदत्तगणदासौ ।

इत इतः अनेनानेन मार्गेण । सार्वविभक्तिकस्तसिः । आगच्छतमिति शेषः ।

दुरासदः दुरापः । राजमहिमा राजप्रभावः ।

न च न परिचित इति । अयम् एष राजाग्निमित्रः न परिचितः न विज्ञातः इति न अपि तु चिरपरिचित एव । सम्भाव्यमाननिषेधप्रतिषेधार्थं नञ्द्वयं प्रयुक्तम्, 'द्वौ नञौ प्रकृतार्थं गमयतः' इत्युक्तेः । अरम्यः असौम्यदर्शनोऽपि न अस्तीति शेषः । परिचितत्वरम्यदर्शनत्वयोर्विरहो हि चाकित्यप्रयोजकः, तदुभयमपि विद्यत एवात्रेत्यर्थः। तथापि अस्य राज्ञः पार्श्वम् अन्तिकम् चकितम् भीतम् उपैमि उपगच्छामि । अस्य

---

दोनों नाट्याचार्य एक दूसरेकी जयके इच्छुक हैं, आपके दर्शनार्थ उपस्थित हैं, मालूम पड़ता है शरीरधारी नाट्यकला ही हों ॥ १० ॥

राजा—उन्हें बुलाओ ।

कन्चुकी—जो आज्ञा । ( बाहर जाकर उन दोनोंके साथ प्रवेश करता है ) आप दोनों इधर आवें ।

गणदास—( राजाको देखकर ) अहा, राजाका प्रभाव कितना दुर्धर्ष है, राजा हमारे लिये अपरिचित नहीं हैं, सौम्यदर्शन भी हैं, फिर भी इनके समीप जाते

सलिलनिधिरिव प्रतिक्षणं मे
भवति स एव नवो नवोऽयमक्ष्णोः ॥ ११ ॥

हरदत्तः—महत्खलु पुरुषाकारमिदं ज्योतिः । तथा हि

द्वारे नियुक्तपुरुषाभिमतप्रवेशः
सिंहासनान्तिकचरेण सहोपसर्पन् ।
तेजोभिरस्य विनिवर्तितदृष्टिपातै-

---

समीपमुपेत्य चकितो भवामीत्याशयः । एतेनास्य महाप्रभावत्वं व्यञ्जितम् । स एव पूर्वतो दृष्ट एव सः राजा सलिलनिधिः सागर इव प्रतिक्षणम् क्षणे क्षणे मे मम अक्ष्णोः नवः नवः नित्यनूतन इव भवति प्रतिभासते । अत्र पूर्वार्द्धे भयहेत्वोरपरिचितत्वारम्यत्वयोरभावेऽपि भयोत्पत्तिवर्णनाद्विभावना, सलिलनिधिरिवेत्युपमा, नवो-नव इति प्रतीयमानोत्प्रेक्षा चेत्यमीषां संसृष्टिः । पुष्पिताग्रा वृत्तम् । 'पार्श्वमन्तिके' इति हैमः ॥ ११ ॥

इदम् पुरतो दृश्यमानम् । पुरुषाकारम् नरमूर्त्तिधरम् । महत् परमोत्कृष्टम् । ज्योतिः तेजः नायं राजा पुरुषः किन्तु सुमहान् प्रभाराशिरेवेत्याशयः ।

द्वार इति । द्वारे द्वारदेशे नियुक्तपुरुषेण अधिकृतेन पुंसा दौवारिकेणेत्यर्थः अभिमतः अनुज्ञातः प्रवेशः अभ्यन्तरगमनं यस्य तादृशः दौवारिकेण गन्तुमुक्तोऽपीति यावत् । 'प्रतियोगिपदादन्यत् यदन्यत्कारकादपि । वृत्तिशब्दैकदेशार्थे न तस्यान्वय इष्यते' ॥ ······ इत्युक्त्या द्वारे इत्यधिकरणकारकस्य नित्यसापेक्षत्वे न समासः । तथा सिंहासनस्य राजासनस्य अन्तिकचरेण राज्ञः परिचारकत्वेऽधिकृततया समीपवर्त्तिना कञ्चुकिनेत्यर्थः । सह उपसर्पन् राजान्तिकमुपगच्छन् । अनेन विशेषणद्वयेन निवारणहेत्वभावः साधु समर्थितः । ( तथापि अनुमतिप्राप्तिकञ्चुकिसाहचर्ययोः प्रमितयोरपि ) विनिवर्त्तितदृष्टिपातैः निवारितदृष्टिप्रसारैः अतिप्रभाभासुरतया दृष्टिप्रतिघातिभिरिति यावत् । अस्य राज्ञस्तेजोभिः प्रभाभिः वाक्यादृते

---

**समय चकित होना पड़ता है। यह हमारी आँखोंके लिये महासमुद्र की तरह प्रतिक्षण नूतन प्रतीत होते हैं ॥ ११ ॥**

**हरदत्त—पुरुषके रूपमें यह बड़ा भारी तेजोराशि हैं। कारण, द्वारपालने हमें प्रवेशानुमति दी है, सिंहासनके समीप सदा रहनेवाला हमारे साथ चल रहा**

वाक्याहते पुनरिव प्रतिवारितोऽस्मि ॥ १२ ॥

कञ्चुकी—एष देवः । उपसर्पतां भवन्तौ ।

उभौ—( उपेत्य । ) विजयतां देवः ।

राजा—स्वागतं भवद्भ्याम् । ( परिजनं विलोक्य । ) आसने तावदत्रभवतोः ।

( उभौ परिजनोपनीतयोरासनयोरुपविष्टौ । )

राजा—किमिदं शिष्योपदेशकाले युगपदाचार्याभ्यामत्रोपस्थानम् ।

---

'माऽऽगमः' इति निषेधवाक्यं विनैव पुनर्भूयः प्रतिवारितः निरुद्ध इव अस्मि । एतेनात्यन्तदुरासदत्वनिवेदनेन प्रभावातिशयः सूच्यते । अत्र प्रतिवारित इवेति वाच्या क्रियोत्प्रेक्षाऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥ १२ ॥

उपसर्पताम् समीपं गच्छताम् । लोटो द्विवचने रूपम् ।

स्वागतं भवद्भ्यामित्यत्र क्रियाग्रहणात् संप्रदानत्वम् ।

'आसने' इत्यस्य उपनय इत्याक्षिप्तया क्रिययाऽन्वयः । अत्रभवतोः माननीययोः हरदत्तगणदासयोः ॥

शिष्योपदेशकाले शिक्षाप्रदानार्थं निर्धारिते काले । युगपद् एकदैव । उपस्थानम् अत्रागमनम् । आश्चर्यकरमिदं यद्भवतोरसमयेऽत्रागमनमिति भावः । मया गणदासेन । सुतीर्थात् प्रसिद्धादध्यापकात् तदाख्याद्वाऽध्यापकात् । 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु' इति मेदिनी । 'आख्यातोपयोगे' इत्यपादानसंज्ञा । 'सुतीर्थादिति' नाम्ना पञ्चम्या च स्वविद्यायाः सम्प्रदायशुद्धिर्व्यञ्जिता । दत्तप्रयोगः शिष्येभ्यो दत्ताभिनयशिक्षः । एतेनाभ्याससम्भवो ध्वनितः, देवेन भवता देव्या धारिण्या च परिगृहीतः योग्यत्वेन शिक्षणाधिकृततया सम्मानितः । अनेनाश्रयगौरवप्रयु-

---

है, फिर भी आँखोंको चकाचौंधमें डाल देनेवाले इसके तेजसे विना वाक्य प्रयोगके निवारित किया जा रहा हूँ, ऐसा लग रहा है ॥ १२ ॥

कञ्चुकी—यही महाराज हैं, आप समीप जावें ।

दोनों—( समीप जाकर ) जय हो महाराजकी ।

राजा—आप लोगोंका स्वागत है । ( परिजनकी ओर देखकर ) इनके आसन ?

( दोनों परिजनद्वारा दिए गये आसनोंपर बैठते हैं )

राजा—शिष्योंको उपदेश देनेके समय आप लोग यहाँ कैसे पधारे ?

गणदासः—देव, श्रूयताम्। मया सुतीर्थादभिनयविद्या सुशिक्षिता। दत्तप्रयोगश्चास्मि। देवेन देव्या च परिगृहीतः।

राजा—बाढं जाने। ततः किम्।

गणदासः—सोऽहममुना हरदत्तेन प्रधानपुरुषसमक्षमयं मे न पादरजसापि तुल्य इत्यधिक्षिप्तः।

हरदत्तः—देव, अयमेव प्रथमं परिवादकरः। अत्रभवतः किल मम च समुद्रपल्वलयोरिवान्तरमिति। तदत्रभवानिमं मां च शास्त्रे प्रयोगे च विमृशतु। देव एव नौ विशेषज्ञः प्राश्निकः।

---

त्प्रकर्षाभावशङ्कानिरासोऽवगम्यते। बाढं जाने साधु वेद्मि। भवन्तं पूर्णतया परिचिनोमीत्यर्थः। ततः किम्—आभिः परिचयप्रदाभिर्विज्ञापनाभिरधुना किं फलमिति प्रश्नः।

प्रधानपुरुषसमक्षम्—अमात्यादिश्रेष्ठराजपुरुषेषु शृण्वत्सु। पादरजसा चरणधूल्या। अधिक्षिप्तः तिरस्कृतः। प्रधानपुरुषसमक्षमित्युक्त्याऽऽक्षेपस्य प्रमापणयोग्यतावृत्तिच्छेदप्रयोजकत्वसंभावनया भयङ्करता चावेद्यते।

अयमेव गणदास एव। परिवादकरः कुत्साकारी। अत्रभवतः माननीयस्य, सोल्लुण्ठोक्त्यभिप्रायेण आत्मानं माननीयत्वेनाभिमन्यमानस्येत्यर्थः। पल्वलः—क्षुद्रजलाशयः, 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः। अन्तरम् भेदः। समुद्रपल्वलयोर्यावदन्तरं रूपमहत्त्वगाम्भीर्यादौ तावदेवान्तरं मम हरदत्तस्य च विद्यायामिति निन्दां प्रथमं गणदास एव व्याहरदिति भावः। तत् तस्मात्। इमम् गणदासम्। माम् हरदत्तम्। शास्त्रे भरतमतङ्गादिविरचिते नाट्यशास्त्रे। प्रयोगे अभिनयकर्मणि। विमृशतु विचारयतु। इमं माञ्च परीक्ष्य उत्कर्षापकर्षौ व्यवस्थापयतु' इति भावः। नौ आवयोः। विशेषज्ञः भेदज्ञाता तारतम्यव्यवस्थाकरः। प्राश्निकः प्रश्नं कृत्वा कोटि-

---

गणदास—महाराज, मैंने 'सुतीर्थ'से अभिनयविद्या सीखी, प्रयोग दिखाये, आपकी और देवीकी भी कृपाका पात्र रहा।

राजा—यह तो मैं जानता ही हूँ इसके आगे?

गणदास—हरदत्तने मुझे अधिकारियोंके सामने यह कहकर धिकारा है कि 'यह तो हमारी पदधूलिके समान भी नहीं है'।

हरदत्त—इन्होंने ही पहले शिकायत की, कहा कि-इनमें और हममें समुद्र और गढहाका-सा अन्तर है'। अब आप हमें और इन्हें शास्त्र तथा प्रयोगमें जांच लें। आप ही हमारे परीक्षक हैं।

विदूषकः—समत्थं पइण्णादं । [ समर्थं प्रतिज्ञातम् । ]

गणदासः—प्रथमः कल्पः । अवहितो देवः श्रोतुमर्हति ।

राजा—तिष्ठ तावत् । पक्षपातमत्र देवी मन्यते । तदस्याः पण्डित-कौशिकीसहितायाः समक्षमेव न्याय्यो व्यवहारः ।

विदूषकः—सुट्ठु भवं भणादि । [ सुष्ठु भवान्भणति । ]

आचार्यौ—यद्देवाय रोचते ।

---

निर्धारकः । समर्थम् सम्बद्धम्, युक्तिसङ्गतमित्यर्थः । प्रतिज्ञातम् अङ्गीकृतम् । उभयो-रुत्कर्षापकर्षनिश्चयस्य प्रकारे हरदत्तेन यदुक्तं तदात्ममात्रहिततयानादरणीयं नेत्याशयः । प्रथमः कल्पः मुख्यः पक्षः, राज्ञो मध्यस्थता सर्वप्रथममभीष्टेति भावः । अवहितः दत्तावधानः ( एतद्विशेषणं निर्णयसौकर्याय, न राज्ञः प्रमादिताद्योतनायेति बोध्यम् ) श्रोतुमर्हति—आकर्णयितुं युज्यते, आवयोः सङ्गीतमिति शेषः ।

तिष्ठ तावत् किञ्चित्कालपर्यन्तं प्रतीक्षस्व । अत्र विवादनिर्णये । देवी धारिणी । पक्षपातम् एकतरपक्षेऽनुचितं स्नेहम् । अस्याः देव्याः । समक्षम् पुरतः । न्याय्यः न्यायादनपेतः युक्त इति यावत् । व्यवहारः विवादनिर्णयः । अत्र कात्यायनः—'विनार्थेऽवसन्देहे हरणं हार उच्यते । नानासन्देहहरणाद् व्यवहार इति स्मृतः ॥' एतेन वादिप्रतिवादिनोः प्रश्नोत्तरादिना सदसद्विवेचनेन जयपराजयसम्पादको विचारापरपर्यायो व्यापारविशेषो व्यवहारपदार्थ इति फलितम् ।

सुष्ठु समीचीनम् । भवान् भणति देव आज्ञापयति । समक्षं देव्या व्यवहारो ममाप्यभिमत इत्यर्थः ।

आचार्यौ—हरदत्तगणदासौ ।

---

विदूषक—उचित कहा ।

गणदास—ठीक है, आप सावधान होकर सुनें ।

राजा—ठहरिये, इसमें देवीको पक्षपात मालूम पड़ेगा । इसलिये पण्डित-कौशिकी और देवीके सामने ही निर्णय हो ।

विदूषक—आप ठीक कहते हैं।

आचार्यद्वय—जो आपको ठीक जंचे ।

राजा—मौद्गल्य, अमुं प्रस्तावं निवेद्य पण्डितकौशिक्या सार्धमाहूयतां देवी।

कञ्चुकी—यदाज्ञापयति देवः। ( इति निष्क्रम्य सपरिव्राजिकया देव्या सह प्रविष्टः। ) इत इतो भवती।

धारिणी—( परिव्राजिकां विलोक्य। ) भअवदि, हरदत्तस्स गणदासस्स अ संरम्भं कहं पेक्खसि। [ भगवति, हरदत्तस्य गणदासस्य च संरम्भे कथं पश्यसि। ]

परिव्राजिका—अलं स्वपक्षावसादशङ्कया। न परिहीयते प्रतिवादिनो गणदासः।

---

मौद्गल्येति कञ्चुकिनो नाम, तच्च तदाख्यगोत्रजातम्। अमुं प्रस्तावम् हरदत्तगणदासयोरिमं विवादवृत्तान्तम्। निवेद्य विज्ञाप्य।

परिव्राजिका पण्डितकौशिकी तया सहितया देव्या धारिण्या सह सार्धम्। भवती धारिणी।

संरम्भे स्पर्द्धाजनिते विवादे। कथं प्रेक्षसे कं प्रकारं पश्यसि, कस्य जयं तर्कयसीत्यर्थः।

स्वपक्षावसादशङ्कया स्वनियुक्तत्वात् स्वपक्षः गणदासस्तस्यावसादः पराजयस्तच्छङ्कया तदातङ्केन। प्रतिवादिनः विवदमानात् हरदत्तात्। न परिहीयते न न्यूनो भवति। परिव्राजिकायाः स्त्रिया अपि संस्कृतं भाषा, तथा चोक्तम्—'संस्कृतं सम्प्रयोक्तव्यं लिङ्गिनीषूत्तमासु च'। लिङ्गिनी परिव्रज्याचिह्नभूतकाषायवसनादिधारिणी। एवम्—यथा भवत्योक्तम् 'न हीयते प्रतिवादिनो गणदासः' इति। अस्य हरदत्तस्य

---

राजा—मौद्गल्य, इस प्रस्तावकी सूचना देकर पण्डित—कौशिकीके साथ देवीको बुला लाओ।

कञ्चुकी—जो आज्ञा। ( जाता है और परिव्राजिका तथा देवीके साथ आता है ) इधर चला जाय, इधर।

धारिणी—( परिव्राजिकाको देखकर ) भगवति, हरदत्त और गणदासके विवादमें क्या आपको मालूम पड़ता है?

परिव्राजिका—अपने पक्षके हारनेकी शङ्कासे कातर न हों। गणदास अपने प्रतिस्पर्द्धीसे हीन नहीं हैं।

धारिणी—जइ वि एवं तह वि राअपरिग्गहो पहाणत्तणं उवहरदि ।
[ यद्यप्येवं तथापि राजपरिग्रहः प्रधानत्वमुपहरति । ]

परिव्राजिका—अयि, राज्ञीशब्दभाजनमात्मानमपि चिन्तयतु भवती । पश्य

अतिमात्रभासुरत्वं पुष्यति भानोः परिग्रहादनलः ।
अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः ॥ १३ ॥

विदूषकः—अइ, उअट्ठिदा देवी पीठमद्दिअं पण्डिअकोसिइं पुरोकरिअ तत्तभोदी धारिणी । [ अयि, उपस्थिता देवी पठिमर्दिकां पण्डितकौशिकीं पुरस्कृत्य तत्रभवती धारिणी । ]

---

राजपरिग्रहः राजकर्तृकः शिक्षाऽधिकारे नियोगः । प्रधानत्वम् प्रामुख्यम् । उपहरति उपपादयति । लोकाः खलु प्रभुकृपाभाजनस्य पुरुषस्याविद्यमानमपि प्रामुख्यं विद्यमानतयाऽभ्युपयन्तीति भावः । 'परिग्रहः कलत्रेऽपि मूलस्वीकारयोरपी' ति मेदिनी ।

राज्ञीशब्दभाजनम् राज्ञीपदप्रयोगपात्रम्, राज्ञीशब्दाभिधेयमित्यर्थः । चिन्तयतु विभावयतु ।

अतिमात्रेति । अनलो वह्निः भानोः भास्करस्य परिग्रहात् स्वायत्तीकरणात् निशि सूर्यस्य 'आदित्यो नक्तमग्निं संक्रमते' इत्युक्तेः सङ्क्रमादित्यर्थः । अतिमात्रभासुरत्वम् दिनगतवह्नयपेक्षया समधिकप्रभाशालित्वं पुष्यति धारयति । तथा निशया रात्र्या परिगृहीतः स्वीकृतः चन्द्रः चन्द्रमाः अपि महिमानम् दिवातनचन्द्रापेक्षया महोज्ज्वलत्वम् अधिगच्छति प्राप्नोति । यथा राज्ञा भवती सर्वाधिकारपूर्णा तथा भवत्या राजापि कृतार्थ इति युवयोस्तुल्यः प्रभावस्ततश्च यथा राज्ञा नियुक्तत्वाद्धरदत्तस्य प्राधान्यमुत्प्रेक्षसे तथा भवत्याः परिग्रहाद् गणदासस्यापि प्राधान्यमुत्प्रेक्षितुं मुशकमिति मा तथोत्प्रेक्षिष्ठाः, 'यश्चोभयोः समो दोषः परिहारोऽपि तादृशः । नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे॥' इति न्यायादिति भावः । समादप्रस्तुतात् समस्य प्रस्तुतस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः । आर्या जातिः ॥ १३ ॥

पीठमर्दिका शृङ्गारसहायिका, 'पीठमर्दः समीपस्थः कार्यालोचनकोविदः ।' इति

---

धारिणी—यह तो ठीक है, किन्तु राजाका आश्रय इसे प्रामुख्य प्रदान करेगा ।

परिव्राजिका—आप अपनेको भी रानी समझें, देखें—

अग्नि रात्रिमें सूर्यके मिलजानेके कारण यदि अधिक तेजस्वी हो जाता है तो चन्द्रमाकी शोभा भी रात्रिके समागमसे ही बढ़ जाती है ॥ १३ ॥

विदूषक—अहा ! पण्डितकौशिकीको साथ लेकर महारानी आ रही हैं ।

राजा—पश्याम्येनाम् । यैषा

मङ्गलालंकृता भाति कौशिक्या यतिवेषया ।
त्रयी विग्रहवत्येव सममध्यात्मविद्यया ॥ १४ ॥

परिव्राजिका—( उपेत्य । ) विजयतां देवः ।

राजा – भगवति, अभिवादये ।

परिव्राजिका—महासारप्रसवयोः सदृशक्षमयोर्द्वयोः
धारिणीभूतधारिण्योर्भव भर्ता शरच्छतम् ॥ १५ ॥

---

'दूरानुवर्त्तिनि स्यात्तस्य प्रासङ्गिकेतिवृत्ते तु । किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्दाख्यः' इति च स्मरणात् । स च पीठमर्दो यद्यपि नायकस्य पुमांश्चेत्येव प्रसिद्धम्, तथाप्यत्र विदूषकः परिहासेन परिव्राजिकायां पण्डितकौशिक्यां तं धर्ममारोपयतीति विभावनीयम् । पुरस्कृत्य अग्रे कृत्वा । तत्रभवती मान्या ।

मङ्गलालङ्कृतेति । मङ्गलं शोभनं यथा स्यात्तथाऽलङ्कृता कृतवेशविन्यासा एषा धारिणी यतेः परिव्राजकस्य वेष इव वेषः काषायादिधारणं यस्याः सा तथोक्ता तया धृतविरक्तसज्जया कौशिक्या समं सह विग्रहवत्या शरीरिण्याऽध्यात्मविद्यया उपनिषद्विद्यया ( समम् ) त्रयी वेदत्रयी इव भाति प्रकाशते । यथाऽध्यात्मविद्यया त्रय्याः शोभा तथैव परिव्राजिकया कौशिक्या इति भावः । अत्र त्रय्यामपि वचनविपरिणामेन विग्रहवतीति योजनीयम् । 'स्त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी' इत्यमरः । शेषं स्पष्टम् ॥ १४ ॥

अभिवादये प्रणमामि भवतीमिति शेषः ।

महासारेति । शरच्छतं शतं वर्षाणि यावत्, अत्यन्तसंयोगे द्वितीया । महान् सारो बलं स्थिरांशश्च येषां ते महासाराः, महासाराः प्रसवाः अपत्यानि सस्यादिफलानि च ययोस्तयोर्महासारप्रसवयोः । सदृशी तुल्यरूपा क्षमा सहिष्णुता ययोस्तयोः सदृशक्षमयोः द्वयोः उभयोरेव धारिणीभूतधारिण्योः धारिणी देवी भूतधारिणी भूत-

---

राजा—देवीको देखरहा हूँ, जो यह —

परिव्राजिकाके वेशमें सन्निहित कौशिकीके साथ मङ्गलालङ्कारोंसे युक्त देवी अध्यात्मविद्यासे युक्त वेदत्रयीके समान प्रतीत हो रही हैं ॥ १४ ॥

परिव्राजिका—( समीप आकर ) जय हो महाराजकी ।

राजा—भगवति, अभिवादन करता हूँ ।

परिव्राजिका—महोन्नत सन्तति और सस्यसमृद्धिको देनेवाली तुल्यक्षमा, धारिणी और पृथिवी, दोनोंके आप सौ वर्षों तक स्वामी बने रहें ॥ १५ ॥

धारिणी—जेदु जेदु अज्जउत्तो । [ जयतु जयत्वार्यपुत्रः । ]

राजा—स्वागतं देव्यै । ( परिव्राजिकां विलोक्य । ) भगवति, क्रियतामासनपरिग्रहः ।

( सर्वं उपविशन्ति । )

राजा—भगवति, अत्रभवतोर्हरदत्तगणदासयोः परस्परं विज्ञानसंघर्षिणोर्भगवत्या प्राश्निकपदमध्यासितव्यम् ।

परिव्राजिका—( सस्मितम् । ) अलमुपालम्भेन । पत्तने सति ग्रामे रत्नपरीक्षा ।

---

धात्री पृथ्वी च तयोर्भर्त्ता पतिर्भव । अत्र धारिण्या भर्त्ता विवाहनिबन्धनः पतिर्भूतधारिण्या भर्त्ता तु परिपालयितेति सत्यपि भेदे श्लेषणाभेदाध्यवसायमूलातिशयोक्तिः । लिङ्गसामान्याद् भूतधारिणीभर्त्रोः पत्नीपतिव्यवहारसमारोपणात्समासोक्तिश्चालङ्कारौ । तृतीयपादे धारिधारीति च्छेकानुप्रासः । एतेषां संसृष्टिः । 'सारो बले स्थिरांशे च' इत्यमरः । 'अपत्योत्पादयोः पुष्पे फले च प्रसवो मतः' इति चाजयः ॥ १५ ॥

विज्ञानसङ्घर्षिणोः नृत्यादिविषयकज्ञानेऽहं श्रेष्ठोऽहं श्रेष्ठ इति स्पर्द्धाशालिनोः । प्राश्निकपदम् परीक्षकस्थानम् । अध्यासितव्यम् आश्रयणीयम् । भवत्येव विचार्य कोटिनिर्धारणार्थं प्रश्नांश्च कृत्वाऽनयोर्विवादे कोटिं निर्णीय तं शमयत्विति भावः ।

उपालम्भेन तिरस्कारेण । ममेति शेषः । भवादृशे विचारकर्तृतया प्रथिते गुणज्ञे तिष्ठति मादृश्यामीदृशविचारभारोपन्यासस्तत्परिहासमात्रं जनयेदतस्तथा मा कृथा इत्यर्थः । स्वोक्तं समर्थयति पत्तने सतीति । पत्तने नगरे सति विद्यमाने ग्रामे अनागरिकजनवसतिभूतायां सामान्यपुरि रत्नानाम् मरकतादीनाम् परीक्षा कोटिनिर्धारणम् । ( भवति किम् ) काक्वा प्रश्नपरिणतिः । रत्नगुणदोषपरिच्छेत्तृजनाध्युषितं नगरमपहाय रत्नदर्शनवञ्चितपामरजननिवासभूते ग्रामे रत्नपरीक्षा तद्ग्रामवासिनामु-

---

धारिणी—आर्यपुत्रकी जय हो, जय हो ।

राजा—स्वागत हो देवीका । ( परिव्राजिकाको देखकर ) भगवति, आसन ग्रहण कीजिये । ( सभी बैठते हैं )

राजा—भगवति, हरदत्त और गणदासके बीच ज्ञानकी उत्कृष्टताके विषयमें परस्पर बिवाद उपस्थित है, आप परीक्षक बनें ।

परिव्राजिका—( जरा हंसकर ) क्यों बेकार निन्दा करते हैं ? क्या शहरके रहते गवंई-गाँवमें रत्नकी परीक्षा की जाती है ?

राजा—नैतदेवम्। पण्डितकौशिकी खलु भगवती, पक्षपातिनावहं देवी च।

आचार्यौ—सम्यगाह देवः। मध्यस्था भगवती नौ गुणदोषतः परिच्छेत्तुमर्हति।

राजा—तेन हि प्रस्तूयतां विवादः।

---

पहासमात्रं प्रसारयति यथा तथैव भवत्युपस्थिते मयाऽनयोः परीक्षाऽपि ममोपहासाय जायेतेति सरलार्थः। नगरलक्षणमाह रघुनाथः—
'देवतायतनैश्चित्रैः प्रासादापणवेश्मभिः। नगरं दर्शयेद्विद्वान् राजमार्गैश्च शोभनैः॥'
ग्रामलक्षणमप्युक्तं मार्कण्डेयपुराणे—
'तथा शूद्रजनप्राया सुसमृद्धकृषीवला। क्षेत्रोपयोगिभूमध्ये वसतिर्ग्रामसंज्ञिका॥'

एतत् मदुक्तम्, एवम् भवत्यास्तिरस्कारकरन्न, अयोग्ये योग्यजनसाध्यकार्योपपाद्यभारस्य तत्परिहासपर्यवसायित्वाद्भवत्याश्च योग्यतमत्वादिति भावः। स्वोक्तं समर्थयितुमाह—पण्डितकौशिकीति। ननु स्यामहं पण्डितकौशिकी, तथापि परीक्षाकार्ये भवानेवाधिकारी, बाल्यादेव न्यायाधिकृतत्वादत्राह—पक्षपातिनावहमिति। एतेन स्वस्य देव्याश्च परीक्षकत्वायोग्यतोक्ता। पक्षपातित्वञ्च स्वस्वनियुक्तजनस्नेहप्राचुर्यकृतं कल्पनीयम्। अत्र राज्ञो निर्णायकत्वे मालविकोपस्थितिं प्रति किञ्चिद्ब्रुवाणे राजनि देवीकोपः समुदियात्, देव्यास्तथात्वे साऽनुचितमिमं विवादमेवोभौ बोधयित्वा शमयेत् तथा च प्रयासवैयर्थ्यं मनोरथभङ्गश्च। तदियं परिव्राजिकैव मध्यस्था जायतां येनाभीष्टं सिद्ध्येदिति राज्ञोऽभिसन्धिरनुसन्धेयः।

आचार्यौ हरदत्तगणदासौ। मध्यस्था आवयोः समाना। परिच्छेत्तुम् विचारयितुम् कतरः श्रेष्ठ इति निर्णेतुम् इत्यर्थः।

प्रस्तूयताम् प्रवर्त्यताम्, आचार्याभ्यामिति शेषः। विवादः शास्त्रार्थरूपः कल-

---

राजा—नहीं यह बात नहीं है। आप विदुषी हैं, मुझे और देवीको पक्षपाती कहा जा सकता है।

आचार्यद्वय—महाराज ठीक कह रहे हैं। परिव्राजिकाजी ही मध्यस्थ बनकर हम दोनोंके गुणदोषकी परीक्षा कर दें।

राजा—आप कथोपकथन आरम्भ करें।

परिव्राजिका—देव, प्रयोगप्रधानं हि नाट्यशास्त्रम् । किमत्र वाग्व्यवहारेण । कथं वा देवी मन्यते ।

देवी—जइ मं पुच्छसि, तदा एदाणं विवादो एव्व ण मे रोअदि । [ यदि मां पृच्छसि, तदैतयोर्विवाद एव न मे रोचते । ]

गणदासः—देवि, न मां समानविद्यया परिभवनीयमवगन्तुमर्हसि ।

विदूषकः—भोदि, पेक्खामो उअरंभरिसंवादं । किं मुहा वेअणदाणेण एदेणं । [ भवति, पश्याम उदरंभरिसंवादम् । किं मुधा वेतनदानेनैतेषाम् । ]

देवी—णं कलहप्पिओसि । [ ननु कलहप्रियोऽसि । ]

---

द्दः । प्रयोगप्रधानम् अभिनयप्रधानम् । वाग्व्यवहारेण वाक्कलहेन । आयुर्वेदे यथा रोगोपशमः प्रधानविषयस्तथा नाट्यशास्त्रस्यापि नृत्यं प्रधानविषयस्तदत्र वाक्कलहस्य प्रयोजनं नास्तीत्यर्थः ।

विवाद एवेति । विवादवैयर्थ्यावधारणे प्रकारचिन्ता काकदन्तपरीक्षेवानुपयुक्तेति भावः । एतेन देव्याः स्वपक्षपराजयाशङ्का व्यज्यते ।

समानविद्यतया तुल्यत्वेन । परिभवनीयम् विजेयम् । नाहं हरदत्तेन समानविद्यो यन्मम पराजयमाशङ्कसेऽपि तु प्रकृष्टविद्यत्वेन जयमेवाशंसेति भावः ।

उदरं कुक्षिं बिभृत इति उदरम्भरिणौ, तयोः संवादम् विवादवार्त्तालापम् । उदरम्भरिपदसाधुत्वे 'फले ग्रहिरात्मम्भरिश्च' ।३।२।२६ इति पाणिनीयसूत्रव्याख्याने सिद्धान्तकौमुदी—'चात् कुक्षिम्भरिः, चान्द्रास्तु 'आत्मोदरकुक्षिषु' इति पेठुः । 'ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः' इति मुरारिः' । एतेन कमपि व्याजमालम्ब्येमौ परीक्षातो विरन्तुमिच्छत इति विदूषकस्याभिसन्धिरुन्नीयते ।

कलहप्रियः, अनयोर्विवादे प्रवर्त्तयित्वे सातिशयप्रयत्नवत्त्वादिति भावः । मैवम्

---

परिव्राजिका—महाराज, नाट्यशास्त्र अभिनय प्रधान है, इसमें जबानी कथोपकथनकी क्या आवश्यकता है ? अथवा—देवीकी क्या राय है ?

देवी—यदि आप मुझे पूछती हैं तो मुझे तो इन दोनोंका विवाद ही नहीं जंचता है ।

गणदास—देवि, समानविद्य कहकर मुझे पराजयके योग्य मत समझें ।

विदूषक—इन पेटुओंका विवाद देखाजाय, व्यर्थ इन्हें क्यों वेतन मिलाकरे ?

देवी—बडे कलहप्रिय हो जी ।

विदूषकः—मा एवं चण्डि, अण्णोण्णकलहप्पिआणं मत्तहत्थीणं एक्कदरस्सिं अणिज्जिदे कुदो उवसमो। [ मैवं चण्डि, अन्योन्यकलहप्रिययोर्मत्तहस्तिनोरेकतरस्मिन्ननिर्जिते कुत उपशमः। ]

राजा—ननु स्वाङ्गसौष्ठवातिशयमुभयोर्दृष्टवती भगवती।

परिव्राजिका—अथ किम्।

राजा—तदिदानीमतः परं किमाभ्यां प्रत्याययितव्यम्।

परिव्राजिका—तदेव वक्तुकामास्मि।

श्लिष्टा क्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता।
यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव॥ १६॥

---

अहं कलहप्रिय इति कथा नास्तीत्यर्थः। अन्योन्यकलहप्रिययोः परस्परजयैषिणोः मत्तहस्तिनोः मदकरिणोः। उपशमः विवादनिवृत्तिः। अत्राप्रस्तुतप्रशंसाऽलङ्कारः। स्वाङ्गे रूपविन्यासेऽभिनयोपयुक्तरूपपरिग्रहे यत्सौष्ठवम् सौन्दर्यम् तत्रातिशयम् अतिरेकम्।

आभ्याम् हरदत्तगणदासाभ्याम्। किं प्रत्याययितव्यम् बोधनीयम्, कीदृशी परीक्षा प्रदेयेति भावः।

वक्तुं कामो यस्याः सा वक्तुकामा विवक्षुः। 'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि' इति मलोपः।

श्लिष्टेति। कस्यचित् कस्यापि क्रिया शिक्षा विद्याभ्यास इत्यर्थः। आत्मसंस्था स्वनिष्ठा सती श्लिष्टा सङ्गता। हिरण्यगर्भ इव सर्वं ज्ञानमन्तरा धत्ते न तु शिष्येष्वतारयितुं शक्नोतीत्याशयः। अन्यस्य कस्यचिदपरस्य पुरुषस्य सङ्क्रान्ति शिष्येषु क्रियासङ्क्रमणम् ( क्रमधातुरत्रान्तर्भावितण्यर्थः ) विशेषयुक्ता अतिशयशालिनी। अपरः कश्चित्किञ्चिदल्पं विदन्नपि शिक्षणयशसा प्रख्यातिमर्जयतीति तात्पर्यम्। यस्य पुरुषस्य उभयम् आत्मसिद्धिः परसङ्क्रमणं चेत्येतद्द्वयं साधु रम्यम् स पुरुष

---

विदूषक—नहीं ऐसी बात नहीं है, अन्योन्य कलहप्रिय इन मदमत्त हाथियोंमें से जब तक एक हार नहीं जाय, झगड़ा छूटनेका नहीं।

राजा—आपने इन दोनोंके अभिनय प्रयोग तो देखे हैं।

परिव्राजिका—और क्या ?

राजा—तब और इन्हें क्या बताना होगा ?

परिव्राजिका—यही तो मैं कह रही थी,—

किसीको अपना ज्ञान अधिक रहता है और किसीको पढ़ानेकी कलामें कमाल

विदूषकः—सुदं अज्जेहिं भअवदीए वअणं। एसो पिण्डितत्थो उवदेसदंसणादो णिण्णओ त्ति। [श्रुतमार्याभ्यां भगवत्या वचनम्। एष पिण्डितार्थ उपदेशदर्शनान्निर्णय इति।]

हरदत्तः—परमभिमतं नः।

गणदासः—देवि, एवं स्थितम्।

देवी—जदा उण मन्दमेधा सिस्सा उवदेसं मलिणेन्ति, तदा आअरिअस्स ण दोसो। [यदा पुनर्मन्दमेधसः शिष्या उपदेशं मलिनयन्ति, तदाचार्यस्य न दोषः।]

---

एव शिक्षकाणां परकीयशिक्षार्थं यतमानानामुपदेशकानाम् धुरि अग्रे प्रतिष्ठापयितव्यः प्रतिष्ठां प्रापणीयः। उभयविधयोग्यतावत्त्वेनाभ्यर्हितत्वादिति भावः। अत्राप्रस्तुतात् सामान्यात् प्रस्तुतस्य विशेषस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः। उपजातिर्वृत्तम् ॥ १६ ॥

आर्याभ्याम् हरदत्तगणदासाभ्याम्। भगवत्याः कौशिक्याः। पिण्डितार्थः फलितार्थः, पर्यवसितार्थ इति भावः। उपदेशदर्शनात् स्वस्वशिष्यशिक्षादर्शनात् निर्णयः जयपराजयव्यवस्था भविष्यतीति शेषः। अत्र मालविकादर्शने सन्देहनिराकरणाद्युक्तिर्नाम सन्ध्यङ्गम्।

नः अस्माकम्। परमभिमतम् स्वस्वविनेयविद्याप्रदर्शनेन जयपराजयव्यवस्थापनमतीव सम्मतमित्यर्थः।

एवं स्थितम्? किमीदृशो निर्णयो जात इति जिज्ञासा।

मन्दमेधसः अप्रखरमतयः। उपदेशम् गुरुप्रदत्तं ज्ञानम्। मलिनयन्ति अनभ्यासात् दुरभ्यासाद्वा दूषयन्ति। तदा आचार्यस्य शिक्षकस्य दोषः त्रुटिः न।

---

हासिल रहती है। जिसमे दोनों गुण हों, वही शिक्षकोंमें प्रधान माना जाना चाहिए ॥ १६ ॥

विदूषक—आपलोगोंने परिव्राजिकाजीकी बातें सुनली। उनके कहनेका सारांश यही है कि उपदेशदर्शनसे निर्णय हो।

हरदत्त—हमें खूब पसन्द है।

गणदास—देवि, हमको स्वीकार है, यही हो।

देवी—अधम शिष्य यदि उपदेशको मलिन कर देंगे तो क्या गुरुको ही दोष दिया जायगा?

**राजा**—देवि, एवमापठ्यते। विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयतीति।

**देवी**—( जनान्तिकम्। ) कहं दाणिं ( गणदासं विलोक्य, प्रकाशम्। )—अलं अज्जउत्तस्स उस्साहकारणं मणोरहं पूरिअ। विरम णिरत्थआदो आरम्भादो। [ कथमिदानीम्। अलमार्यपुत्रस्योत्साहकारणं मनोरथं पूरयित्वा। विरम निरर्थकादारम्भात्। ]

**विदूषकः**—सुट्ठु भोदी भणादि। भो गणदास, संगीदपदं लम्भिअ सरस्सईए उवाअणमोदआणं खादमाणस्स किं दे मुहणिग्गहेण विवादेण। [ सुष्ठु भवती भणति। भो गणदास, संगीतपदं लब्ध्वा सरस्वत्युपायनमोदकान् खादतः किं ते मुखनिग्रहेण विवादेन। ]

---

गण्यत इति शेषः। आपठ्यते अभिधीयते, विवेचकैरिति शेषः। अद्रव्यपरिग्रहः नीचपात्रस्य शिष्यतया स्वीकारः। बुद्धिदारिद्र्यम्। अयमाशयः—मनोविज्ञानानभिज्ञः शिक्षको यं कमपि शिक्षयन् न कदाचिदपि यशसा समृद्ध्यति, प्रतिभासमृद्धं छात्रं परिचित्य तमध्याप्य चाचिरात् प्रतिष्ठाप्राप्तिस्तु साधारणमेधाविभिरसुकरेति।

'कथमिदानीम्' इत्यग्रे 'राज्ञो दर्शनान्मालविका रक्ष्यते' इति विवक्षितशेषः। उत्साहकारणम् मालविकाग्रहणाध्यवसायः, तस्य कारणम् हेतुभूतम् मालविकादर्शनमनोरथम्। निरर्थकात् प्रयोजनरहितात्। आरम्भात् विवादात्।

सङ्गीतपदम् सङ्गीतज्ञताप्रभवां प्रतिष्ठाम्। उपायनमोदकान् उपहारतया समर्पितान् मिष्टान्नप्रकारान्। त्वं सङ्गीतज्ञ इति प्रतिष्ठयाऽधुना परैरुपायनीकृतानि मिष्टानि लभसे, जाते त्वधुना विवादनिर्णये तव च पराजितत्वे न कोऽपि तुभ्यं किमप्युपहरिष्यतीति तव मुखनिग्रहः मुखरोध एव सम्पद्येतेति भावः। एतादृशी चोक्तिर्गणदासोत्तेजनार्था।

---

**राजा**—पण्डितोंका तो यही कहना है कि शिक्षकोंद्वारा अधम शिष्यका चुनाव भी उनकी बुद्धिहीनता सूचित करता है।

**देवी**—( स्वगत ) अब क्या किया जाय ? ( गणदासकी ओर देखकर, प्रकाशमें ) राजाके उत्साहजनक मनोरथको पूर्ण करनेकी कोई आवश्यकता नहीं है। इस व्यर्थके झगड़ेमें मत पड़ो।

**विदूषक**—देवी ठीक कह रही हैं, सङ्गीतमें प्रतिष्ठा प्राप्तकर उपहारप्राप्त मोदकसे पेट भरनेवाले तेरे लिये मुंहकी गतिको रोकनेवाले इस विवाद में क्या रक्खा है?

गणदासः—सत्यमयमेवार्थो देवीवाक्यस्य । श्रूयतामवसरप्राप्तमिदानीम् ।

लब्धास्पदोऽस्मीति विवादभीरोस्तितिक्षमाणस्य परेण निन्दाम् ।
यस्यागमः केवलजीविकायै तं ज्ञानपण्यं वणिजं वदन्ति ॥१७॥

देवी—अइरोवणीदाए सिस्साए अवरिणिट्ठिदस्स उवदेसस्स उण अण्णाय्यं पआसणं । [ अचिरोपनीतायां शिष्यायामपरिनिष्ठितस्योपदेशस्य पुनरन्याय्यं प्रकाशनम् । ]

---

लब्धास्पद इति । लब्धास्पदः विद्याशालितया 'लब्धप्रतिष्ठोऽस्मि' इति हेतोः विवादभीरोः 'युद्धे जयपराजयावव्यवस्थौ भवतः' इति न्यायेन विवादविमुखस्य, अत एव परेण निन्दाम् परकृतं 'न किञ्चिदयं वेत्ति, यदि जानीयादवश्यं शास्त्रार्थे प्रवर्त्तेत' इत्यनादरं तितिक्षमाणस्य उपेक्षाऽश्रवणाभिनयादिना सहमानस्य यस्य जनस्य आगमः सङ्गीतादिशास्त्रज्ञानम् केवलजीविकायै निजोदरपूरणमात्रफलाय तं ज्ञानपण्यं ज्ञानविक्रेतारं वणिजं वदन्ति, तटस्था इति शेषः । यो जनो जयपराजयाव्यवस्थया विवादान्निवृत्त्य केवलजीविकायै विद्यां विक्रीय धनं समासादयति, मन्ये, स वणिगेव । तद्विद्याया जीविकामात्रोपायत्वादिति भावः । अत्र ज्ञाने पण्यत्वारोपस्तादृशजने वणिक्त्वारोपे निमित्तमिति परम्परितरूपकमलङ्कारः । उपजातिर्वृत्तम् ॥ १७ ॥

अचिरोपनीतायाम् अबहुकालात् परिगृहीतायाम् । शिष्यायाम् मालविकायाम् । अपरिनिष्ठितस्य अपरिपक्वस्य अतिनूतनस्येति यावत् । उपदेशस्य शिक्षायाः । प्रकाशनम् तारतम्यज्ञानार्थं परिक्षायामुपस्थापनम् । चिरगृहीतविद्या हि छात्रा अभ्यासपाटववशादासादितप्रौढयः सन्तः शक्नुवन्ति परीक्षया स्वशिक्षकस्य गुणोत्कर्षशालिनीं विद्यां शिक्षापद्धतिं च प्रमापयितुं न प्रविष्टमात्राः, अचिरोपनीता

---

गणदास—क्या देवीके कथनका यही अभिप्राय है ? इस प्रसङ्गमें मुझे यही कहना है कि—

जो लोग मैंने प्रतिष्ठा प्राप्त करली है इस ख्यालसे विवादसे डरकर दूसरोंद्वारा की गई निन्दाको सहते हैं और जिनका शास्त्रज्ञान केवल जीविकाके ही लिये है वह ज्ञानके विक्रेता बनिया ही हैं ॥ १७ ॥

देवी—आपकी शिष्याने कुछ ही समयसे शिक्षा प्राप्त की है, अपरिपक्व उपदेशका प्रदर्शन करना तो अच्छा न होगा ।

गणदासः—अत एव मे निर्बन्धः ।

देवी—तेण हि दुवेवि भअवदीए उवदेसं दंसेध । [ तेन हि द्वावपि भगवत्यै उपदेशं दर्शयतम् । ]

परिव्राजिका—देवि, नैतन्न्याय्यम् । सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय ।

देवी—( जनान्तिकम् । ) मूढे परिव्वाजिए, मं जाग्गतिं पि सुत्तं विअ करेसि । ( इति सासूयं परावर्तते । ) [ मूढे परिव्राजिके, मां जाग्रतीमपि सुप्तामिव करोषि । ]

---

च भवतः शिष्या मालविका, अतो न तस्याः परीक्षया भवतो वास्तविकी कोटिरवधार्येत ततश्चान्याय्यं भवतः पक्षे तदुपस्थापनमिति भावः । अत एव शिष्याया अचिरपरिगृहीतत्वादेव । मे मम । निर्बन्धः मालविकाया अभिनयं प्रदर्शयितुमाग्रहातिशयः । अचिरप्रारब्धशिक्षाया मालविकाया अभिनयनैपुण्यमाश्चर्यचकितभावेन प्रत्यक्षयतां जनानां चेतसि मदीयविद्यायामादरातिशयो जायेतेति कृत्वैव मम तथाऽऽग्रह इति तात्पर्यम् । तेन मालविकाया अभिनयस्यावश्यदर्शनीयत्वनिश्चयेन । द्वौ हरदत्तगणदासौ । एतेनापि राजा मालविकां यथा न पश्येत्तथा प्रयत्नो देव्या इति स्फुटति ।

एतत् केवलाया मम निर्णायकत्वम् । नैकाऽहं परीक्षिका युज्ये इत्यत्र युक्तिमाह—सर्वज्ञस्य अशेषविदः । निर्णयाभ्युपगमः ( निर्णयायाभ्युपगमः ) मध्यस्थतास्वीकारः । दोषाय हानये । एकस्य कीदृशस्यापि जनस्य रागाद्याविष्टतासंभावनया माध्यस्थ्यं गुणदोषौ विपर्यासयितुं सम्भवत्यतस्तथा कर्त्तुं नोचितमिति भावः । एतेन यथाकथञ्चिद्राजाऽपि निर्णायकेष्वन्तर्भूय मालविकामीक्षेतेति परिव्राजिकायाः प्रयासः प्रकाशते ।

मूढे अभिप्रायानभिज्ञे, राज्ञाऽनभिप्रेतमपि मालविकाऽभिनयप्रदर्शनं प्रत्याग्रह-

---

गणदास—इसीसे मैं आग्रह कर रहा हूँ ।

देवी—तब दोनों आदमी इनके सामने उपदेश दिखावें ।

परिव्राजिका—देवि, यह ठीक नहीं होगा, सर्वज्ञ व्यक्ति भी अकेले निर्णय देगा तो उसमें दोष रह जायगा ।

देवी—( धीरेसे ) मूढ़े परिव्राजिके, मैं जाग रही हूँ और तुम मुझे सुला देना चाह रही हो । ( ईर्ष्यासे मुंह घुमा लेती है )।

( राजा देवीं परिव्राजिकायै दर्शयति । )

परिव्राजिका—

अनिमित्तमिन्दुवदने किमत्र भवतः पराङ्मुखी भवसि ।
प्रभवन्त्योऽपि हि भर्तृषु कारणकोपाः कुटुम्बिन्यः ॥ १८ ॥

विदूषकः—णं सकारणं एव्व अत्तणो पक्खो रक्खिदव्वो । ( गणदासं विलोक्य । ) दिट्ठिआ कोवव्वाजेण देवीए परित्तादो भवं । सुसिक्खिदो वि सव्वो उवदेसदंसणेण णिण्हादो होदि । [ ननु सकारणमेव । आत्मनः

---

प्रदर्शनात्तथा सम्बोधनम् । ( मां ) जाग्रतीम् सतर्काम् । सुप्ताम् निद्रिताम् । अनभीष्टाचरणेन पराजयात्तथोपचारः । एतेन परिव्राजिकां प्रति राज्ञ्याः कोपः प्रकटीभवति । देवीम् ( असूयया पराङ्मुखीं ) धारिणीम् । दर्शयति इङ्गितेनेति शेषः ।

अनिमित्तमिति । अयि इन्दुवदने, चद्रमुखि, अकारणम् विनैव हेतुम् किं कुतः अत्रभवतः मान्यात् महाराजात् पराङ्मुखी ( विरज्य ) विमुखी भवसि । हि यतः कुटुम्बिन्यः गृहिण्यः भर्तृषु स्वामिषु प्रभवन्त्यः आधिपत्यशालिन्यः अपि कारणेन कोपो यासां ताः कारणकोपाः सहेतुकक्रोधा जायन्ते इति शेषः । सत्यपि प्रभुत्वे पत्नीनां पतिषु निराधारकोपनत्वं तासामेवोपहासायेति भावः । एतेन राज्ञो निरपराधत्वं देव्याश्चाहेतुकोपनत्वं व्यक्तम् । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । आर्या जातिः ॥ १८ ॥

सकारणम् सहेतुकम् एव । देव्याः पराङ्मुखीभवनमिति शेषः । कारणमाह—आत्मन इति । आत्मनः स्वस्याः पक्षः भागः ( गणदासस्य राज्ञ्या नियुक्ततया गणदासो राज्ञ्याः पक्षः ), रक्षितव्यः अपमानात् त्रातव्यः । कोपादिप्रकाशनेन यथाकथाञ्चित् प्रसक्तं परीक्षावसरं निषिध्य सम्भाव्यपराजयं स्वनियोज्यं गणदासं पराजयाद् भाविनो रिरक्षिषति देवीति तस्या राज्ञः पराङ्मुखीभवनं नाकारणमिति भावः ।

---

( राजा परिव्राजिकाका ध्यान देवीकी ओर आकृष्ट करते हैं )

परिव्राजिका—हे चन्द्रमुखि, तुम विना कारण महाराजसे क्यों रूठ रही हो? समर्थ होकर भी कुलललनाएं अपने पतियोंपर किसी खास कारणके होनेपर ही, कोप प्रकाशित करती हैं ॥ १८ ॥

विदूषक—कारण तो है ही । अपना पक्ष रखना है । ( गणदासकी ओर देखकर )

पक्षो रक्षितव्यः । दिष्ट्या कोपव्याजेन देव्या परित्रातो भवान् । सुशिक्षितोऽपि सर्वं उपदेशदर्शनेन निष्णातो भवति ।

गणदासः—देवि, श्रूयताम् । एवं जनो गृह्णाति । तदिदानीम्

विवादे दर्शयिष्यामि क्रियासंक्रान्तिमात्मनः ।
यदि मां नानुजानासि परित्यक्तोऽस्म्यहं त्वया ॥ १९ ॥

---

दिष्ट्या भाग्यवशात् । कोपव्याजेन राजोपरि क्रोधप्रदर्शनच्छलेन । परित्रातः रक्षितः । अन्यथा तव पराभव एव स्यादिति भावः । सुशिक्षितः शिक्षाविषये प्राप्त-प्रौढिप्रकर्षः । उपदेशदर्शनेन परीक्षाप्रदानेन । निष्णातः कौशलवत्तया परिचितः । न केवलं शिक्षाऽवधारयति प्रकर्षमपकर्षं वाऽपि तु परीक्षा तथा करोतीति यदि त्वं योग्यं प्रमिमापयिषसि प्रदर्शय तदा प्रयोगमिति भावः । उत्तेजनार्थोक्तिरियम् । अत्र देवीकोपरूपवस्तुना कथाविच्छेदे प्राप्ते विदूषकानुष्ठितमाचार्यसमुत्तेजनं तद्-विच्छेदसम्पादकतया बिन्दुरिति बोध्यम् ।

श्रूयताम् आकर्ण्यताम् । अत्र श्रूयतामित्युक्तिमन्तराऽपि देव्या अभिमुखतायाः सत्त्वेन तथोक्तिः सावधानताप्रार्थनापरा पर्यवस्यति । तेन चाधुना विवक्षितस्यार्थस्य प्रसङ्गसारता व्यज्यते । एवम् परीक्षयैव प्रकर्ष इत्येवंरूपम् । जनः साधारणो लोकः गृह्णाति जानाति ( प्रत्येतीत्याशयः ) ग्रहेर्ज्ञानार्थत्वमत्र ।

विवाद इति । विवादे हरदत्तेन सह वाक्कलहे शास्त्रार्थरूपे आत्मनः स्वस्य क्रियायाः शिक्षायाः सङ्क्रान्ति शिष्यजने सङ्क्रमणं दर्शयिष्यामि प्रकटयिष्यामि । यद्युपदेशदर्शनदर्शनमेव प्रकर्षप्रमाकतयावधारितं तदाऽहं हरदत्तेन सहाहं श्रेष्ठोऽहं श्रेष्ठ इति विवादे स्वशिष्याभिनयप्रदर्शनेन स्वशिक्षायाः प्रकृष्टतां प्रकाशयिष्यामी-त्यर्थः । ( अत्र विषये केनापि जनान्तरदुरवगमेन कारणविशेषेण ) मां नानुजानासि नानुमन्यसे ( चेत्तर्हि ) त्वया ( मां स्वप्रकर्षज्ञापनाय ) नानुमन्यमानयाऽहं परि-त्यक्तः स्वाश्रयाद्विसृष्टः । मदीयोऽत्र कर्मणि निरोधो मदीयत्यागे परिणमेदित्याशयः ।

---

देवीने कोपके व्याजसे भाग्यवश तुम्हें उबार लिया । सुशिक्षित होकरके भी सभी उपदेश दिखा करके ही निष्णात माने जाते हैं ।

गणदास—देवी, आप सुनें, इस तरह लोग दूसरा ही अर्थ लगावेंगे । विवाद छिड़नेपर मैं अपनी शिक्षणकलाका परिचय प्रदान करूंगा । अगर आप

( इति आसनादुत्थातुमिच्छति । )

देवी—( स्वगतम् । ) का गई। ( प्रकाशम् । ) पहवदि आआरिओ सिस्सजणस्स। [ का गतिः । प्रभवत्याचार्यः शिष्यजनस्य । ]

गणदासः—चिरमपदेशशङ्कितोऽस्मि । ( राजानमवलोक्य । ) अनुज्ञातं देव्या । तदाज्ञापयतु देवः कस्मिन्नभिनयवस्तुनि प्रयोगं दर्शयिष्यामि ।

राजा—यदादिशति भगवती ।

---

अत्र त्वत्कर्तृकमदनुज्ञानाभावो मत्परित्यागतुल्य इति द्वयोः क्रिययोर्बिम्बप्रतिबिम्बभावप्रत्ययादसम्भवद्वस्तुसम्बन्धरूपा निदर्शनाऽलङ्कारः ॥ १९ ॥

का गतिः क उपायः । मालविकाया राज्ञो दर्शनविषयावताराद्रक्षणे कः प्रबन्ध इति चिन्ता व्यज्यते । आचार्यः शिक्षाऽधिकृतः । शिष्यजनस्य विनेयस्य । सम्बन्धसामान्ये षष्ठी । एतेन मालविकाकर्तृकाभिनयप्रदर्शनानुमतिरनिच्छयेव दीयमाना प्रतीयते तथा च राज्ञः शङ्काकलुषितान्तःकरणतयेति बोध्यम् ॥

चिरम् बहुकालम् । यावदिति शेषः । अपदेशे शिष्याभिनयप्रदर्शनात्प्रतिषेधे । शङ्कित आतङ्कितः । राज्या वचोभङ्ग्या नेयं शिष्याभिनयप्रदर्शनानुमत्या मां सनाथयिष्यतीति सन्दिहान आसमिति भावः । देव्या राज्या । अनुज्ञातम् अनुमतम्, प्रयोगदर्शनमिति शेषः । देवः महाराजः आज्ञापयतु आदिशतु । किमादिशत्वित्याह—कस्मिन्निति । कस्मिन् किंस्वरूपे किन्नामधेये वा । अभिनयवस्तुनि अभिनये पदार्थे । उपदेशं दर्शयिष्यामि शिक्षासङ्क्रान्तिं प्रदर्शयिष्यामि । किमभिधानमभिनयं प्रदर्श्य मध्यस्थानां कोटिनिर्धारणकर्मणि सौविध्यमाधास्यामिति भावः । एतेन गणदासस्य प्रौढिकृतः स्वजये विश्वासो व्यज्यते ।

भगवती पण्डितकौशिकी । यदादिशति यं विषयं प्रदर्शनीयमाह । तमेव विषय-

---

मुझे उसमें सम्मिलित होनेकी आज्ञा नहीं देती हैं, तो मैं समझूंगा कि आपने मेरा त्याग कर दिया ॥ १९ ॥

( यह कहकर आसनसे उठना चाहते हैं )

देवी—( स्वगत ) क्या उपाय है ? ( प्रकाश ) आचार्यको अपने शिष्यजनपर सर्वाधिकार प्राप्त है ।

गणदास—मैं डर रहा था कि कहीं निषेध नकर दें । ( राजाकी ओर देखकर ) देवीने तो अनुमति देदी, आप आज्ञा दें, किस विषयका उपदेश प्रदर्शित किया जाय ?

राजा—परिव्राजिकाजी जैसा कहें ।

परिव्राजिका—किमपि देव्या मनसि वर्तते, ततः शङ्कितास्मि ।

देवी—भण वीसद्धं । पहवदि प्पहू अत्तणो परिअणस्स । [ भण विस्रब्धम् । प्रभवति प्रभुरात्मनः परिजनस्य । ]

राजा—मम चेति ब्रूहि ।

देवी—भअवदि, भणेदाणीम् । [ भगवति, भणेदानीम् । ]

---

मुपदेशदर्शनाय निर्धारितमवगच्छेति भावः । एतेन राज्ञा स्वस्य तटस्थता प्रकाशिता ।

देव्याः धारिण्या । हृदये मनसि । किमपि कश्मलम् । ( अनभिप्रयमाणताख्यं दोषरूपम् ) वर्त्तते । अत एवाहं तदनुरोधरक्षार्थं मन्दप्रवृत्तिरिव स्वकर्त्तव्यभूतविवादप्रवर्त्तने भवामीति भगवत्या आशयः । धारिणीप्रयोगदर्शनमिदं भवतो विदूषकस्य मम च प्रपञ्चेन मालविकाया भवदग्रे समानयनं तस्यां भवतः सानुरागं प्रवर्त्तनं च मत्वा विरज्यतीति गूढोऽर्थः । शङ्किता जायमानभया । भगवत्या भयहेतुर्न देव्यपरागः, किन्तु देवीकर्तृकवलवद्विद्वेषभयाद्राज्ञोऽनुरागभङ्गाशङ्का, अत एव च सा भूयो भूयो राजानं दृढतायां परीक्षमाणा प्रवर्त्तत इति विभावयन्तु सुधियः ।

प्रभुः स्वामी । ( राजा ) आत्मनः परिजनस्य स्वपरिवारस्य । प्रभवति अधिकरोति । तदीयमभिप्रायमनुवर्त्तितुमतथा च कर्तुं स्वतन्त्रो भर्त्ताऽतो भवती राजानुरोधं रक्षतु न देव्यनुरोधं, देव्या राज्ञोऽनुरोधस्य पर्यन्तेऽवश्यपालनीयत्वादिति भावः ।

मम धारिण्याः । प्रभवतीति शेषः । न केवलमात्मनः परिजनस्यापि तु मम धारिण्या अपि प्रभवति भवानिति त्वया वक्तव्यं, स्नेहकृतप्रभुत्वस्य त्वयि ममाव्याहतत्वादिति राज्ञः स्नेहसहितः पर्यनुयोगोऽयम् ।

इदानीम् अधुना, बहुविवेचितेऽत्र प्रसङ्गे यद्यवरोध उपस्थाप्यते तदा प्रकटविरोधः कृतो भवति, स च नोपयुज्यते, राज्ञोऽभीष्टे प्रसह्य निरुध्यमाने तदपरागस्यैवाधिकसम्भवात् 'क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत्' इति स्मरणात्, तस्य चात्मनोऽहितसाधकतयानभिप्रेतत्वादिति देव्या 'अधुना' पदेन द्योत्यते ।

---

परिव्राजिका—देवीके दिलमें कुछ गांठ है, इससे डर रही हूँ ।

देवी—निश्शङ्क होकर कहिये, राजाको अपने परिजनपर अधिकार है ।

राजा—उसमें इतना और जोड़ दें कि 'मेरे ऊपर भी' ।

देवी—भगवति, अब आप कहें ।

परिव्राजिका——देव, शर्मिष्ठायाः कृतिं चतुष्पादोत्थं छलिकं दुष्प्रयोज्य मुदाहरन्ति । तत्रैकार्थसंश्रयमुभयोः प्रयोगं पश्यामः । तावता ज्ञायत एवात्रभवतोरुपदेशान्तरम् ।

आचार्यौ——यदाज्ञापयति भगवती ।

विदूषकः——तेण हि दुवेवि वग्गा पेक्खाघरे संगीदरअणं करिअ तत्त-भवदो दूदं पेसअह । अहवा मुदङ्गसद्दो एव्व णो उत्थावइस्सदि । [ तेन हि द्वावपि वर्गौ प्रेक्षागृहे संगीतरचनां कृत्वा तत्रभवतो दूतं प्रेषयतम् । अथवा मृदङ्गशब्द एव न उत्थापयिष्यति । ]

---

शर्मिष्ठायाः तदाख्याया वृषपर्वदुहितुर्ययातिपत्न्याः । कृतिम् निर्मितिम्, कृद-भिहितस्य भावस्य द्रव्यवत्प्रकाशनात् तया कृतमित्यर्थः । चतुष्पादोत्थम् चतुर्णाम् पादानाम् चरणानाम् उत्था उत्थानं यस्मात् तच्चतुष्पादोत्थम्, चतुष्पदीयुक्तगीतानां मूलभूतम् । छलिकम् तदाख्यम् । दुष्प्रयोज्यम् दुरभिनेयम् दुःखेन प्रयोगयोग्य-मित्यर्थः । उदाहरन्ति कथयन्ति पण्डिता इति शेषः । तत्र छलिके । एकार्थसंश्रयम् एकविषयाधारम् । उभयोः हरदत्तगणदासयोः । प्रयोगम् अभिनयशिक्षाम् । पश्यामः विलोकयेम । विषयभेदे तारतम्यपरीक्षायाः सदोषत्वस्यावश्यम्भावित्वादिति भावः । तावता एकार्थमाश्रित्योभयोः प्रयोगदर्शनेन । अत्रभवतोः माननीययोः हर-दत्तगणदासयोः । उपदेशान्तरम् शिक्षातारतम्यम् । ज्ञायते अवगम्यते । वर्त्त-मानसामीप्ये भविष्यति लट् । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः ।

द्वावपि वर्गौ हरदत्तगणदासयोः पक्षौ । प्रेक्षागृहे अभिनयार्थे कल्पिते भवन-विशेषे । सङ्गीतरचनां सङ्गीतारम्भम् । तत्रभवतो माननीयस्य राज्ञः समीपे इति योजनीयम् । नः अस्मान् । उत्थापयिष्यति सङ्गीतश्रावणेन तत्राभिनयगृहे गन्तुमुद्योजयिष्यतीति भावः ।

---

परिव्राजिका—देव, शर्मिष्ठा द्वारा प्रवर्त्तित चतुष्पादोत्थ छलिक नृत्यको लोग कठिन कहते हैं, उसीमें किसी एक विषयपर दोनोंके प्रयोग देखे जांय । इसीसे अन्तरका पता चलजायगा ।

आचार्यद्वय—परिव्राजिकाजी जो कहें ।

विदूषक—तब दोनों दल रङ्गभवनमें सङ्गीत साधकर महाराजके पास दूत भेजें, अथवा—मृदङ्गकी आवाज ही हमलोगोंको उठा देगी ।

हरदत्तः—तथा । ( इत्युत्तिष्ठति । )

( गणदासो धारिणीमवलोकयति । )

देवी—( गणदासं विलोक्य । ) विअई भोदु अज्जो । णं विजअब्भत्थिणी अहं अज्जस । [ विजयी भवत्वार्यः । ननु विजयाभ्यर्थिनी अहमार्यस्य । ]

( आचार्यौ प्रस्थितौ । )

परिव्राजिका—इतस्तावत् ।

आचार्यौ—( परिवृत्य । ) इमौ स्वः ।

परिव्राजिका—निर्णयाधिकारे ब्रवीमि । सर्वाङ्गसौष्ठवाभिव्यक्तये विगतनेपथ्ययोः पात्रयोः प्रवेशोऽस्तु ।

---

धारिणीमवलोकयति तत्सङ्केतज्ञानाय तदभिमुखमीक्षत इत्यर्थः ।

प्रस्थितौ चलितौ, प्रयोगदर्शनायेति शेषः ।

इतस्तावत् इत आगम्यताम्, युवाभ्यामिति शेषः । तावच्छब्दो वाक्यालङ्कारे । परिवृत्य निवृत्तगती प्रतिनिवृत्येत्यर्थः ।

निर्णयाधिकारे युवयोर्जयपराजयव्यवस्थाविषये । ब्रवीमि कथयामि । वाच्यमेवाह—सर्वाङ्गेत्यादि । सर्वेषामखिलानामङ्गानां नृत्याङ्गभूतगात्रभङ्ग्यादीनाम् ( मुखबाहुप्रभृतीनां शरीरावयवानाञ्चेति ध्वन्यते ) सौष्ठवस्य रमणीयताया अभिव्यक्तये स्फुटीभावाय । विगतनेपथ्ययोः बहुविधकृत्रिमवेशभूषारहितयोः पात्रयोः अभिनयकर्तृतया वृतयोर्भवच्छिष्ययोः । प्रवेशः रङ्गमञ्चे समुपस्थितिः । विविध-

---

हरदत्त—तथास्तु । ( उठता है )

( गणदास धारिणी को देखता है )

देवी—( गणदासकी ओर देखकर ) आर्य्य विजयी होवें । मैं आर्य्यकी विजय चाहती हूं ।

( दोनों आचार्य जाते हैं )

परिव्राजिका—इधर आइए ।

आचार्यद्वय—( घूमकर ) यह हाजिर हैं ।

परिव्राजिका—निर्णयप्रसङ्गमें यह जान लीजिये कि सकल अङ्गोंकी सुघराई प्रकट होसके इसलिये विना कृत्रिमवेश पहने ही पात्र अभिनय दिखावें ।

आचार्यौ—नेदमावयोरुपदेश्यम्। ( इति निष्क्रान्तौ। )

देवी—( राजानमवलोक्य। ) जइ राअकज्जेसु ईरिसी उवाअणिउणदा अज्जउत्तस्स, तदो सोहणं भवे। [ यदि राजकार्येष्वीदृश्युपायनिपुणतार्यपुत्रस्य, ततः शोभनं भवेत्। ]

राजा—अलमन्यथा गृहीत्वा न खलु मनस्विनि मया प्रयुक्तमिदम्।
प्रायः समानविद्याः परस्परयशःपुरोभागाः ॥ २० ॥

---

वेशभूषाच्छादितयोस्तु तयोः प्रवेशे सकलाङ्गभङ्गीदर्शनव्याघाते तारतम्यावधारणं कठिनं स्यादिति भावः। उरोदेशाद्यावरकवेष्टिताया मालविकायाः प्रवेशे राज्ञस्तत्कुचकलशसाक्षात्कारसुखं न लभ्यं स्यात्, साधारणपरिधानेन तस्याः प्रवेशे तु तदवसरो लभ्येतेति गूढाशयेनेत्थमुक्तम्। उपदेश्यम् बोधनीयम्। स्वयमेव तदंशे सावधानत्वादिति भावः। अत्र गुणवत्त्वस्य गम्यमानत्वाद्विरोधनं नाम सन्ध्यङ्गमुक्तं भवति।

राजकार्येषु राज्ञः कर्त्तव्येषु प्रजावस्थापर्यवेक्षणादिषु। ईदृशी गूढाभिसन्धिबन्धिनी। निपुणता चातुर्यम्। शोभनम् उत्कृष्टम्। एतेन मालविकादर्शनावसरलाभार्थमेव भवतेदं प्रयुक्तमिति व्यञ्जितम्। अत्र गूढार्थोद्भेदादुद्भेदो नाम सन्ध्यङ्गमुक्तं भवति।

अलमन्यथेति। मनस्विनि मानिनि, अन्यथा अयथावस्तु गृहीत्वा अवधार्य अलम्। मदीयसदाशयतातिरिक्तं गूढाभिसन्ध्यादिकं कल्पयित्वा न किमपि फलम् इत्यर्थः। ननु यदि नात्र कुचक्रे भवतो मनोबन्धः कथमिदमुपपन्नमित्याह—मया इदं हरदत्तगणदासयोर्विवादोत्थानं न प्रयुक्तम् भेदनीतिप्रयोगेण नोपस्थापितम्। ( किन्तु स्वत एवापन्नं, तत्र प्रसिद्धं कारणमाह प्राय इत्यादिना ) प्रायः बाहुल्येन समानविद्याः तुल्यविदो जनाः परस्परयशःपुरोभागाः अन्योन्यकीर्त्तिद्वेषजुषः ( परस्परनिन्दारताः ) भवन्तीत्यर्थः। हरदत्तगणदासयोः समविद्यतया परस्परद्विषोरन्योन्यनिन्दयैवायं विवादः समुपस्थापितो नतु मदीयेहयेति भावः। अत्र सामान्येन विशेष-

---

आचार्यद्वय—हमको यह नहीं कहा जाय। ( जाते हैं )

देवी—( राजाकी ओर देखकर ) यदि राजकार्यमें ऐसी निपुणता प्रकट करते तो अच्छा होता।

राजा—ओ मनस्विनि, तुम कुछ दूसरा मत समझो, मैंने यह नहीं प्रस्तुत किया

( नेपथ्ये मृदङ्गध्वनिः । सर्वे कर्णं ददति । )

परिव्राजिका—हन्त । प्रवृत्तं संगीतम् । तथा ह्येषा—
जीमूतस्तनितविशङ्किभिर्मयूरैरुद्ग्रीवैरनुरसितस्य पुष्करस्य ।
निर्ह्रादिन्युपहितमध्यमस्वरोत्था मायूरी मदयति मार्जना मनांसि ॥ २१ ॥

समर्थनरूपोऽर्थान्तरन्यासः । 'प्रायो भूम्नि' इत्यमरः 'दोषदृष्टिः पुरोभाग' इति च त्रिकाण्डशेषः । आर्या जातिः ॥ २० ॥

हन्तेति हर्षव्यञ्जनाय । प्रवृत्तम् आरब्धम् । सङ्गीतम् 'नृत्यं गीतं च वाद्यं च त्रयं सङ्गीतमुच्यते' इति ।

जीमूतेति । जीमूतस्तनितविशङ्किभिः जीमूतस्य मेघस्य स्तनितं गर्जितं विशङ्कन्ते सम्भावयन्तीति तैस्तथोक्तैः मेघध्वनितोत्प्रेक्षिभिः अत एव उद्ग्रीवैः ऊर्ध्वोत्तोलितकन्धरैः मयूरैः कलापिभिः अनुरसितस्य अनुशब्दायितस्य पुष्करस्य वाद्यभाण्डविशेषस्य मृदङ्गस्येति यावत् । निर्ह्रादिनी दूरगमनशीलनादा उपहितो योजितो यो मध्यमस्वरः निषादादिस्वरेषु गणनायां पञ्चमः स्वरः तदुत्था तदुद्भवा मायूरी मयूरप्रिया मार्जना पुष्करवाद्यगतिविशेषः मनांसि हृदयानि ( आकर्णयितॄणामस्माकम् ) मदयति आनन्दयति । एतेन परिव्राजिकायाः सङ्गीतविद्यानिपुणता व्यक्ता । 'स्तनितं गर्जितं मेघनिर्घोषे' इत्यमरः । 'निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः' इति चामरः । पुष्करवाद्यं लक्षितं भारतीये यथा—

षोडशाक्षरसम्पन्नं चतुर्मार्गं तथैव च ।
द्विलेपनं षट्करणं त्रियति त्रिलयं तथा ॥
त्रिगतं त्रिप्रचारं च त्रिसंयोगं त्रिपाणिकम् ।
दशार्धपाणिप्रहतं त्रिप्रहारं त्रिमार्जनम् ॥
एभिरङ्गैस्तु सम्पन्नं वाद्यं पुष्करजं भवेत् ॥

---

है । एक समान विद्यावाले प्रायः परस्पर दोषान्वेषी होते ही हैं ॥ २० ॥

( नेपथ्यमें मृदङ्गशब्द )

परिव्राजिका—बाजे बज उठे, देखो यह—
मेघ गरजरहा है इस भ्रमवश उद्ग्रीव मयूर गणद्वारा अनुशब्दित मृदङ्गके

राजा—देवि, तस्याः सामाजिका भवामः ।

देवी—( स्वगतम् । ) अहो अविणओ अज्जउत्तस्स । [ अहो अविनय आर्यपुत्रस्य । ]

( सर्वे उत्तिष्ठन्ति । )

विदूषकः—( अपवार्य । ) भो धीरं गच्छ । तत्तभोदी धारिणी विसंवादइस्सदि । [ भोः, धीरं गच्छ । तत्रभवती धारिणी विसंवादयिष्यति । ]

---

तत्र—मायूरी चार्धमायूरी तथा कार्मारवीति च ।
तिस्रस्तु मार्जना ज्ञेयाः पुष्करेषु स्वराश्रयाः ॥
गान्धारो वामके कार्यः षड्जो दक्षिणपुष्करे ।
मध्यमश्चोर्ध्वगः कार्यो मायूर्यास्तु स्वरा अमी ॥
वामके पुष्करे षड्ज ऋषभो दक्षिणे तथा ।
धैवतश्चोर्ध्वगोऽत्रार्धमायूर्यां निर्दिशेद् बुधः ॥
ऋषभः पुष्करे वामे षड्जो दक्षिणपुष्करे ।
पञ्चमश्चोर्ध्वगः कार्यः कार्मारव्याः स्वरा अमी ॥

वृत्तं प्रहर्षिणी नाम । तल्लक्षणं परिशिष्टे द्रष्टव्यम् ॥ २१ ॥

अहो आश्चर्यम् । अविनयः औद्धत्यम्, अशिष्टो व्यवहारः । स च दक्षिणनायकस्यापि सतः समवहितायामेव मयि नायिकान्तरदर्शनलालसाप्रकाशनरूपो बोध्यः ॥ विसंवादयिष्यति विघटयिष्यति । भवतस्त्वरितगमनेन कुचक्रवर्चितामनुमाय केनापि प्रकारान्तरेण विवादं समाप्य, क्रोधेन सर्वं विशृङ्खलीकृत्य वा, मालविकामन्यत्र प्रेष्य वा, सर्वमपि तवाशामोदकं विफलीकरिष्यतीत्यतो निभृतं चलेत्यर्थः ।

---

शब्दसे युक्त तथा मध्यम स्वरसे उत्थित मायूरी मार्जना हमारे मनको मुग्धकिये जारही है ॥ २१ ॥

राजा—देवी, हमलोग भी उसमें श्रोता बनें ।

देवी—( स्वगत ) आर्यपुत्रका ऐसा अविनय !

( सभी उठते हैं )

विदूषक—( धीरेसे ) अजी, धीरे धीरे चलिये, धारिणी अभी भी सब चौपट कर देंगी ।

राजा—धैर्यावलम्बिनमपि त्वरयति मां मुरजवाद्यरावोऽयम् ।
अवतरतः सिद्धिपथं शब्दः स्वमनोरथस्येव ॥ २२ ॥

( इति निष्क्रान्ताः सर्वे । )

इति प्रथमोऽङ्कः ।



धैर्यावलम्बिनमिति । सिद्धिपथम् कार्यनिष्पत्तिवर्त्म अवतरतः गच्छतः स्वमनोरथस्य आत्मवाञ्छितस्य शब्दो ध्वनिः इव अयम् आकर्ण्यमानः मुरजवाद्यरावः मृदङ्गरूपवाद्ययन्त्रोद्भवशब्दः धैर्यावलम्बिनम् अव्याकुलभावं प्रदिदर्शयिषन्तमपि मां त्वरयति चपलीकरोति । अत्रोपमया मालविकादर्शनावश्यंभावितारूपं वस्तु व्यज्यते । अत्र वीजस्य पुनरावर्त्तनात् समाधानं नाम सन्ध्यङ्गमुक्तम् । अत्रैव सुखावगमस्य गम्यमानत्वात्प्राप्तिर्नाम सन्ध्यङ्गम् । अत्राक्षेपादिषु सन्ध्यङ्गेषु कतिचिदेव कविनोपनिबद्धानि न सर्वाणि, तथाऽपि न दोषः,

'न्यूनमप्यत्र यैः कैश्चिदङ्गैर्नाट्यं न दुष्यति ।
यद्युपात्तेषु सम्पत्तिराराधयति तद्विदः ॥' इत्युक्तेः ।

अत्र नृत्यदर्शननिश्चयान्ते प्रथमाङ्कार्थे समाप्तेऽपि तमसमाप्यैव उत्तराङ्कादौ प्रतिपाद्यायाः सङ्गीतरचनाया अत्रैव निपातनादङ्कावतरणं नामार्थोपक्षेपकमुक्तम्, तदुक्तम्—'अङ्कावतारस्त्वङ्कान्ते पात्रेणाङ्कस्य सूचनात्' । इति । आर्या जातिः ॥२२॥

इति शब्दः समाप्तौ । अङ्कलक्षणं परिशिष्टे द्रष्टव्यम् ॥

इति मैथिलपण्डितश्रीरामचन्द्रमिश्रप्रणीते मालविकाऽग्निमित्रनाटकप्रकाशे प्रथमाङ्क'प्रकाशः' समाप्तः ।



राजा—मैं धैर्य रखना भी चाहताहूँ लेकिन यह मुरज शब्द मुझे शीघ्रता करने को प्रेरित करता है । यह मुरजशब्द मुझे सिद्धप्राय अपने मनोरथके शब्दकी तरह लग रहा है ॥ २२ ॥

( सबका निष्क्रमण )

प्रथम अङ्क समाप्त ।



# द्वितीयोऽङ्कः ।

( ततः प्रविशति संगीतरचनायां कृतायामासनस्थो राजा सवयस्यो धारिणी परिव्राजिका विभवतश्च परिवारः । )

राजा—भगवति, अत्रभवतोराचार्ययोः प्रथमं कतरस्योपदेशं द्रक्ष्यामः ।

परिव्राजिका—ननु समानेऽपि ज्ञानवृद्धभावे वयोवृद्धत्वाद्गणदासः पुरस्कारमर्हति ।

राजा—तेन हि मौद्गल्य, एवमत्रभवतोरावेद्य नियोगमशून्यं कुरु ।

---

अङ्कान्तरमवतारयति तत इति । सङ्गीतरचनायां सङ्गीतसज्जायाम् । सवयस्यः वयस्येन मित्रेण सहितः, मित्रपदेनात्र विदूषकस्य ग्रहणम् । विभवतः विभवानुकूलसङ्कयकः । परिवारः रक्षिप्रभृतिः परिजनः । 'भगवति, अत्रभवतोः' इत्यत आरम्य 'गणदासः पुरस्कारमर्हति' इत्यन्तेन प्रतीयमानं राज्ञ उपायतो मालविकादर्शनप्रवर्त्तनं प्रयत्नो नाम द्वितीयावस्थितिः । तेन विन्दुप्रयत्नयोः समन्वयात् प्रतिमुखसन्धिरित्यनुसन्धेयम्, कतरस्य हरदत्तगणदासयोर्द्वयोर्मध्ये कस्य । प्रयोगं नृत्याभिनयप्रभृतिव्यापारम् ।

नन्विति राजाभिमुखीकरणे । वृद्धत्वं श्रेष्ठता, ( वृद्धत्वं द्विविधं—ज्ञानकृतं वयःकृतं च । तत्र ज्ञानकृतं गौरवं यद्यपि द्वयोराचार्ययोस्तुल्यं तथापि वयसा वृद्धतया हरदत्तात् प्रथमं गणदास एव प्रयोगदर्शने ) पुरस्कारम् अग्रगत्वं प्राथम्यमित्यर्थः अर्हति अधिकरोति ।

तेन हि गणदासस्य प्रथमप्रयोगदर्शनौचित्येन हेतुना । अत्रभवतोः सम्मानार्हयोः हरदत्तगणदासयोः, एवम् यथाप्रागुक्तप्रकारेण, आवेद्य सूचयित्वा, नियोगम् आदेशम्, अशून्यं सफलम् कुरु सम्पादय ।

---

( सङ्गीतकी रचनाके प्रस्तुत होनेपर विदूषकके साथ राजा, धारिणी, परिव्राजिका और विभवानुकूल परिजनका प्रवेश )

राजा—भगवति, माननीय दोनों आचार्यों में से पहले किनका अभिनय देखा जाय ?

परिव्राजिका—महाराज, दोनों की विद्या समान है, किन्तु गणदास वयोवृद्ध हैं अतः पहले वही अपना अभिनय प्रदर्शित करें ।

राजा—मौद्गल्य, इसकी सूचना मान्य आचार्यों को देदो ।

कञ्चुकी—यदाज्ञापयति देवः। ( इति निष्क्रान्तः। )

( प्रविश्य। )

गणदासः—देव, शर्मिष्ठायाः कृतिर्लयमध्या चतुष्पदास्ति। तस्यास्तु छलिकप्रयोगमेकमनाः श्रोतुमर्हति देवः।

राजा—आचार्य, बहुमानादवहितोऽस्मि। तत्प्रवेशय पात्रम्।

( निष्क्रान्तो गणदासः। )

राजा—( जनान्तिकम्। ) वयस्य,

नेपथ्यपरिगतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः।

---

शर्मिष्ठाया वृषपर्वणो नाम राक्षसराजस्य दुहितुः कृतिर्निर्मितिः, कृदभिहितभावस्य द्रव्यवत् प्रकाशनात् तन्निर्मितं नाटकं कृतिरित्यनेन गृह्यते। लीयन्ते तन्मयत्वं प्रपद्यन्ते सभ्यानां मनांसि यस्मिन् स लयः गीतवाद्यचरणन्यासानां क्रियाकालयोः समता, तेन मध्या मध्यपरिमाणा, न विलम्बिता नापि द्रुतेत्यर्थः, चत्वारि पदानि खण्डानि यस्यां सा तथोक्ता। छलिकप्रयोगम् छलिकनामकं साभिनयं गानम्, एकमनाः अवहितस्वान्तः। अत्र शृङ्गाररस्य प्रयोक्तुमभिलष्यमाणतया लयमध्येत्युक्तम्, तथा च भरतः—'शृङ्गारहास्ययोर्मध्यलयः, करुणे विलम्बितः, वीररौद्राद्भुतबीभत्सभयानकेषु द्रुतः' इति। 'लयः साम्यम्' इत्यमरः॥

बहुमानात् अत्यादरात्, स च वस्तुगौरवेण आचार्यगुणगौरवेण च। अवहितः दत्तावधानः। पात्रम् अभिनयाधिकृतम्।

वयस्येति विदूषकसम्बोधनम्।

नेपथ्येति। नेपथ्यगृहगताया वेशरचनागृहावस्थितायाः ( बहिरागन्तुं विलम्बमानायाः ) तस्या मालविकायाः दर्शनसमुत्सुकम् विलोकनाय व्यग्रं मे मम चक्षुः

---

कञ्चुकी—जो आज्ञा ( ऐसा कहकर जाता है )

( प्रवेश करके )

गणदास—महाराज, शर्मिष्ठाद्वारा प्रकाशित मध्यमलय समन्वित चतुष्पद गान है, उसीमें छलिक नामक अभिनयसे चमत्कृत गान प्रस्तुत होगा, श्रीमान् कृपया ध्यानदें।

राजा—आचार्य, मैं सादर सावधान हूँ, आप पात्रका प्रवेश करावें।

( अनन्तर गणदास जाते हैं )

राजा—( धीरे धीरे ) वयस्य, नेपथ्य गृहगत मालविकाके दर्शनके लिये

संहर्तुमधीरतया व्यवसितमिव मे तिरस्करिणीम् ॥ १ ॥

विदूषकः—( अपवार्य । ) उवट्ठिदं णअणमहु संणिहिदमक्खिअं च । ता अप्पमत्तो दाणिं पेक्ख । [ उपस्थितं नयनमधु संनिहितमक्षिकं च । तदप्रमत्त इदानीं पश्य । ]

( ततः प्रविशत्याचार्यवेक्ष्यमाणाङ्गसौष्ठवा मालविका । )

---

नयनम् अधीरतया कालक्षेपासहतया तिरस्करिणीं यवनिकां संहर्तुं सद्योऽक्षिसमक्ष-तोऽपसारयितुमिव व्यवसितम् उद्यतम् । यवनिकयैव व्यवधापिता दिदृक्षिता रमणीति तां संहर्तुमिच्छति नितरामुत्कं मम नयनमिति भावः । एतेनेष्टार्थविषयेच्छाया गम्यतया विलासो नाम सन्ध्यङ्गं गमितम् । अत्र भावाभिमानिनी वाच्या क्रियोत्प्रे-क्षाऽलङ्कारः । 'प्रतिसीरा यवनिका स्यात् तिरस्करिणी च सा' इत्यमरः । आर्या वृत्तम् ॥ १ ॥

नयनमधु नेत्रावर्जकम् । सन्निहिता मक्षिका सरघा यत्र तादृशम् । अप्र-मत्तः अनवधानताशून्यः । नेत्रप्रीतिजननी मालविका समुपस्थिता, तद्रसिको भवांश्च सन्निहित इति भावः । अत एवात्राप्रस्तुतात् समात् प्रस्तुतसमप्रतीत्याऽप्रस्तुतप्रशंसा-ऽलङ्कारः, आचार्येण गणदासेन अवेक्ष्यमाणं भाग्यनिर्णायकतया निपुणं दृश्यमानं ( नृत्याभिनयोपयोगि ) सौष्ठवम् अवस्थाविशेषो यस्याः सा तादृशी । सौष्ठवं नाम शोभनावस्था, तथा चोक्तम्—

अनुच्चनीचचलतामङ्गानां समपादताम् ।
कटिकूर्परशीर्षांसकण्ठानां समरूपताम् ॥
रम्यां प्रतीकविश्रान्तिमुरसश्च समुन्नतिम् ।
अभ्यासोपहितामाहुः सौष्ठवं नृत्यवेदिनः ॥

---

उत्कण्ठित हमारी यह आंखें, अधीरतावश, पर्देको फाड़ डालने को उतावली हो रही हैं ॥ १ ॥

विदूषक—( धीरे धीरे ) नयनों का मधु उपस्थित है, मक्षिका भी हाजिर ही है, फिर जीभर कर देखा करो ।

( इसके बाद मालविका का प्रवेश होता है जिसकी सजावट पर आचार्य नजर गड़ाए हुए हैं )

विदूषकः—( जनान्तिकम् । ) पेक्खदु भवं । ण क्खु से पडिच्छन्दादो परिहीअदि महुरदा । [पश्यतु भवान् । न खल्वस्याः प्रतिच्छन्दात्परिहीयते मधुरता ।]

राजा—( अपवार्य ) वयस्य,

चित्रगतायामस्यां कान्तिविसंवादशङ्कि मे हृदयम् ।
संप्रति शिथिलसमाधिं मन्ये येनेयमालिखिता ॥ २ ॥

---

अस्याः मालविकायाः, प्रतिच्छन्दात् प्रतिरूपात् आलेख्यपट्टकेऽङ्कितात् मालविकायाश्चित्रादित्यर्थः । मधुरता लावण्यातिशयजनिता माधुरी । न खलु परिहीयते नैव निश्चयेन न्यूना भवति । चित्रकरो निजकलया प्रतिच्छविं तदाधाराद्विशेषयति नात्र सा कथेत्यलोकसामान्यमस्याः सौन्दर्यमित्याशयः ।

अपवार्य जनाश्रव्यत्वेन भावेनेत्यर्थः । यथोक्तं वसन्तराजीये—

'अर्थस्त्वेकेन विज्ञेयो नियतश्राव्य इष्यते । द्विविधः स परिज्ञेयो जनान्तश्चापवारितः ॥
परैरलक्ष्यव्यापारं कथितोऽर्थोऽपवारितः । उक्त्वा प्रागपवार्येति पश्चादेनं प्रयोजयेत् ॥

चित्रगतायामिति । अस्यां मालविकायां चित्रगतायां प्रतिकृतौ दृष्टायां मे मम हृदयं कान्तिविसंवादशङ्कि शोभावैषम्यसंशयालु आसीदिति शेषः । मूलमालविकाव्यक्तिश्चित्राङ्कितशोभासदृशशोभाशालिनी विद्यते नवेति सन्देहदोलाधिरूढमासीत् , प्रतिकृतौ चित्रकारकलाकृतस्याधारापेक्षया रूपप्रकर्षस्य सम्भवादिति भावः । ( किन्तु ) सम्प्रति साक्षाद्दर्शनावसरे येन चित्रकारेण इयम् मालविका आलिखिता चित्रिता, ( तं चित्रकारम् ) शिथिलसमाधिं विघटितप्रणिधानम् मन्ये, ( एतदीयाखिलरूपभरस्य चित्रकृता स्वनिर्मिते चित्रेऽसमर्पणात् ) एतेन चित्रगतमालविकाऽपेक्षया समधिकसौन्दर्यशालिनीयं लोचनं शिशिरयन्ती मालविकेति व्यज्यते । उत्प्रेक्षालङ्कारः । यस्तु सिद्धान्तवागीशेन किन्तुपदानुक्त्या वाच्यानभिधानदोष आपाद्य पाठान्तरेण परिहृतस्स सम्प्रति पदासत्त्वे स्यादपि, तत्सत्त्वे तु न सम्भवी, तेनैवार्थसमन्वयात् । अन्योऽनुवाद्ययच्छब्दयोगिवाक्यस्य परत्र पाठेन प्रसङ्गी विधेयाविमर्शदोषस्तु तदुक्तदिशा पाठभेदेनैव समाधेयः । आर्या वृत्तम् ॥ २ ॥'

---

विदूषक—( धीरे धीरे राजासे ) आप देखें, चित्रसे इसकी रूपमाधुरी निश्चय ही कम नहीं है

राजा—( रोककर ) मित्र, चित्रगत मालविका को देखकर हमारे मनमें यह सन्देह जरूर उठा था कि वह इतनी सुन्दरी न होगी, परन्तु इसको साक्षात् देखकर अब तो हमारी रायमें वह चित्रकार अपनी कलामें खूब सफल नहीं हुआ था जिसने इसका चित्र बनाया था ॥ २ ॥

गणदासः—वत्से, मुक्तसाध्वसा सत्त्वस्था भव ।

राजा—( आत्मगतम् । ) अहो सर्वस्थानानवद्यता रूपविशेषस्य । तथा हि—

दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितो नितम्बि जघनं पादावरालाङ्गुली

---

मुक्तं त्यक्तं साध्वसं राजदर्शनादिजनितभयकम्पादिकं यया तादृशी । सत्त्वस्था प्रकृतिस्था । भयाकुलदशायां सम्यगभिनयादिनैपुण्यप्रकाशनासम्भवादित्थमादेशः ।

अहो आश्चर्यम्, रूपविशेषस्य आकृतिविशेषस्य । सर्वस्थानानवद्यता सर्वेषु स्थानेषु सकलेष्वेवाङ्गेषु अनवद्यता अनिन्द्यता । ईदृशमङ्गावच्छेदेन यद् रामणीयकं तदाश्चर्यकरं, द्वित्रेष्वङ्गेष्वेव रूपवत्तायाः सौन्दर्यव्यञ्जकत्वादिति भावः । तथाहि-स्वोक्तमर्थं प्रमापयितुमाह—

दीर्घाक्षमिति । वदनं मुखं दीर्घाक्षं दीर्घे अक्षिणी यत्र तादृशं विशाललोचनम्, शरदः शरदृतोरिन्दुः चन्द्रः शरदिन्दुस्तद्वत् कान्तिः शोभा यस्य तत् शरदिन्दुकान्ति शारदशर्वरीशतुल्यशोभम्, बाहू भुजौ अंसयोः स्कन्धद्वये नतौ नम्रौ ( पुरुषस्कन्धयोरुन्नतेः प्रशंसया कोमलालसकायतया सुन्दरीणामित्थमुक्तिः ) उरो वक्षःस्थलं निबिडौ परस्पर शिलष्टौ उन्नतौ च स्तनौ यत्र तत् तथोक्तम् ( अथापि ) संक्षिप्तम् संकोचशालि, नृत्यसमये नर्त्तकीभिर्वक्षसः संकोचनस्यावश्यकत्वात् । पार्श्वे उदरपार्श्वभागौ प्रमृष्टे ( केनापि शिल्पिना ) पाणिना परिमार्जिते इव, अनुन्नतावनतत्वादित्थमुत्प्रेक्षा । मध्यः कटिदेशः पाणिमितः मुष्टिमात्रमेयः, ( परन्तु ) जघनम् ऊरुदेशः नितम्बि प्रशंसनीयनितम्बशालि, नितम्बीत्यस्य स्थानेऽमितञ्चेति पाठे विशालत्वं विवक्षितम् । तथा पादौ चरणौ अराला वक्रा अङ्गुलयो ययोस्तौ तथोक्तौ

---

गणदास—बेटी, घबड़ाना मत, प्रकृतिस्थ रहो ।

राजा—( स्वगत ) आश्चर्य ! सभी हालतमें इसकी रूपमाधुरी प्रशंसनीय ही है । देखो तो—

इसका बड़ी बड़ी आंखों वाला, शरदृतुके चन्द्रमाकी शोभासे युक्त मुख, स्कन्धदेश नत बाहुयुगसे शोभाशाली, स्तनमण्डलके पीनोन्नत होनेपर भी वक्षःस्थल सङ्कुचित, पार्श्व परिमार्जितप्राय, कटि मुष्टिमेय, परन्तु ऊरु युगल विशाल, चरण

छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथास्या वपुः ॥ ३ ॥

मालविका—( उपगानं कृत्वा चतुष्पदवस्तु गायति । )

दुल्लहो पिओ मे तस्सिं भव हिअअ णिणसं
अम्हो अपङ्गवो मे परिप्फुरइ किं वि वामओ ।
एसो सो चिरदिट्ठो कहं उण उवणइद्व्वो
णाह मं पराहीणं तुइ परिगणअ सतिण्हम् ॥ ४ ॥

[दुर्लभः प्रियो मे तस्मिन् भव हृदय निराशमहो अपाङ्गो मे परिस्फुरति किमपि वामः ।

---

'अरालं वृजिनं जिह्मम्' इत्यमरः । ( अतश्च ) नर्त्तयितुर्नृत्याचार्यस्य गणदासस्य मनसि हृदये यथैव यत्प्रकारक एव छन्दः अभिप्रायः 'अभिप्रायश्छन्द आशयः' इत्यमरः । तथैव तेनैव प्रकारेण अस्या मालविकाया वपुः शरीरम् श्लिष्टम् शिक्षाभ्यासादिना योजितम् ( स्वाभिप्रायानुवर्त्तिस्वभावं कृतमित्यर्थः ) स्वभावसुन्दर्या अस्या नाट्याचार्योपदेशवशतो भावसमावेशात्समेधितं रूपमिति भावः । एतेन नृत्यारम्भः सूच्यते, तथा चोक्तम्—

'अङ्गस्य चतुरस्रत्वं समपादौ लताकरौ । आरम्भे सर्वनृत्यानामेतत् सामान्यमिष्यते' ॥

अत्र चतुर्थचरणवाक्यार्थं प्रति पूर्वपादत्रयवाक्यार्थानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गं, शरदिन्दुकान्तीत्युपमा, प्रमृष्टे इवेत्युत्प्रेक्षा चेत्येषां सङ्करः । शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

उपगानं गानप्राक्कालकरणीयं वसन्तादिरागमात्राऽऽलपनम् । चतुष्पदवस्तु पादचतुष्टयनिबद्धं वस्तु प्रबन्धम् । 'प्रबन्धो रूपकं वस्तु निबन्धस्याभिधात्रयम्' इति काव्यवेमः । दुर्लभ इति । प्रियः प्राणबन्धुर्जनः दुर्लभः दुरापः कतिपयप्रतिबन्धकसद्भावादिति भावः । अतस्तस्मिन् प्रिये तद्विषये निराशं विगतप्राप्त्याशं भव जायस्व । दुरापाभिलाषस्य विषादपर्यवसायित्वात्तदाशां परित्यजेत्यर्थः । अहो इति विस्मयविषादादिसूचकमव्ययम् । वामको दक्षिणेतरः वामः अपाङ्गकः अनुकम्पनीयो

---

लम्बी अङ्गुलियों वाला है, मालूम पड़ता है नृत्योपदेशकके अभिप्रायको लक्ष्यमें रखकर ही इसे साज सजादी गई हो ॥ ३ ॥

मालविका—( स्वर सन्धान करके चतुष्पद गाती है )

प्रिय समागम दुर्लभ है अतः हृदय ! तुम उसकी आशा छोड़दे । मेरी बाईं

एष स चिरदृष्टः कथं पुनरुपनेतव्यो नाथ मां पराधीनां त्वयि परिगणय सतृष्णाम् ॥ ]

नेत्रप्रान्तभागः किमपि स्फुरति स्पन्दते, तदिदमाश्चर्यजनकं यत्प्रियस्य दुर्लभत्वेऽपि तत्प्राप्त्याशंसी वामोऽपाङ्गभागः स्फुरतीत्याशयः । स्त्रीणां वामाङ्गस्फुरणस्य प्रियप्राप्तिसूचकत्वं, यथा मात्स्ये—

योषिल्लाभोऽपाङ्गदेशे श्रवणान्ते प्रिया श्रुतिः ।

विपर्यायेण विहितं सर्वं स्त्रीणां विपर्ययम् ॥

स चिरदृष्टः सङ्कल्पवशात् सततं मनसि वर्त्तमान एषः प्रियः कथं पुनर्द्रष्टव्यः केन प्रकारेण साक्षात् करणीयः ( तत्सम्मुखे भावावेशवशादवलोकनप्रतिघातस्य संभवादित्याशयः) तदेवंभाविनीमधीरतामाशङ्कमानाऽवश्यनिवेद्यं निवेदयति–नाथेति । नाथ स्वामिन्, पराधीनाम् अस्वतन्त्राम् मां त्वयि सतृष्णाम् उत्कटाभिलाषाम् गणय अवधारय । अत्र 'पराधीनाम्' इत्यनेनाभिसरणासमर्थता, 'सतृष्णाम्' न तु साभिलाषाम्' इत्यनेनाभिलाषस्योत्कटता, तया च प्रियाप्राप्तौ प्राणसंशयः, इत्यादयोऽर्था व्यज्यन्ते । अत्र निराशतां प्रति दुर्लभतायाः कारणत्वमिति पदार्थहेतुकं काव्यलिङ्गम् । किञ्चात्र पादचतुष्टये निर्वेदो विस्मयो हर्षश्चिन्ता दैन्यश्चेति व्यभिचारिभावा मुखरागादिभिरनुभावैर्यथाक्रमं दर्शिताः । तेषां लक्षणानि वसन्तराजीये यथा—

'इष्टार्थविरहव्याधिनिन्दासदनमानसैः । दारिद्र्यसन्ताननाशपरवृद्ध्यवलोकनैः ॥

निष्फलत्वमतिर्नृणां निर्वेदो जीवितादिषु ।

अत्रेष्टार्थविरहजनितो निर्वेदः ।

अन्तर्बाष्पोपमध्याननिःश्वासस्यावमाननैः । दैन्यगद्गदवैवर्ण्यैरभिनेयो भवत्ययम् ॥

हर्षो मनःसमुल्लासो गुरुदेवमहीभुजाम् । प्रसादात् प्रियसङ्गाच्च भवेदिष्टार्थलाभतः ॥

अत्रेष्टार्थलाभजनितो हर्षः । अपाङ्गस्फुरणस्येष्टलाभहेतुतया तथोक्तिः ।

मुखे नेत्रे प्रसन्नत्वात् प्रियोक्तिः पुलकोद्गमः । दानत्यागपरीरम्भैरभिनेयो भवत्ययम् ॥

'इष्टालाभादिष्टनाशादनिष्टाप्तेश्च दैन्यतः । चित्तस्यैकाग्रता चिन्ता'—

सा चात्रेष्टालाभजनिता बोध्या ।

···स्मरणं चानुपस्मृतिः ।

सन्तापोच्छ्वासनिःश्वासा मान्द्यमिन्द्रियकर्मणाम् ।

अधोमुखत्वमित्याद्यैरभिनेयो भवत्ययम् ॥

आंख फड़क रही है । जिसे बहुत पहले देखा था क्या उसे फिर देख पाऊंगी ? हे नाथ ! मुझ पराधीनको तुम अपने प्रति अनुरागिणी जानना ॥ ४ ॥

( ततो यथारसमभिनयति । )

**विदूषकः**—( जनान्तिकम् । ) भो वअस्स, चउप्पवत्थुअं दुवारीकरिअ तुइ उवट्ठाविदो अप्पा तत्तहोदीए। [ भो वयस्य, चतुष्पदवस्तुकं द्वारीकृत्य त्वय्युपस्थापित आत्मा तत्रभवत्या । ]

**राजा**—सखे, एवमेव ममापि हृदयम् । अनया खलु—

जनमिमनुरक्तं विद्धि नाथेति गेये
वचनमभिनयन्त्याः स्वाङ्गनिर्देशपूर्वम् ।

---

अनोजस्त्वं तु मनसो दैन्यमित्यभिधीयते। मनःसन्तापदारिद्र्य चिन्तौत्सुक्यादिभिर्भवेत् ॥

अत्रौत्सुक्यजनितं दैन्यम् ।

'अङ्गानामपि शैथिल्यं देहसंस्कारवर्जनम् ।
अञ्चितं भरतेऽस्मिन् वै अनुभावाः प्रकीर्त्तिताः ॥

इदमेव च्छलिकं नाम नाट्यम् । अत्र रसो विप्रलम्भश्रृङ्गारः, तत्रापि पूर्वरागः, तथा च दर्पणे—

श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः ।
दशाविशेषो योऽप्राप्तो पूर्वरागः स उच्यते । इति ॥ ४ ॥

चतुष्पदवस्तुकम् छलिकापरपर्यायम् 'दुर्लभः प्रियः' इत्यादिप्रबन्धम् । द्वारीकृत्य साधनं कल्पयित्वा । तत्र भवत्या मालविकया । आत्मा त्वय्युपस्थापितः तुभ्यमर्पयितुमुपनीतः । गीतच्छलेनात्मनिवेदनं कृतमित्यर्थः ।

सखे बन्धो, 'समप्राणः सखा मतः' इति कवितारहस्यवचनात्स्वरहस्याभिधानसमये सम्बोध्यं प्रति सखिशब्दप्रयोगः । एतेन रहस्योद्भेदशङ्का निवारिता । ममापि हृदयम् एवमेव भवदीयोक्तिप्रतीतमालविकानुरागप्रत्यय्येव । यत्तु केचित् एवमेवेत्यस्य सानुरागमेवेत्यर्थमाहुस्तन्न तथाकथनस्याप्रासङ्गिकत्वात्, मालविकानुरागज्ञानस्य चानुक्तेः ।

जनमिममिति । नाथ, इमं जनं मल्लक्षणां व्यक्तिं मालविकामित्यर्थः । अनुरक्तं

---

( अनन्तर रसानुकूल नृत्य )

**विदूषक**—( धीरेसे ) वयस्य, इस चतुष्पद गानके बहाने मालविकाने तुम्हें स्वसमर्पण कर दिया ।

**राजा**—मैं भी तो ऐसा ही समझता हूँ, इसने—'हे नाथ इस जनको स्वानुरक्त

प्रणयगतिमदृष्ट्वा धारिणीसंनिकर्षा-
दहमिव सुकुमारप्रार्थनाव्याजमुक्तः ॥ ५ ॥
( मालविका गीतान्ते निष्क्रमितुमारब्धा । )

विदूषकः—भोदि, चिट्ठ । किंवि वो विसुमरिदो कम्मभेदो । तं दाव पुच्छिस्सम् । [ भवति, तिष्ठ । किमपि वो विस्मृतः कर्मभेदः । तं तावत्प्रक्ष्यामि । ]

---

त्वयि अनुरागवन्तम् विद्धि जानीहि इत्थं गेये गातव्ये वचनं 'नाथ मां पराधीनां त्वयि गणय सतृष्णाम्' इति वाक्यं स्वाङ्गनिर्देशपूर्वम् स्वशरीरमुद्दिश्येङ्गितेन भावाविष्करणपूर्वकम् अभिनयन्त्या वाचिकाभिनयद्वारेण प्रकाशयन्त्या अनया मालविकया धारिणीसन्निकर्षात् धारिणी नाम राजमहिषी तस्याः सन्निकर्षात् समागमप्रतिबन्धकभावेनोपस्थितेः प्रणयगतिम् स्वस्यां ममानुरागप्रकारम् अदृष्ट्वा अननुमाय मदीयचेष्टादिना मद्भावमविज्ञायेत्यर्थः । अहमग्निमित्रः सुकुमारा कोमला रसनीया वा या प्रार्थना अनुरागयाचना तस्या व्याजश्छलं यत्र तत्तथा उक्तः किमपि अभिहित इव । प्रतिबन्धकधारिणीसन्निकर्षेणानुद्भिन्नभावं मां प्रति किमपि करुणमसौ स्वनिवेदनमुक्तवतीति प्रणयिजनतिरस्कृतेः सहृदयजनाकर्त्तव्यतयाऽवश्यमस्याः प्राप्तये प्रयत्न आस्थेय इति भावः । अत्र भावाभिमाना वाच्या क्रियोत्प्रेक्षाऽलङ्कारः । अभिनयविषये दर्पण उक्तम्—

'भवेदभिनयोऽवस्थानुकारः स चतुर्विधः ।
आङ्गिको वाचिकश्चैवमाहार्यः सात्त्विकस्तथा' ॥

मालिनी वृत्तम्, तल्लक्षणं यथा—"ननमयययुतेयं मालिनी भोगिलोकैः" ॥ ५ ॥

आरब्धा प्रारभत । आदिकर्मणि कर्त्तरीयं निष्ठा । वः युष्माकम्, कर्मभेदः कार्यविशेषः विस्मृत इति वर्त्तमाने बाहुलकेन क्तप्रत्ययं कृत्वा 'क्तस्य च वर्त्तमाने' इति कर्त्तरि षष्ठी । नृत्यावसाने श्रमस्वेदमौक्तिकमालाचिततनोर्मालविकायाः समधिकावलोकनाय तां विलम्बयितुमियमुक्तिः ।

---

जानना' इस गानमें अपनी ओर इशारा करके भी धारिणीके समीपस्थ होनेके कारण मेरी ओरसे प्रत्युत्तरमें अनुरागव्यवहार न पाकर कोमल प्रार्थनाके द्वारा कुछ कहसा दिया है ॥ ५ ॥

( सङ्गीतके समाप्त होने पर मालविका जाने लगती है )

विदूषक—कल्याण, तुमसे कुछ पूछना है, जरा रुकना । क्या कुछ भूल भी गई हो ?

गणदासः—वत्से, क्षणमात्रं स्थित्वोपदेशविशुद्धा यास्यसि ।

( मालविका निवृत्य स्थिता । )

राजा—( आत्मगतम् । ) अहो, सर्वास्ववस्थासु चारुता शोभान्तरं पुष्यति । तथा हि—

वामं संधिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम् ।
पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं

उपदेशे शिक्षायां शिक्षितविषय इत्यर्थः । विशुद्धा निर्दोषा । यस्मिन् कर्मभेदेऽमी भवत्या विस्मरणमाशङ्कन्ते तद्विषये सन्तोषजनकमुत्तरं प्रदाय तव शिक्षा न सदोषा इति प्रमाणीकृत्य यास्यसि इतरथाऽमीषां संशयस्तव निन्दां प्रसारयेदिति भावः ।

स्थिता गमनान्निवृत्ता ।

अहो आश्चर्यम् । सर्वास्ववस्थासु न तु कदाचित् । एतेन कृत्रिमशोभाशालिता निरस्ता । चारुता रमणीयता । शोभान्तरम् अन्यां शोभां पुष्यति धारयति वर्द्धयति वा । या स्वभावतो रमणीया सा यादृशमेव वेशभूषादिकं धारयति, येन वा भावेनावतिष्ठते तत्सर्वमेव तस्या रूपं प्रकर्षयति, यथोक्तं शाकुन्तले—'किमिव हि मधुराणां मण्डनं नाकृतीनाम्' इति भावः ।

वाममिति । सन्धौ सन्धिस्थाने करप्रकोष्ठयोः संयोगस्थाने मणिबन्धे स्तिमितं निश्चलं वलयं कटकं यत्र तादृशं वामं दक्षिणेतरं करं हस्तं नितम्बे कटिदेशे न्यस्य स्थापयित्वा, श्यामाविटपसदृशम् प्रियङ्गुलतोपमम् द्वितीयं दक्षिणं हस्तम् स्रस्तं शिथिलं यथा स्यात्तथा मुक्तं लम्बितं कृत्वा पादस्य सव्यतदितरयोरन्यतरस्य चरणस्य अङ्गुष्ठेन वृद्धाङ्गुल्या आलुलितानि मन्दं चालितानि कुसुमानि पुष्पाणि यत्र तादृशे कुट्टिमे निबद्धायां भुवि पातिते विनिहिते अक्षिणी नयने यत्र तत् तादृशमस्याः मालविकायाः ऋजु सरलम् आयतं विस्तृतञ्च अर्धं देहार्धभागो यत्र

गणदास—वत्से, परीक्षामें उत्तीर्ण होकर चली जाना ।

( मालविका लौटकर खडी रहती है )

राजा—( स्वगत ) अहा ! सौन्दर्य सभी अवस्थाओंमें एक नया रूप पाता रहता है । देखो तो—

यह मणिबन्धमें निश्चल वलयोंसे युक्त वाम बाहुको कमर पर रखकर श्यामा विटपके पल्लवके समान दायें हाथको शिथिल भावसे लटकाये, पैरके अंगूठेसे

नृत्तादस्याः स्थितमतितरां कान्तमृज्वायतार्धम् ॥ ६ ॥

देवी—णं गोदमवअणं वि अज्जो हिअए करेदि। [ ननु गौतमवचनमप्यार्यो हृदये करोति। ]

गणदासः—देवि, मा मैवम्। देवप्रत्ययात्संभाव्यते सूक्ष्मदर्शिता गौतमस्य। पश्य

---

तादृशम् स्थितम् दण्डायमानभावेनावस्थानम् नृत्तात् नाट्यात् अतितराम् अत्यर्थम् कान्तं रमणीयम् अस्तीति शेषः। सन्विस्तिमितवलयमिति तस्या निष्पन्दभावेनावस्थानम्, बाह्वोवर्त्तुलत्वम्, वलयस्य मिलितत्वेनाग्राम्यत्वञ्च, श्यामाविटपसदृशमिति हस्तयोः कोमलत्वस्निग्धत्वास्थूलत्वानि, स्रस्तमुक्तमिति श्रमस्य निस्सहतया सौकुमार्यातिशयः, पादाङ्गुष्ठालुलितकुसुमे इत्यनेन कुट्टिमे कुसुमास्तरणम्, तेन राज्ञः समृद्धयतिरेकः, कुट्टिमस्य सौन्दर्यम् वातावरणस्य सुगन्धमयत्वञ्च, पातिताक्षम् इति कन्याजनोचितशालीनता, ऋज्वायतार्धम् इति स्वाभाविकभावेनावस्थानस्य सूचनयाऽनुद्विग्नचित्तत्वञ्चेत्यादयोऽर्था व्यज्यन्ते। 'श्यामा स्त्री शारिवौषधौ। अप्रसूताङ्गनायाञ्च प्रियङ्गावपि' इति मेदिनी। 'कुट्टिमोऽस्त्री निबद्धा भूः' इत्यमरः। अत्र हस्तादीनां विशेषणस्य साभिप्रायत्वात् परिकरः, श्यामाविटपसदृशम् इत्यार्थ्युपमा, स्थितरामणीयकं प्रति पूर्वपादत्रयोक्तार्थानां हेतुतया वाक्यार्थहेतुकं काव्यलिङ्गञ्च, तदेषां सङ्करः। अत्र वाक्यस्य विशेषितत्वात् पुष्पं नाम सन्ध्यङ्गं निवेदितम्। मन्दाक्रान्ता वृत्तम्, तल्लक्षणं यथा—'मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्' ॥ ६ ॥

गोतमस्य गोतमगोत्रप्रसूतस्य गोतमाख्यस्य वा। अतिशयेन गौर्गोतमस्तस्य महामूर्खस्येति च परिहासो व्यज्यते। वचन वाक्यम् आर्यः भवान् हृदये करोति मन्यते। तत्र विश्वस्य तदनुसारेण कार्यं करोति। चाटुजीविनो विदूषकस्य निरर्थकमसम्बद्धं च वचनं प्रमाणीकृत्य भवादृशो राजा व्यवहरेदनुचितमिदमतो विदूषकवचसा मालविका न गमनान्निवारणीयेति देव्या अभिप्रायः।

देवि राज्ञि, एवम् गोतमवचनस्य अश्रद्धेयत्वमित्यर्थः। मा मा नहि, निषेध-

---

फूलोंको हटाकर फर्शकी ओर दृष्टि डाले खड़ी है, इसका देहार्ध सरल भावसे स्थित है, इसका इस तरह खड़ा रहना तो नृत्यसे भी मनोरम है ॥ ६ ॥

देवी—क्या आप गोतमकी बातका भी ख्याल करते हैं?

गणदास—देवि, ऐसा मत समझिए। राजाके साथ रहनेसे गोतम भी सूक्ष्म

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥ ७ ॥

( विदूषकं विलोक्य । ) तच्छृणुमो वयं विवक्षितमार्यस्य ।

विदूषकः—( गणदासं विलोक्य । ) कोसिइं दाव पुच्छ । पच्छा जो मए कम्मभेदो दिट्ठो तं भणिस्सं । [ कौशिकीं तावत्पृच्छ । पश्चाद्यो मया कर्मभेदो दृष्टस्तं भणिष्यामि । ]

---

दृढीकरणाय मापदं द्विरुपात्तम् । निषेधकारणमुपन्यस्यति—देवप्रत्ययादिति । देवस्य प्रत्ययात् विश्वासात् एकान्तविश्वसनीयतया सर्वदा साहचर्यात् । यतोऽत्र देवस्य प्रत्ययोऽतोऽयं तत्संसर्गावसरलाभात्सूक्ष्मदर्शी संजातः, प्रत्ययाभावे तु तेन देव-साहचर्यं नैव लभ्येतेति भावः, सूक्ष्मदर्शिता तीक्ष्णबुद्धिता, अन्तर्दृष्टिरित्यर्थः ।

ननु जायतां विदूषके राज्ञः प्रत्ययः, सह वसतु चासावहर्निशं तेन, ततः किम् ? कासारे दिवसं वसन्नपि सैरिभः किं कमलाकरस्य सुवासमासादयति ? तत्राह—

मन्दोपीति । पङ्कच्छिदः कर्दमशमकस्य जलप्रसादनोपयोगिनः कतकनाम्नो निर्मलीति भाषायां प्रख्यातस्य फलस्य निकषेण संयोगेन आविलं कलुषमपि पयो जलमिव तद्वत् विपश्चितो विशेषज्ञस्य विदुषः संसर्गेण सततसहवासेन मन्दः अनिपुणः अपि जनः अमन्दताम् अमूर्खताम् एति स्वच्छत्वमधिगच्छतीति चार्थः । विदुषो राज्ञः संसर्गात् मूर्खस्यापि विदूषकस्य संभाव्यते वैदुष्यमिति नात्यन्ताश्रद्धेय-वचनतयोपहास्योऽयमिति भावः । अत्र विपश्चित्संसर्गेण मन्दस्यामन्दताप्राप्तिरूपात्सा-मान्यादप्रस्तुतात् राज्ञः संसर्गाद्विदूषकस्य वैचक्षण्यप्राप्तिरूपस्य प्रस्तुतस्य विशेषस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः, स च पङ्कच्छिदः फलस्येवेत्युपमया सङ्कीर्यते । पथ्या-वक्त्रं वृत्तम्—"युजोश्चतुर्थतो जेन पथ्यावृत्तं निगद्यते" इति लक्षणात् । अस्य वाक्यस्योपपत्तिमत्त्वादुपन्यासो नाम सन्ध्यङ्गमुक्तं भवति ॥ ७ ॥

शृणुमः श्रोतुमिच्छामः । विवक्षितम् वक्तुमिष्टम् ।

कौशिकीम् तदाख्यया प्रख्यापितां परिव्राजिकाम् । तावत् प्रथमम् । पृच्छ

---

दर्शी होगया है । देखिये—

चतुर जनके संसर्गसे मूर्ख भी चतुर हो जाते हैं, जैसे 'निर्मली'के संसर्गसे गंदला जल भी साफ हो जाता है ॥ ७ ॥

( विदूषक की ओर देखकर ) आपकी राय जानना चाहता हूँ ।

विदूषक—( गणदासकी ओर देखकर ) कौशिकीसे पूछिये, मैंने जो गलती पाई है, उसे बताऊंगा ।

गणदासः—भगवति, यथादृष्टमभिधीयतां गुणो वा दोषो वेति ।

परिव्राजिका—यथादृष्टं सर्वमनवद्यम् । कुतः

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु ।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ

---

जिज्ञासस्व । यादृशो गुणो वा दोषो वा तद्विषये साक्षितया स्थितां रागाद्यरूषितान्तःकरणतया सम्भाव्यमानां कौशिकीमेव प्रथमं पर्यनुयुङ्क्ष्व, पश्चात् सम्मतिं स्वां प्रदाताह इति भावः ।

यथादृष्टम् दृष्टमनतिक्रम्य । अभिधीयताम् कथ्यताम् । गुणो वा दोषो वा भवतु यथावद्भावेनाभिधीयतां नत्वस्मदनुकम्पयाऽतिशयोक्तिराश्रीयतामित्यर्थः । एतेन गणदासस्य स्वशिष्यागुणवत्ताविषये विश्वासद्वारा स्वविद्याविषयकोऽभिमानो व्यञ्जितः ।

अनवद्यम् अवद्यं निन्दनीयं तन्न भवतीत्यनवद्यम् । 'अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु । ३।१।१०१ इति सूत्रेणाप्रशंसार्थेऽवद्यमिति निपात्यते, ततो नञ्समासः ।

अङ्गैरिति । अन्तः अभ्यन्तरे निहितानि अभ्यासपाटवातिशयेन स्थापितानि वचनानि वाक्यानि येषां तादृशैः वाक्सामर्थ्यविहीनत्वेऽपि स्फुटमर्थव्यञ्जकैरित्यर्थः । अङ्गैः नेत्रवक्त्रहस्ताद्यङ्गभङ्गीभिः अर्थः अभिनेतव्यं वस्तु सम्यक् सुस्पष्टं यथा स्यात्तथा सूचितः प्रकटीकृतः । पादन्यासः नृत्यावसरे चरणचालना लयं तालमानम् अनुगतः अनुसृतः । 'तालवर्त्ती तु यः कालः स काललयनाल्लयः' इत्युक्तत्वात् । अत्रापि चरणन्यासस्य स्वतो लयानुसरणमभ्यासपाटवादेवेति बोध्यम् । रसेषु अभिनेयविषयसमुपस्थापितशृङ्गारादिरसेषु निर्वेदादिभावेषु च ( रसशब्देनात्रोपचारात्परितोषातिशयवत्त्वादिभावा अभिप्रेयन्ते, प्रकृतं रसस्यैकत्वाद्रसेष्विति बहुवचनानुपपत्तेः ) । तन्मयत्वम् तदात्मकत्वं तन्मयीभाव इति यावत् । शाखा करचरणादीनामङ्गानां मात्रोचिता नर्त्तना सा योनिः उत्पत्तिहेतुर्यस्य स तादृशः नाट्यप्रयोगः मृदुः सुकुमारः सर्वजनहृदयावर्जनसमर्थ इत्यर्थः । तस्य अभिनयस्य विकल्पाः विविधाः कल्पा भेदाः

---

गणदास—भगवति ! गुण, या दोष जो आपने देखा हो, कहें ।

परिव्राजिका—मैंने जो देखा है, सब निर्दोष है, कारण—

अङ्गोंद्वारा गेयार्थ इतनी सफाईसे प्रकटित किया गया कि मालूम पड़ता था अङ्ग बोल रहे हों । चरणन्यास लयका अनुगामी बना रहा । अभिनयमें रसको

भावो भावं नुदति विषयाद्रागबन्धः स एव ॥ ८ ॥

गणदासः—देवः कथं वा मन्यते ।

राजा—वयं स्वपक्षशिथिलाभिमानाः संवृत्ताः ।

---

तेषाम् अनुवृत्तौ अनुसरणे भावः चेष्टा तद्गतावस्थाभेद इत्यर्थः, विषयात् सङ्गीतातिरिक्तविषयान्तरात् भावम् अभिप्रायविशेषं नुदति प्रेरयति विषयान्तरसम्पर्कव्यतिरेकेण स्वप्रवणं करोतीति यावत् । रागबन्धः अनुरागसम्बन्धः अविकलानुरागाभिनय इति भावः स एव अभिनेयनायकादिगत एव अनुकार्यनायकादिसदृश एव । एतेन सर्वेण तदभिनयकला प्रशंसिता । अन्तर्निहितवचनैरित्यङ्गविशेषणादङ्गानां नेत्रवक्त्रहस्तादीनां वदत्प्रायता, तथा च भावनैपुण्यम्, सूचनायां सम्यगिति विशेषणादर्थमुखप्रेक्षाकष्टपारणेन प्रीत्याधायकता, पादन्यासस्य लयानुगत्युक्त्या चरणन्यासेऽधिकारः, रसेषु तन्मयत्वमिति रसव्यञ्जनचातुरी, अभिनयस्य मृदुत्वोक्त्या ललितकलापरिज्ञानमर्थानुसारेणाभिनये प्रावीण्यं च, विकल्पानुवृत्ताविति तत्प्रभेदप्रदर्शनदक्षता, भावं नुदतीति चित्रार्पितावस्थाप्रापणात्मा तदेकतानता, स एव रागबन्ध इति कलाफलतादात्म्यप्रतीतिपरिणामश्चेत्याद्यर्था व्यञ्जिताः । एभिश्चाभिनयप्रशंसा। श्लोकेऽस्मिन् मालविकाया नृत्यगीतादेरनवद्यताप्रतिपादनं प्रत्येकस्यैवाङ्गैरन्तर्निहितवचनैरित्यस्य साधकत्वे सत्यपि कतिपयसाधकान्तरोल्लेखात्समुच्चयो नामालङ्कारः । 'समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके । खले कपोतिकान्यायात्तत्करः स्यात् परोऽपि चेत् ॥' इति लक्षणात् । किञ्च—अङ्गानामन्तर्वचनाधानासम्बन्धेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः । तदेवमनयोरङ्गाङ्गिभावात् सङ्करः । मन्दाक्रान्ता वृत्तम्, लक्षणमनुपदमुक्तम् ॥ ८ ॥

स्वपक्षे स्वेन नियुक्तस्य हरदत्तस्य श्रेष्ठतारूपे । शिथिलः मन्दीभूतः अभिमानः गर्वः येषां तादृशाः । हरदत्त एव श्रेष्ठ इत्यभिमानरहिता इति भावः ।

अद्य अस्मिन्नहनि, नर्तयिता प्रशस्तनृत्यकलाभिज्ञः, अस्मि भवामि । अभिनय-

---

तन्मयता बनी रही । हाथोंद्वारा दिया गया ताल अभिनयकी कोमलता बढ़ाता रहा । उसके अनेक प्रकार एक दूसरेकी मदद करते रहे, सर्वत्र समान राग बंधा रहा ॥ ८ ॥

गणदास—महाराजकी क्या धारणा है ?

राजा—हमें अपने पक्षका अभिमान छोड़ देना पड़ा ।

गणदासः—अद्य नर्तयितास्मि ।

उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः ।
श्यामायते न युष्मासु यः काञ्चनमिवाग्निषु ॥ ९ ॥

देवी—दिट्ठिआ परिक्खाराहणेण अज्जो वड्ढइ । [ दिष्ट्या परीक्षाराधनेनार्यो वर्धते । ]

---

प्रदर्शनेन भवादृशगुणज्ञसन्तोषजननात् । इतः प्रभृति ज्ञानसद्भावेऽपि न तथाविधामास्थाम् अवहम्—

'आ परितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि हि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ इति स्मरणात् ।

सम्प्रति तु भवत्सन्तोषाधानात् नर्त्तयिताऽहमिति ममाभिमानः सप्रमाण इति भावः ॥

उपदेशमिति । सन्तो रागादिरहितान्तःकरणतयाऽभ्यार्हिताः पुरुषाः उपदेशिनः शिक्षकस्य तम् उपदेशं शिक्षाम् शुद्धम् दोषरहितं विदुर्जानन्ति । य उपदेश अग्निषु हुताशनेषु काञ्चनं सुवर्णमिव विद्वत्सु पण्डितेषु न श्यामायते मलिनीभवति सदोषत्वेन उद्घोष्यते । एवञ्च सर्वैरेव भवद्भिः मदीयशिष्याया मालविकायाः प्रशस्यमानत्वे नर्तकत्वं मम सप्रमाणीकृतमिति भावः । अत्राप्रस्तुतात् सामान्यात् प्रस्तुतस्य विशेषस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः, स चाग्निषु काञ्चनमिवेत्युपमया सङ्कीर्णः । यत्त्वत्र 'काञ्चनमिवाग्निषु' इत्युपमानस्य क्लीबतयोपमेयस्योपदेशस्य च पुँल्लिङ्गतया वैषम्येण प्रक्रमभङ्गो नामालङ्कारदोष इति केनचिदुद्भावितम् , तन्न । यत्र लिङ्गभेदे सति सामान्यधर्मस्यान्वये बाधाऽऽपतति तत्रैव 'सुधेव विमलश्चन्द्रः' इत्यादौ तस्य प्रसरात्, तथा चोक्तं प्राचीनैः क्रमशः काव्यप्रकाशे वाननीये च—

'लिङ्गसङ्ख्याविभेदेऽपि उपमानोपमेयता । विभक्तिः पुनरेकैव उपमानोपमेययोः' ॥
न लिङ्गवचने भिन्ने न न्यूनाधिकते तथा । उपमादूषणायालं यत्रोद्वेगो न धीमताम्' ॥

अत्र 'श्यामायते' इत्यस्य सम्भवत्युभयत्रान्वय इति न दोषः ॥ ९ ॥

दिष्ट्या भाग्येन । परीक्षा उत्कर्षापकर्षविचारः, सा एवान्नाराधनं सभ्यमण्डलस्य

---

गणदास—आज मैं नर्त्तक बना ।

पण्डितगण उसी शिक्षाको निर्दोष कहते हैं, 'जो आपलोगोंके सामने अग्निमें सोनेकी तरह मलिनताको न प्राप्त हो ॥ ९ ॥

देवी—परीक्षाद्वारा सभाको प्रसन्न करनेके कारण आपको बधाई ।

गणदासः—देवि, त्वत्परिग्रहोऽपि मे वृद्धिहेतुः। ( विदूषकं विलोक्य। ) गौतम, वदेदानीं यत्ते मनसि वर्तते।

विदूषकः—पढमोवदेसदंसणे पढमं बह्मणस्स पूजा कादव्वा। सा णं वो विसुमरिदा। [ प्रथमोपदेशदर्शने प्रथमं ब्राह्मणस्य पूजा कर्तव्या। सा ननु वो विस्मृता। ]

परिव्राजिका—अहो प्रयोगाभ्यन्तरः प्रश्नः।

( सर्वे प्रहसिताः। मालविका स्मितं करोति। )

राजा—( आत्मगतम्। ) उपात्तसारश्चक्षुषा मे स्वविषयः। यदनेन

---

सन्तोषजननेन काम्यमानत्वात्। तेन जनताहृदयावर्जकस्वशिष्यापरीक्षाप्रदापनेनेति भावः। वर्द्धते उत्कर्षमासादयति।

त्वत्परिग्रहः त्वया स्वजनेषु नियोगः। वृद्धिहेतुः उत्कर्षकारणम्। अन्यत्रेदृश-गुणवत्तरशिष्यालाभासम्भवादीदृशगुणज्ञसभ्याभावात् स्वोत्कर्षसम्पादकप्रतिपक्षसह-सङ्घर्षावसरप्राप्तेश्चेत्थमुक्तिः।

प्रथमोपदेशदर्शने प्रथमतः शिक्षाभ्यासादेः परीक्षारूपेणोपस्थापने। ब्राह्मण-पूजा ब्राह्मणसत्कारः, स हि दानादिना सम्पाद्यते।

अहो आश्चर्यम्, प्रयोगाभ्यन्तरः अभिनयसम्बद्धः। अयमाशयः—पूर्वं विदूषकेण 'कर्मभेदो विस्मृतः' इति सामान्यतोऽभिहिते सर्वैनृत्याभिनयसङ्गीतादिसम्बद्धं किमपि कर्मात्र विवक्षितमिति सम्भावितमधुना स्वपूजायाचनयाऽन्यार्थं तत्कृतमिति तस्य स्वानभिज्ञतासूचनया सर्वैरुपहसितमिति। अत्र परिहासस्य गम्यमानत्वान्नर्मनाम सन्ध्यङ्गमुक्तम्। प्रहसिताः प्रकर्षेण हसिता हसितवन्तः, अकर्मकतया हसेः कर्त्तरि क्तः। स्मितम् ईषद्धसितम्, लज्जाविनयशालिताद्योतनार्थमित्थमुक्तमन्यथा सर्वे प्रहसिता इत्युक्त्वैव समापयिष्यत्।

उपात्तसारः गृहीतश्रेष्ठांशः, चक्षुषा नयनेन, विषयः—विषिणोति आकृष्य

---

गणदास—देवि, आपका आश्रय मेरे श्रेय का कारण है। ( विदूषक की ओर देखकर ) गौतम, बताइये जो कहना चाहते हों।

विदूषक—प्रथमतः परीक्षा देनेके समय ब्राह्मण-पूजा की जाती है, वह तो भूल ही गई।

परिव्राजिका—अहा! कैसा बढ़िया अभिनय विषयक प्रश्न है!

( सभी हंसने लगते हैं, मालविका मुस्कुरा देती है )

राजा—( स्वगत ) हमारी आँखोंने आज अपने सार्थकको किया। क्योंकि—

स्मयमानमायताक्ष्याः किंचिदभिव्यक्तदशनशोभि मुखम् ।
असमग्रलक्ष्यकेसरमुच्छ्वसदिव पङ्कजं दृष्टम् ॥ १० ॥

गणदासः—महाब्राह्मण, न खलु प्रथमं नेपथ्यसवनमिदम् । अन्यथा कथं त्वां दक्षिणीयं नार्चयिष्यामः ।

---

बध्नातीति विषयो रूपादिः । अत्र विषयो रूपम्, चक्षुषा तस्यैव ग्राह्यत्वात् । इदानीं मालविकायाः स्मयमानस्य मुखस्य विलोकनेन मदीयचक्षुषा रूपसारो गृहीत इति भावः ।

रूपसारो गृहीत इत्युक्तं तदेव प्रमापयन्नाह—स्मयमानमिति । उच्छ्वसत् विकसत् अत एव असमग्रम् असम्पूर्णम् यथा स्यात्तथा लक्ष्याणि दृश्यमानानि केशराणि किञ्जल्कानि यस्य तत् तथोक्तं सद्योविकसत्तयाऽसमग्रलक्ष्यकिञ्जल्कमित्यर्थः । पद्मम् कमलमिव आयते अतिविस्तृते अक्षिणी नयने यस्याः सा आयताक्षी विशाललोचना तस्याः, ( बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् इति षचि षित्वान्ङीष् ) मालविकायाः स्मयमानं स्मिताख्यहासभेदयुक्तं किञ्चिदभिव्यक्तैरीषत्प्रकाशितैरंशविशेषदेश एव दृश्यमानैरित्यर्थः दशनैर्दन्तैः दशनैः शोभत इति तथोक्तम् मुखं दृष्टम् । स्मितहसितयोर्लक्षणं यथा दर्पणे—

किञ्चिद्विकासिनयनं स्मितं स्यात् स्पन्दिताधरम् ।
ईषल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ॥

काव्यलिङ्गमुपमा चालङ्कारः । आर्या जातिः ॥ १० ॥

महाब्राह्मण प्रशंसनीयद्विजाते, प्रतिग्रहपतितब्राह्मणाधमेति च ध्वनिः । नेपथ्यसवनम् नाट्यमण्डपे विघ्नप्रशमनाय प्रथमं क्रियमाणो यज्ञः । इतः पूर्वमेव प्रथमतः क्रियमाणे नृत्ये तस्य कृतत्वात् । क्वचित् नेपथ्यदर्शनमिति पाठः, तत्र रङ्गभूमिदर्शनमित्यर्थः । नेपथ्यं रङ्गभूमिरिति शब्दकल्पद्रुमः । दक्षिणीयम् दक्षिणार्हम् । न अर्चयिष्यामः किञ्चित्प्रदाय न सम्मानयिष्यामः । यदीदमेव प्राथमिकं नेपथ्यसवन-

---

इन आँखोंने अल्पमात्रामें जिसके केशर दीख रहे हों ऐसे विकासोन्मुख कमलके समान मुस्कुराहटसे युक्त इस विशालाक्षीके अल्पदृश्य दन्त युक्त मुखको देखा है ॥ १० ॥

गणदास—अजी महाब्राह्मण, यह मेरा पहला प्रदर्शन नहीं है । यदि वैसी बात रहती तो अवश्य तुम्हारी पूजा की जाती ।

विदूषकः—मए णाम सुक्खघणगज्जिदे अन्तरिक्खे जलपाणं इच्छदा चादआइदम् । अहवा पण्डितसंतोसपच्चआ णं मूढा जादी । जदि अत्तहोदिए सोहणं भणिदं तदो इमं से पारितोसिअं पअच्छामि । ( इति राज्ञो हस्तात्कटकमाकर्षति । ) [ मया नाम शुष्कघनगर्जितेऽन्तरिक्षे जलपानमिच्छता चातकायितम् । अथवा पण्डितसंतोषप्रत्यया ननु मूढजातिः । यद्यत्रभवत्या शोभनं भणितं तत इदं ते पारितोषिकं प्रयच्छामि । ]

---

मभविष्यत्तदाऽवश्यमेव महाब्राह्मणस्य भवतः किञ्चित् प्रदाय सम्मानमकरिष्यमिति भावः । यत्तु—'शङ्खे तैले तथा मांसे वैद्ये ज्यौतिषिके द्विजे । यात्रायां पथि निद्रायां महच्छब्दो न दीयते ॥' इति भट्टिटीकायां भरतवचनं तन्न स्वरूपतो महच्छब्दस्य शङ्खादिशब्देभ्यः प्राक् प्रयोगं प्रतिषेधति, अपितु तेषां स्वप्रवृत्तिनिमित्त-भिन्नार्थप्रतिपादनपरत्वं बोधयति । ततश्चात्र महाब्राह्मणपदेन प्रशंसोच्यते निन्दा च व्यज्यते ।

शुष्काणाम् जलशून्यानाम् घनानां मेघानाम् गर्जितं स्तनितं यस्मिन् तादृशे अन्तरिक्षे आकाशे जलपानम् इच्छता पिपासां शिशमयिषता चातकायितम् चातक-वदाचरितम् । यथा चातकनामा पक्षी निर्जलजलदयुते आकाशे जललिप्सया विलोकयन् तल्लाभाभावेन विषीदति तथाहमपि नितान्तकृपणं गणदासमर्थमर्थ-यमानः किञ्चिदप्यनवाप्य खिद्य इति भावः । अत्राप्युपमालङ्कारः । अथवा पण्डि-तानां गुणज्ञानां परितोषेण गुणपरिचयजन्यसन्तोषलाभेन प्रत्ययो विश्वासो यस्याः सा तथोक्ता मूढा मूर्खा जातिः स्वयं गुणागुणविवेकसामर्थ्यशून्या भवतीत्यर्थः । सन्तुष्टा बुद्धिमन्तो यत् प्रशंसन्ति स्वयं विवेक्तुमशक्नुवती मूढजनताऽपि तदेव प्रशंसतीति सरलाशयः । ननु तेन किमित्याह—यद्यत्रेति । अत्रभवत्या कौशिक्या यदि शोभनं भणितं मालविकाया नृत्यगीतादि निर्दोषमभिहितं ततस्तदा अस्यै मालवि-कायै इदम् कटकं पारितोषिकम् प्रयच्छामि ददामि । गुणज्ञानां युष्माकं परितोषान्मू-ढस्य ममापि परितोषात् , गुणदोषयोः पुरस्कारतिरस्कारयोरवश्याचरणीयत्वाच्चेति भावः । कटकम्—वलयम् , करग्राह्यभूषणविशेषम् ।

---

विदूषक—मैंने गर्जनयुक्त निर्जल मेघवाले आकाशके प्रति चातकके समान आचरण किया । अथवा पण्डितोंकी सम्मतिके आधार पर ही मूर्खों की सम्मति बना करती है, अतः आपने अच्छा प्रमाणित किया, इसलिये मैं इसे यह पारितोषिक देता हूँ ( ऐसा कहकर राजाके हाथसे कड़ा खींचता है )

देवी—चिट्ठ दाव। गुणन्तरं अजाणन्तो किंणिमित्तं तुमं आहरणं देसि। [ तिष्ठ तावत्। गुणान्तरमजानन् किन्निमित्तं त्वमाभरणं ददासि। ]

विदूषकः—परकेरअंति करिअ। [ परकीयमिति कृत्वा। ]

देवी—( आचार्यं विलोक्य। ) अज्ज गणदास, णं दंसिदोवदेसा दे सिस्सा। [ आर्य गणदास, ननु दर्शितोपदेशा ते शिष्या। ]

गणदासः—वत्से, एहि गच्छाव इदानीम्।

( सहाचार्येण निष्क्रान्ता मालविका। )

विदूषकः—( जनान्तिकम्। ) एत्तिओ मे मदिविहवो भवन्तं सेविदुं। [ एतावान्मे मतिविभवो भवन्तं सेवितुम्। ]

---

गुणान्तरं गुणभेदम्। किन्निमित्तम् किमर्थम्। गुणभेदमजानतस्तव पुरस्कारप्रदानप्रवृत्तिरनुचितेति भावः।

परकीयम् अन्यदीयम्, कटकरूपपुरस्कारप्रदानं प्रदेयकटकस्य परकीयतैव सम्भवति, स्वत्वबुद्धौ तु तन्नैवादास्यमित्यर्थः।

दर्शितोपदेशा प्रमाणितशिक्षा तव शिष्या मालविका। शिक्षा प्रदर्शिता चेत् सा गन्तुमर्हतीति प्रश्नाशयः। अनेन मालविकानिर्गमनहेतुना देवीवचनेन राज्ञो हितरोधनान्निरोधो नाम सन्ध्यङ्गमुक्तम्।

एतावान् एतत्परिमाणः, मालविकादर्शनघटनापर्यन्त एव मतिविभवः बुद्धिसामर्थ्यम्। इतोऽधिकं तु भवदीयोद्योगमात्रसाध्यमिति नातः परं कदर्थयेथा मामिति भावः।

---

देवी—जरा ठहरिए। गुणका तारतम्य नहीं जानकर यह अलङ्कार क्यों देते हैं?

विदूषक—दूसरेका है, इसलिये देरहा हूँ।

देवी—( आचार्यकी ओर देखकर ) आर्य गणदास, आपकी शिष्याने परीक्षा देदी?

गणदास—वत्से, आओ, हमलोग चलें।

( मालविकाके साथ गणदासका प्रस्थान )

विदूषक—( राजाके प्रति धीरेसे ) आपको इतनी दूर तक ही सन्तुष्ट करनेकी बुद्धि मेरे पास है।

राजा—अलमलं परिच्छेदेन । अहं हि

भाग्यास्तमयमिवाक्ष्णोर्हृदयस्य महोत्सवावसानमिव ।
द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरस्करणम् ॥ ११ ॥

विदूषकः—( जनान्तिकम् । ) दलिद्दो विअ आदुरो वेज्जेण ओसदं दीअमाणं इच्छसि । [ दरिद्र इवातुरो वैद्येनौषधं दीयमानमिच्छसि । ]

( प्रविश्य । )

हरदत्तः—देव, मदीयमिदानीं प्रयोगमवलोकयितुं क्रियतां प्रसादः ।

---

परिच्छेदेन मतिविभवेयत्ताकरणेन अलमलम् इति द्विरुक्तिरवधारणे । एतावतीं सिद्धिं विहितवति त्वदीये मतिविभवे तत्प्राप्तिविषयेऽपि निर्भरता ममेति भावः ।

भाग्यास्तमयमिति । तस्या मालविकायास्तिरस्करणमन्तर्धानम् । इतः प्रस्थानमित्यर्थः । अक्ष्णोर्नेत्रयोः भाग्यस्य सौभाग्यशालिताया अस्तमवसानमिव, हृदयस्य मनसो महोत्सवस्य दीर्घमहस्य अवसानं समाप्तिमिव, धृतेः धैर्यस्य द्वारपिधानमिव द्वारस्य प्रवेशमार्गस्य पिधानम् मुद्रणमिव मन्ये प्रत्येमि । मालविकागमनेनाक्ष्णोर्भाग्यमस्तमितमिव, दर्शनीयरूपावलोकनावसरव्यत्ययात्, हृदयस्य महोत्सवावसानमिवावसादानुभवात्, धृतेर्द्वारपिधानमिव तदुपस्थितिदशायां तल्लाभाशया धैर्यस्य क्षणमुदयादिति भावः । एतेनार्तेर्गम्यमाननया विधुतं नाम सन्ध्यङ्गमुक्तं भवति । आर्या जातिः ॥ ११ ॥

दरिद्रः निर्धनः आतुरः रोगी इव वैद्येन चिकित्सकेन दीयमानम् समर्प्यमानम् औषधम् इच्छसि अभिलषसि । यथा दरिद्रो रोगी वैद्यात् स्वरोगनिश्चयं ज्ञात्वा तत एवौषधमपि लिप्सति तथैव त्वमपि मदुद्योगात् मालविकां साक्षात्कृत्य मदुद्योगादेव तां प्रेप्सस्यपीति तात्पर्यम् ।

प्रयोगम् अभिनयम् । प्रसादः अनुग्रहः ।

---

राजा—रहने दो, अपनी बुद्धिकी सीमा बतानेकी जरूरत नहीं है। मैं मालविकाके प्रस्थानको अपने नेत्रोंके सौभाग्यसूर्यका अस्तमय, हृदयके महोत्सवकी समाप्ति और धैर्यके मार्गका बन्द होजाना समझता हूँ ॥ ११ ॥

विदूषक—वाह, दरिद्र रोगीकी भांति वैद्यसे विना मूल्य दवा चाहते हो ?

( हरदत्तका प्रवेश )

हरदत्त—महाराज, अब हमें अभिनय दिखानेका अवसर मिले ।

राजा—( आत्मगतम् । ) अवसितो दर्शनार्थः । ( दाक्षिण्यमवलम्ब्य, प्रकाशम् । ) ननु पर्युत्सुका एव वयम् ।

हरदत्तः—अनुगृहीतोऽस्मि ।

( नेपथ्ये । ) जयतु जयतु देवः । उपारूढो मध्याह्नः । तथाहि—

पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां
सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि ।
बिन्दूत्क्षेपात्पिपासुः परिसरति शिखी भ्रान्तिमद्वारियन्त्रं

---

दर्शनार्थः अभिनयदर्शनप्रयोजनम्, अवसितः समाप्तः । येन प्रयोजनेन मालविकासाक्षात्काररूपेणान्तःप्रेरितानामस्माकमत्र भवतोरभिनयस्य दर्शने प्रवृत्तिस्तन्मालविकासाक्षात्काररूपं प्रयोजनमवसितमिति वृथाऽधुना भवदीयोऽयमाग्रह इति राज्ञोऽभिप्रायः । ( दाक्षिण्यम् प्रकट समदर्शित्वम्, तच्च गणदासस्याभिनयं दृष्टवता हरदत्तस्यापि तमवलोक्यैव प्रत्यायनीयम्, अन्यथा पक्षपातशङ्कोदयात् ) पर्युत्सुकाः भवदीयमप्यभिनयं द्रष्टुमुत्कण्ठिताः ।

अनुगृहीतः अनुकम्पितः, स्वाभिनयप्रदशनावसरप्रदानादिति भावः । उपारूढः समागतः । एतेन हरदत्तकृताभिनयदर्शनस्यासामयिकत्वं तेन चाप्रवर्त्तनीयत्वमुक्तम् । तथाहि स्वोक्तौ प्रमाणमुपन्यसितुमित्थमुक्तम् ।

पत्रच्छायासु हंसा इति । हंसास्तदाख्यया ख्यायमानाः पक्षिभेदाः दीर्घिकापद्मिनीनां वापीगतकमलिनीनां पत्रच्छायासु दलाधोगतानातपदेशेषु मुकुलितनयना मुद्रितचक्षुषः सन्तीति शेषः । एवमग्रेऽपि । सौधानि सुधया चूर्णेन लिप्तानि सदनानि अत्यर्थतापात् समधिकोत्तापवशात् रविकिरणकृतविशेषपरितापादिति यावत् वलभिर्गोपानसी—छद्यधोदेशे वक्रीकृत्य स्थापितो दारुविशेषस्तस्य परिचये समीपगमनादौ द्वेषिणोऽनिच्छवः परावताः कपोता येषु तादृशानि । पिपासुः जलाभिलाषी शिखी मयूरः बिन्दूत्क्षेपात् पयःपृषतामूर्ध्वं विकीर्यमाणत्वात् भ्रान्तिमत् घूर्णमानं वारियन्त्रं

---

राजा—( स्वगत ) अभिनय देखनेका हमारा प्रयोजन सिद्ध होगया ( सरल भावसे प्रकाशमें ) हम तो उत्कण्ठित ही हैं ।

हरदत्त—बड़ी कृपा ।

( नेपथ्यमें ) महाराजकी जय हो, जय हो । मध्याह्न काल आ गया । देखिये—

हंस वापीके कमलोंके पत्रकी छायामें आंखें मूंदकर बैठे हैं, कपोतगण सन्तप्त राजप्रासादवलभीपर जाना नहीं चाह रहे हैं, मयूरसमुदाय पानी पीनेके लिये

सर्वैरुस्रैः समग्रस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः ॥ १२ ॥

विदूषकः—अविहा अविहा। अम्हाणं उण भोअणवेला उवट्ठिदा। अत्तभवदो उइदवेलादिक्कमे चिइच्छआ दोसं उदाहरन्ति। (हरदत्तं विलोक्य।) हरदत्त, किं दाणिं भणसि। [अविध अविध। अस्माकं पुनर्भोजनवेलोपस्थिता। अत्रभवत उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति। हरदत्त, किमिदानीं भणसि।]

---

जलयन्त्रम् परिसरति सेवितुमुपयाति। (तदिदानीम्) सप्त सप्तसङ्ख्याकाः सप्तयः अश्वा यस्य सः सप्तसप्तिः सूर्यः सर्वैः नृपगुणैः शौर्यदयादिभिः समग्रः पूर्णस्त्वमिव सर्वैः उस्रैः मयूखैः समग्रः परिपूर्णः सन् दीप्यते विराजते। ललाटन्तपस्तपति घर्मांशुरिति भावः। मध्याह्न समुपस्थिते सूर्यतापातिशयाच्छीतलं स्थलं सिषेविषवो हंसा दीर्घिकाकमलिनीदलाधो निलीयन्ते, पारावता बलभीदेशं विहाय प्रच्छायशीतले क्वापि तरुतले तिष्ठन्ति, मयूराः पिपासाक्षामकण्ठा घूर्णमानस्य जलयन्त्रस्य समीपमुपसर्पन्ति, मन्ये यथा भवान् समस्तैर्नृपगुणैरुपेतो निःसपत्नतया प्रकाशते तथासौ भास्करोऽखिलैः किरणैः प्रतपतीत्यर्थः। 'सौधोऽस्त्री राजसदनम्।' 'गोपानसी तु बलभी छादने वक्रदारुणि' इति चामरः। बलभिशब्दो ह्रस्वेकारान्तोऽपि, 'कृदिकारादक्तिनः' इति ङीषा तु दीर्घान्तो रजनिः रजनी इतिवत्। तथा च प्रयोगः—'तां कस्यांचिद्भवनबलभौ सुप्तपारावतायाम्' इति मेघदूते। 'शिखायां बलभौ चूडे'ति रुद्रश्च। 'किरणोस्रमयूखांशुगभस्तिघृणिधृष्णयः' इत्यमरः। स्रग्धरा वृत्तम्, तल्लक्षणं यथा—'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' ॥ १२ ॥

अविधेति। संभ्रमसूचकमव्ययं द्विवाऽऽवर्त्तितम् तदतिशयद्योतनाय। पुनर्भोजनवेलोपस्थितेति विदूषकस्य हासप्रियतयोक्तम्। चिकित्सकाः वैद्याः अत्रभवतः राज्ञः उचितवेलातिक्रमेण 'याममध्ये न भोक्तव्यं यामयुग्मं न लङ्घयेत्' इत्युक्तसमयलङ्घनेन दोषं वातादिवैषम्यजनितमस्वास्थ्यम् उदाहरन्ति कथयन्ति। भोजनवेलामाह दक्षः—'पञ्चमे च तथा भागे संविभागो यथार्हतः। पितृदेवमनुष्याणां कीटानां चोपदिश्यते ॥' तदतिक्रमे दोषमाह भावमिश्रः—"कालेऽतीतेऽग्रतो जन्तोर्वायुनापहतेऽनले। कृच्छ्रा-

---

फव्वारेके निकट जारहे हैं, सभी प्रकारके प्रतापसे पूर्ण आपके समान सभी किरणोंसे युक्त सूर्य चमक रहे हैं ॥ १२ ॥

विदूषक—यही तो। हमारे खानेका समय होगया। वैद्यलोग समय बिताकर

**हरदत्तः—अस्ति वचनस्यान्यस्यावकाशोऽत्र ?।**

**राजा—तेन हि त्वदीयमुपदेशं श्वो वयं द्रक्ष्यामः। विरमतु भवान्।**

**हरदत्तः—यदाज्ञापयति देवः। (इति निष्क्रान्तः।)**

**देवी—णिव्वट्टेदु अज्जउत्तो मज्जणविहिम्।** [ निर्वर्तयत्वार्यपुत्रो मज्जनविधम्। ]

**विदूषकः—भोदि, विसेसेण पाणभोअणं तुवरावेहि।** [ भवति, विशेषेण पानभोजनं त्वरय। ]

**परिव्राजिका—( उत्थाय।) स्वस्ति भवते। ( इति सपरिजनदेव्या सह निष्क्रान्ता।)**

---

द्विपच्यते भुक्तं न स्याद् भोक्तुं पुनः स्पृहा" ॥ इति वचनस्य सम्मतिप्रश्नतदुत्तरप्रदानादिरूपस्य, वाग्व्ययस्य, भोजनवेलातिक्रमस्य राजास्वास्थ्यप्रयोजकत्वेन चिकित्सकैः समर्थितत्वेनेति भावः।

काक्वा निषेधोऽवगम्यते।

उपदेशम् शिक्षाम्। श्वः परेऽहनि। विरमतु विश्राम्यतु।

देवः भवान्। अत्र प्रकरणवशाद्देवपदस्य राजरूपार्थे शक्तिर्नियन्त्र्यते।

मज्जनविधिम् स्नानक्रियाम्, स्नानस्य भोजनात् पूर्वमाचरणीयत्वादित्थमनुरोधः, तत्त्वं च 'नरस्य स्नातमात्रस्य दीप्यते तेन पावकः' इति वैद्यकस्मरणात्।

पानभोजनम् पानेन सहितं भोजनम् पानं भोजनं चेत्यर्थः। मज्जनविधेरतिशीघ्रसम्पाद्यतामभिमन्येत्थमुक्तम्। एतादृशोक्तेरत्र प्रयोजनं तु परिव्राजिकाविसर्जनमेव, तच्चैकान्तलाभाय, स च परस्परं यदृच्छालापायेति बोध्यम्।

---

आपके भोजन करनेमें हानि बताते हैं। हरदत्त, आप क्या कहते हो?

हरदत्त—इसमें कहना क्या है?

राजा—( हरदत्तकी ओर देखकर ) अब आपका अभिनय हमलोग कल देखें, आप अभी विश्राम करें।

हरदत्त—जो आदेश। ( जाता है )

देवी—आर्यपुत्र, आप मध्याह्नकृत्य करें।

विदूषक—आप खानेपीनेका प्रबन्ध करें।

परिव्राजिका—( खड़ी होकर ) आपका कल्याण हो। ( ऐसा कहकर परिजन सहित देवीके साथ जाती है।)

विदूषकः—भो वअस्स, ण केवलं रूवे, सिप्पे वि अदुदीआ मालविआ। [ भो वयस्य, न केवलं रूपे, शिल्पेऽप्यद्वितीया मालविका। ]

राजा—वयस्य,

अव्याजसुन्दरीं तां विज्ञानेन ललितेन योजयता।
परिकल्पितो विधात्रा बाणः कामस्य विषदिग्धः॥ १३॥

किं बहुना। सखे, चिन्तयितव्योऽस्मि।

विदूषकः—भवदा वि अहं। दिढं विपणिकन्दू विअ मे हिअअब्भन्तरं दुज्झइ। [ भवताप्यहम्। दृढं विपणिकन्दुरिव मे हृदयाभ्यन्तरं दह्यते। ]

---

रूपे सौन्दर्ये। शिल्पे विज्ञाने। तच्चात्र नृत्यसङ्गीतादिकलाविषयमभिप्रेतम्। अद्वितीया सजातीयद्वितीयरहिता, असमानेत्यर्थः। शिल्पं वात्स्यायनोक्तनृत्यगीतादिचतुःषष्टिरित्यन्ये।

अव्याजेति। विधात्रा विधिना अव्याजसुन्दरीम् अकृत्रिममनोरमाम् तां मालविकां ललितेन मधुरेण ललितकलापरिगणितेनेति वा। विज्ञानेन नृत्यगीतादिविद्यापरिचयेन योजयता भूषयता विषदिग्धः विषाप्लुतः कामस्य मदनस्य बाणः शर उपकल्पितः सज्जीकृतः। अत्र सौन्दर्येऽव्याजेति विशेषणदानादेकान्तस्वाभाविकता, विज्ञाने ललितेनेति विशेषणाच्च तस्याकर्षकतातिशयः, बाणस्य विषदिग्धत्वोक्त्या च तत्प्रहृतस्य पीडाया प्रचुरतेति च व्यज्यते। 'ललितं त्रिषु सुन्दरम्' इति हैमः। 'विज्ञानं शिल्पशास्त्रयोः' इत्यमरश्च। असम्भवद्वस्तुसम्बन्धाभिधानान्निदर्शनाऽलङ्कारः। आर्या जातिः॥ १३॥

किं बहुना अधिकं वक्तुमशक्यं नोचितं चेत्यर्थः। कार्यमाह—चिन्तयितव्यः अनुध्यातव्यः, मन्मानसिकदशाया विकृततया प्रतिकाराय सयत्नेन भवता भवितव्यमित्यर्थः।

'भवताप्यहम्' चिन्तयितव्य इति शेषः। तथाचोपकाराङ्गीकारात् प्रत्युपकाराचरणाच्च कर्तुं शक्यमिति भावः। कथमहं प्रत्युपकर्त्तव्य इतीतिकर्त्तव्यतांशमपि स्वयं

---

विदूषक—मित्र, केवल रूपमें ही नहीं, शिल्पमें भी मालविका बेजोड़ है।

राजा—वयस्य, अकृत्रिम रमणीया उस मालविकाको विधाताने ललित कलाएं क्या देदीं, कन्दर्पके बाणोंको विषदिग्ध बनादिया॥ १३॥

और क्या, अब मित्र, तुम्हें हमारी चिन्ता करनी होगी।

विदूषक—आपको भी मेरी चिन्ता करनी होगी। भट्ठीके तवेकी तरह पेट जल रहा है।

राजा—एवमेव भवान् सुहृदर्थेऽपि त्वरताम्।

विदूषकः—गहीदक्खणोम्हि । किं तु मेहावलीणिरुद्धा जोण्हा विअ पराहीणदंसणा तत्तहोदी मालविआ। भवं वि सूणापरिसरचरो विअ गिद्धो आमिसलोलुओ भीरुओ अ। अच्चंतादुरो विअ कज्जसिद्धिं पत्थन्तो मे रोअसि। [गृहीतक्षणोऽस्मि। किं तु मेघावलीनिरुद्धा ज्योत्स्नेव पराधीनदर्शना तत्रभवती मालविका। भवानपि सूनापरिसरचर इव गृध्र आमिष-लोलुपो भीरुकश्च। अत्यन्तातुर इव कार्यसिद्धिं प्रार्थयमानो मे रोचसे।]

---

विदूषकोचितपरिहासप्रकारेणाह—दृढमिति। दृढं बलवत्, विपणेः आपणस्य कन्दुः स्वेदनो (तावा) इव हृदयाभ्यन्तरम् अन्तर्हृदयम् दह्यते ज्वलति, बुभुक्षाकृतपरि-तापादित्यर्थः। 'आपणे पण्यवीथ्यां च पण्ये च विपणिः स्त्रियाम्।' इति रुद्रः। 'कन्दुर्वा स्वेदनी स्त्रियाम्' इत्यमरः।

एवमेव इत्थमेव, यथा भवान् भोजनरूपे निजकार्ये त्वरते तथैव सुहृदो मम अर्थे प्रयोजने मालविकामिलनोपायचिन्तनरूपे त्वरताम् शीघ्रतां कुरुताम्। अत्र दृष्टनष्टस्य बीजस्यानुपसर्पणात् परिसर्प इति सन्ध्यङ्गमुक्तम्।

गृहीतक्षणः प्राप्तावसरः। एतच्च विदूषकस्य भोजनप्राप्त्याशाजनितमानन्दं सूचयितुमुक्तम्। मेघावलीनिरुद्धदर्शना जलदमालावृता ज्योत्स्ना चन्द्रिका इव पराधीनं स्वानायत्तं दर्शनं यस्यास्तादृशी दुर्लभदर्शना, दर्शनदौर्लभ्यं च धारिण्याः प्रतिबन्ध-कत्वात्तथा च तस्यां राज्ञ आकृष्टताया भूयसा सम्भवादिति भावः। सूनायाः वध-स्थानस्य परिसरः समीपदेशस्तत्र चरतीति तथोक्तः। एतेनामिषलालसासम्भवोऽभि-हितः। आमिषलोलुपः मांसं लिप्सुः, भीरुकश्च भयशीलश्च। राजपक्षे आमिषम् भोग्यवस्तु मालविकारूपम्। गृध्रो यथा मांसलोभात् सूनासमीपे परिभ्रमति बाधा-प्राप्तिभीत्या च मांसं नादित्सति तथा भवानपि मालविकां कामयते धारिणीतो बिभेति चेति भावः। अत्यन्तातुर इव नितरां पीडित इव कार्यसिद्धिम् मालविकाया भूयः साक्षात्काररूपाम् प्रार्थयमानः याचमानः मे मह्यं रोचसे प्रीतिप्रदो भवसि।' प्रभुरपि त्वं नितान्तमार्त्त इव स्वाश्रितं ब्राह्मणमकिञ्चनं यत्स्वकार्यसिद्धिं याचसे

---

राजा—आप भी इसी तरह मित्र कार्यके प्रति शीघ्रता करो।

विदूषक—मौका मिलगया। किन्तु मेघावृत ज्योत्स्नाके समान मालविकाके दर्शन परायत्त हैं, आप भी बूचड़खानेके ऊपर मंडरानेवाले गृध्रकी तरह मांसलुब्ध हैं, किन्तु डरते हैं। आपका यह गिड़गिड़ाना मुझे बड़ा भाता है।

राजा—कथमनातुरो भविष्यामि ।

सर्वान्तःपुरवनिताव्यापारप्रतिनिवृत्तहृदयस्य ।
सा वामलोचना मे स्नेहस्यैकायनीभूता ॥ १४ ॥

( इति निष्क्रान्ताः सर्वे । )

इति द्वितीयोऽङ्कः ।



---

तन्मे रोचत इति भावः । अत्र सान्त्वनस्य गम्यमानत्वात् पर्युपासनं नाम सन्ध्यङ्गमुक्तम् ।

अनातुरः अव्यग्रः, मालविकालाभादिति भावः ।

आतुरत्वं स्वेष्टालाभात् सम्भवति, तत्समर्थयितुमेव तस्या इष्टत्वमाह—सर्वान्तः-पुरेति । सा प्रसिद्धा मदीयचेतोहरी वा वामलोचना सुन्दराक्षी मालविका सर्वासाम् अखिलानाम् अन्तःपुरवनितानाम् व्यापारात् मदनुरागवर्धनार्थम् अनुष्ठीयमानात् सकटाक्षहास्यकौतुकादिचेष्टाविशेषात् प्रतिनिवृत्तम् पराङ्मुखम् हृदयं यस्य तस्य तथोक्तस्य अखिलावरोधविरक्तस्येत्यर्थः । मे मम स्नेहस्य प्रेम्णः एकम् अयनम् स्थानम् आश्रयः तद्भूता तद्भावंगता । सर्वातःपुरवनिताविरक्तस्य ममाधुना माल-विकैवानुरागस्य पात्रमिति भावः । आर्या जातिः । अत्राङ्के मालविकाया निष्क्रमणेन कथाविच्छेदे जायमाने सर्वान्तःपुरेत्यादिना गम्यमानो राज्ञोऽभिलाषातिशय उत्तराङ्क-कथाहेतुत्वाद्बिन्दुरित्यनुसन्धेयम् ॥ १४ ॥

इति मैथिलपण्डितश्रीरामचन्द्रमिश्रप्रणीते मालविकाग्निमित्रप्रकाशे द्वितीयाङ्क 'प्रकाशः' समाप्तः ।



---

राजा—मैं कैसे भला होऊंगा ?

अन्तःपुरकी सभी रमणियोंके हावभावसे मेरा हृदय फिर गया है । अब तो वह सुलोचना मालविका ही मेरे स्नेहकी एकमात्र अधिकारिणी रहगई है ॥ १४ ॥

द्वितीय अङ्क समाप्त



# तृतीयोऽङ्कः ।

( ततः प्रविशति परिव्राजिकायाः परिचारिका समाहितिका । )

समाहितिका—आणत्तम्हि भअवदीए—समाहिदिए, देवस्स उववणत्थं बीअऊरअं गेण्हिय आअच्छत्ति । ता जाव पमदवणपालिअं महुअरिअं अण्णेसामि । ( परिक्रम्यावलोक्य । ) एसा तवणीआसोअं ओलोअन्ती महुरिआ चिट्ठदि । ता जाव णं उवसप्पामि । [ आज्ञतास्मि भगवत्या—समाहितिके, देवस्योपवनस्थं बीजपूरकं गृहीत्वागच्छेति । तद्यावत्प्रमदवनपालिकां मधुकरिकामन्विष्यामि । एषा तपनीयाशोकमवलोकयन्ती मधुकरिका तिष्ठति । तद्यावदेनामुपसर्पामि । ]

( ततः प्रविशत्युद्यानपालिका । )

समाहितिका—( उपसृत्य । ) आलि, अवि सुहो दे उज्जाण-

---

आज्ञतेति । भगवत्या धारिणीदेव्या आश्रये निवसन्त्या परिव्राजिकया विदर्भाधिपामात्यसुमतेर्भगिन्या, देवस्य राज्ञोऽग्निमित्रस्य, उपवनस्थम् उद्यानभूमिगतम्, बीजपूरकम् तदाख्यया प्रसिद्धम् मातुलुङ्गापरपर्यायम् निम्बूकफलविशेषम्, अस्य 'विजौरा' इति भाषा, 'फलपूरो बीजपूरो रुचको मातुलुङ्गके' इत्यमरः । प्रमदवनपालिकाम् प्रमदवनम् अन्तःपुरनिवासिललनाजनविहाराय राज्ञामन्तःपुरसंलग्नमुद्यानं तस्य पालिकाम् रक्षणावेक्षणाद्यधिकृताम् । 'पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम् । स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ॥' इत्यमरः । तपनीयम्—स्वर्णम्, स्वर्णवर्णपुष्पपरिवृतत्वेन तत्त्वोपचारः । अशोकं तदाख्यपुष्पवृक्षभेदम् । आलोकयन्ती प्रेक्षमाणा । 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् । तपनीयं शातकुम्भम्' इत्यमरः । अत्र 'देवस्य उपायनार्थम्' इति 'सम्भावयामि' इति च पाठभेदः ।

उपसृत्य समीपमवाप्य । आलि सखि, 'आलिः सखी वयस्या च' इत्यमरः ।

---

अनन्तर संन्यासिनीकी परिचारिका समाहितिकाका प्रवेश )

समाहितिका—माजीने आज्ञादी है कि देवीको उपहार देनेके लिये राजोद्यानसे बीजपूर नींबू ले आओ । इस कार्यके लिये मधुकरिकाको ढूंढूं । ( घूमकर और देखकर ) यही तो मधुकरिका स्वर्णवर्ण अशोक पुष्पका अवलोकन कररही है, इसके समीप चलूं ।

( इसके बाद उद्यानपालिकाका प्रवेश )

वाणव्ववारो। [ आलि, अपि सुखस्त उद्यानवनव्यापारः। ]

मधुकरिका—अम्हो समाहिदिआ। सहि, सागदं दे। [ अहो समाहितिका। सखि, स्वागतं ते। ]

समाहितिका—हला, भगवदी आणवेदि–अरित्तपाणिणा अम्हारिसजणेण तत्तहोदी देवी देक्खिदव्वा। ता बीअपूरएण सुस्सूसिदुं इच्छामित्ति। [ हला, भगवत्याज्ञापयति—अरिक्तपाणिनास्मादृशजनेन तत्रभवती देवी द्रष्टव्या। तद्बीजपूरकेण शुश्रूषितुमिच्छामीति। ]

मधुकारिका—णं संणिहिदं बीजपूरअं। कहेहि दाव अण्णोण्णसंघरिसिदाणं णट्टाअरिआणं उवदेसं देक्खिअ कदरो भअवदीए पसंसिदो।

---

क्वचित् पुस्तके–'आलि मधुकरिके' इति पाठः, समानः पुनरर्थः। सुखः सुखयतीति सुखः सुखजनकः। उद्यानम् उपवनम् एव वनम् अरण्यम्, बृहदाकारतया नानाजातीयकतरुलतापरिवृततया च वनसादृश्यम्। तस्य तत्संबद्धः व्यापारः रक्षणावेक्षणादि कार्यम्। स्वसम्पाद्योद्यानरक्षणकर्म तव निर्विघ्नमिति प्रश्नः। क्वचित् पुस्तके 'उद्यानव्यापारः' इत्येव पाठः। तत्र वनत्वं नारोप्यम्, समानमन्यत्॥

हलेति सखीसंबोधनमिदम्, 'हण्डे हञ्जे हलाऽह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः, अरिक्तपाणिना—( केनाप्युपायनेन ) पूर्णकरेण ( नतु शून्यहस्तेन ) 'रिक्तपाणिर्न पश्येत्तु राजानं देवतां गुरुम्। नैमित्तिकं च वैद्यञ्च फलेन फलमादिशेत्॥' इति स्मरणादित्थमुक्तिः। अत्रभवान् पूजार्हः, द्रष्टव्यः समीपमुपसरणीयः। बीजपूरकेण मातुलुङ्गोपहारप्रदानपूर्वकम्, शुश्रूषितुम्–सेवितुम्, अत्रभवन्तं राजानमिति कर्मानुसन्धातव्यम्। क्वचित् 'शुश्रूषितुम्' इत्यस्य स्थाने प्रेक्षितुम् इत्येव पाठः।

---

समाहितिका—( समीप जाकर ) सखि, तुम्हारा उद्यानकार्य तो मजेमें चलरहा है ?

मधुकरिका—अहा ! समाहितिका ! आओ, स्वागत है।

समाहितिका—अरी सखि, मांजीने कहा था कि हमारी तरहके लोगोंको चाहिए कि कुछ भेंट लेकर ही रानीके समीप जाय, अतः 'बीजपूर' फल लेकर उनके दर्शनार्थ जाना चाहती हूँ।

[ ननु संनिहितं बीजपूरकम् । कथय तावदन्योन्यसंघर्षितयोर्नाट्याचार्ययोरुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसितः । ]

समाहितिका—दुवे वि किल आगमिणा पओअणिउणा अ । किंतु सिस्साए मालविआए गुणविसेसेण गणदासस्स उवदेसो पसंसिदो । [ द्वावपि किलागमिनौ प्रयोगनिपुणौ च । किन्तु शिष्याया मालविकाया गुणविशेषेण गणदासस्योपदेशः प्रशंसितः । ]

मधुकरिका—अह मालविआगदं कौलीणं कीरिसं सुणीअदि । [ अथ मालविकागतं कौलीनं कीदृशं श्रूयते । ]

---

सन्निहितम् आसन्नवर्त्ति, एतेन तदासादने मदाज्ञाप्राप्तेः स्वेच्छामात्रव्यवधिताऽवधानव्येति व्यञ्जितम् । अन्योन्यसङ्घर्षितयोः परस्परोपजातसङ्घर्षयोरिति । अत्र विद्यायामहं श्रेष्ठ इत्यहमहमिकया प्रवृत्तविवादयोरित्याशयः । कतरः द्वयोर्मध्ये कः ? द्वयोरेकस्य जातिनिर्धारणे डतरचोऽनुशासितत्वात् । भगवत्या कौशिक्या । प्रशंसितः उत्कृष्टगुणवत्तया श्लाघितः ।

आगमिनौ नाट्यवेदवेत्तारौ, स्वरवैदग्धीप्रदसङ्गीतशास्त्रेणाङ्गभूतेनोपबृंहितस्य नाट्यशास्त्रस्य मर्मज्ञावित्यर्थः । प्रयोगनिपुणौ, प्रयोगात्मकनृत्यकलादक्षौ । अयमाशयः—द्विविधा हि नाट्यविदः, केचित्केवलं तदीयमागमं जानन्ति ते हि परैरभिनीयमानं शुद्धाशुद्धतारतम्येन ग्रहीतुं क्षमन्ते, केचिच्च शिक्षाभ्यासादिनेदन्त्वेनानिर्धार्यमाणमप्यभिनयविशेषं प्रकटयन्ति । इमौ पुनरभिनयकलाऽम्नायपरिशीलनप्रसिद्धौ प्रयोगात्मकव्यवहारदक्षौ चेति । शिष्यायाः उपदिश्यमानायाः, ( मालविकायाः ) गुणविशेषेण सौन्दर्यसङ्गीतनृत्यादिकर्मसु नैपुण्यातिशयेन । उन्नमितः उत्कर्षं प्रापितः । शिष्याया गुणाधिक्यं हि शिक्षकगुणवत्तातिशयमावेदयतीति मनसिकृत्येत्थमुक्तम् ।

मालविकागतम् तत्संबद्धम् । कौलीनम् लोकापवादः, अन्तःपुरचारिणीषु

---

मधुकरिका—बीजपूरक तो यहीं हैं । यह तो बताओ-परस्पर झगड़नेवाले नाट्याचार्योंके अभिनयको देखकर देवीने किसकी प्रशंसा की ?

समाहितिका—दोनों शास्त्रज्ञ तथा प्रयोगनिपुण हैं, परन्तु विद्यार्थिनीके गुणगौरवके आधारपर गणदासकी प्रशंसा हुई ।

मधुकरिका – मालविकाके विषयमें क्या कानाफूसी चलरही है ?

समाहितिका—बाढं किल तस्सिं साहिलासो भट्टा। किंतु केवलं देवीए धारिणीए चित्तं रक्खन्तो अत्तणो पहुत्तं णं दंसेदि। मालविआ वि इमेसु दिअसेसु अणुहूदमुत्ता विअ मालदीमाला मिलाणा लक्खीअदि। अदो अवरं ण जाणे। विसज्जेहि मं। [ बाढं किल तस्यां साभिलाषो भर्ता। किंतु केवलं देव्या धारिण्याश्चित्तं रक्षन्नात्मनः प्रभुत्वं न दर्शयति। मालविकाप्येषु दिवसेष्वनुभूतमुक्तेव मालतीमाला म्लाना लक्ष्यते। अतः परं न जाने। विसृज माम्। ]

मधुकरिका—एदं साहावलम्बि बीअपूरअं गेण्ह। [ एतच्छाखावलम्बि बीजपूरकं गृहाण। ]

---

मालविकाविषयकमपवारितमालोचनम्। 'स्यात् कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम्' इति विश्वः। यद्वा—कौलीनं गुह्यव्यापारः, स चात्र मालविकाजन्मकथामाश्रित्य देवस्य तस्यामनुरागं वाश्रित्य कथोपकथनरूपोऽनुसन्धेयः। 'कौलीनं गुह्यजन्ययोः' इति मेदिनी॥

बाढम् अत्यर्थम्। तस्याम् मालविकायाम्। साभिलाषः—सञ्जातानुरागोदयः। नन्वेवं किमिति प्रकटं न परिणयते इत्याह—केवलमिति। चित्तं रक्षन् तदीयं मनःक्षोभमुत्पादयितुमनिच्छन्नित्यर्थः। ( मया मालविकाविषयके स्वानुरागे प्रकटिते सपत्नीसम्भवेन खेदेन राजमहिषी धारिणी पीडयेतेति कृत्वा राजा ) प्रभुत्वम् मालविकापरिणयनापरतन्त्रभावम्, न दर्शयति न प्रकाशयति। नन्वेतावता राज्ञः सानुरागतोक्ता, मालविकाया अननुरक्तत्वे तु वैरस्यापात इति तस्या अप्यनुरागोदयमाह—मालविकापीति। एषु दिवसेषु अभिनयप्रदर्शनदिवसादारभ्याद्यपर्यन्तम्। अनुभूतमुक्ता भुक्तोज्झिता, मालतीमाला मालतीकुसुमनिर्मिता स्रक्। अनुभूतमुक्तेति स्रजः शरीरसम्पर्कमात्रम्लायमानतोक्त्या सुकुमारतरत्वमुक्तम्। एतावता तस्याः प्रकामकामपीडितत्वमुक्तम्। विसृज गन्तुमनुमन्यस्व।

---

समाहितिका—राजा मालविकाके विषयमें एकान्त अनुरक्त हैं। केवल धारिणी देवीका दिल रखनेके लिये प्रभुत्व नहीं दिखलारहे हैं। इन दिनों कामातुरा मालविका भी मालतीमालाकी तरह सूखती जारही है। इसके आगे मैं नहीं जानती। अच्छा, अब मुझे आज्ञादो।

मधुकरिका—इस डालीपरका बीडापूरक लेलो।

समाहितिका—तह । ( इति नाट्येन बीजपूरकं गृहीत्वा । ) हला, तुमं वि अदो पेसलदरं साहुजणसुस्सूसाए फलं पावेहि । ( इति प्रस्थिता । )
[ तथा । सखि, त्वमप्यतः पेशलतरं साधुजनशुश्रूषायाः फलं प्राप्नुहि । ]

मधुकरिका—हला, समं जेव्व गच्छम्ह । अहं वि इमस्स चिराअमाणकुसुमोग्गमस्स तवणीआसोअस्स दोहलणिमित्तं देवीए णिवेदेमि ।
[ सखि, सममेव गच्छावः । अहमप्यस्य चिरायमाणकुसुमोद्गमस्य तपनीयाशोकस्य दोहदनिमित्तं देव्यै निवेदयामि । ]

समाहितिका—जुज्जइ । अहिआरो क्खु तुह । [ युज्यते अधिकारः खलु तव । ]

( इति निष्क्रान्ते । )

इति प्रवेशकः ।

---

नाट्येन आङ्गिकाभिनयद्वारा । पेशलतरम् अतिशयेन रुचिरम् । फलम् स्वमनोरथसिद्धिम् । साधुजनशुश्रूषाऽत्र कौशिकीसन्तोषविधानरूपा । स्वप्रार्थितपूर्त्तिप्रभवप्रसादजनितेयमाशीः । प्रस्थिता प्रचलितुमारब्धेत्यर्थः । आदिकर्मणीयं निष्ठा ।

सममेव सहैव, चिरायमाणकुसुमोद्गमस्य विलम्बमानपुष्पर्द्धेः, दोहदनिमित्तं पुष्पोत्पत्तिकारणतयाऽभिमन्यमानयोषित्पादाघातार्थमित्यर्थः । 'दोहदो गर्भलक्षणे' 'अभिलाषे तथा गर्भे' इति हैमः । 'पाताघातादशोकं विकसति' इति हि कविसमयप्रसिद्धिः । विलम्बते चास्य तपनीयाशोकस्य कुसुमोद्गम इति देवी स्वयमागत्य कांचिदन्तःपुरिकां वा प्रेष्य स्वाभाविकीं कुसुमसमृद्धिमस्योत्पादयतु येनायं सार्थकः स्यादशोकवृक्ष इति निवेदयितुमन्तःपुरं यातुकामाऽहमपि तव सहाया भवामीति भावः।

युज्यते उपपद्यते, त्वत्कर्तृकमशोकतरोश्चिरायमाणतया संभाव्यत्वस्य देव्यै निवेदनमिति शेषः ।

निष्क्रान्ते निर्गते रङ्गमञ्चादिति शेषः ।

प्रवेशकः, 'अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशका' वित्याद्युक्तदिशाऽर्थोपक्षे-

---

समाहितिका—( नाटकीय ढंगसे बीजपूरक लेकर ) सखी, इस साधुसेवासे तुम्हें इससे भी बढ़िया फल मिले । ( इतना कहकर प्रस्थान )

मधुकरिका—सखी, साथ ही चलरही हूँ । इस काञ्चनाशोकके फूलनेमें देर होरही है, अतः इसके दोहदके लिये रानीजीसे कह दूँ ।

समाहितिका—ठीक, यह तो तुम्हारा कार्य ही है ।

( दोनोंका प्रस्थान )

( प्रवेशक )

( ततः प्रविशति कामयमानावस्थः राजा विदूषकश्च । )

राजा—( आत्मानं विलोक्य । )

शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे
भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति ।
तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं

---

पकान्यतमः । तल्लक्षणं यथा—'प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः । अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा' । इति, नीचपात्रचेटीप्रयोजितत्वेन प्राकृतभाषोपनिबद्धत्वेन द्वितीयतृतीयाङ्कमध्यपातेन विष्कम्भकसादृश्यसमाक्षिप्तेन 'बाढं किल तस्यां साभिलाषो भर्त्ता' 'चिरायमाणकुसुमोद्गमस्य' इत्यादिसन्दर्भाभ्यां क्रमशो वृत्तवर्त्तिष्यमाणकथांशयोर्निदर्शकत्वेन च तल्लक्षणसमन्वयः ॥ एष चान्तःप्रतिमुखसन्धिः ।

ततः प्रविशतीति । कामयमानस्य कामबाणपराहतस्यावस्था शरीरचेष्टेव अवस्था शरीरकृशतापाण्डुतादिर्दशा यस्य स इति ।

आत्मानं--शरीरम्, 'आत्मा पुंसि स्वभावे च शरीरमनसोरपि' इति मेदिनी ।

शरीरमिति । दयितायाः प्रियाया आलिङ्गनमङ्गसङ्गस्तेन सुखं सत्त्वोद्रेकसम्भवप्रमोदावस्थाविशेषस्तस्मिन्नसति अजायमाने शरीरं वपुः क्षामं कृशं स्यात् सम्भवेत् । प्रियालिङ्गनजनितप्रमोदानवाप्तौ तच्चिन्ताचुम्बितस्वान्तस्य जनस्य कायिकदौर्बल्यस्यातितरामाशंस्यमानत्वादिति भावः । क्षणम् ईषत्समयमपि ( अत्यन्तसँय्योगे द्वितीया ) सा दयिता मालविका न दृश्यते न लोचनगोचरतामवतरतीति चक्षुर्लोचनं सास्रं वाष्पजलाविलं स्यात् । प्रियादर्शनवञ्चितयोर्लोचनयोरश्रुप्रवाहप्लुतत्वस्य नितरां सम्भवित्वादित्याशयः । ( देहदौर्बल्याश्रुमोचनयोरालिङ्गनाभावदर्शनविरहरूपकारणवत्त्वेनोपपत्तिरस्तीति स्तां नाम ते ) हृदय चेतः, त्वं ( तु ) तया सारङ्गाक्ष्या मृगलोचनया कदाचिद् विरहितं वियुक्तं न असि, सततं हृदये वर्त्तमानया तया तव वियोगो नाल्पस्यापि कालस्य कृते जायत इति । ( एवं )

---

( तदनन्तर विदूषक तथा कामार्त्त अवस्थावाले राजाका प्रवेश )

राजा—( अपनी ओर देखकर ) प्रेयसीके आलिङ्गनके अभावमें देह दुबली हो सकती है, एक क्षणके लिये भी उसे नहीं देखपानेसे आँखें आंसू बहा सकती हैं, परन्तु हृदय, तुम तो कभी भी उस मृगनयनी प्रियतमासे नहीं बिछुड़े, तब तुम्हारे

प्रसक्ते निर्वाणे हृदय परितापं व्रजसि किम् ? ॥ १ ॥

विदूषकः—अलं भवदो धीरं उज्झिअ परिदेविदेण। दिट्ठा मए तत्तहोदीए मालविआए पिअसही बउलावलिआ। सुणाविदा अ अत्थं जो भवदा संदिट्ठो। [ अलं भवतो धीरतामुज्झित्वा परिदेवितेन। दृष्टा मया तत्रभवत्या मालविकायाः प्रियसखी बकुलावलिका। श्राविता चार्थं यो भवता संदिष्टः। ]

राजा—ततः किमुक्तवती।

विदूषकः—विण्णावेहि भट्टारअम्। अणुगहीदम्हि इमिणा णिओएण। किंदु सा तवस्सिणी देवीए अहिअं रक्खन्तीए णाअरक्खिदो विअ णिही ण सुहं समासादइदव्वा। तह वि ज स्सम्। [ विज्ञापय भट्टारकम्।

---

निर्वाणे निर्वृतौ सुखे प्रसक्ते प्राप्ते किं किमर्थम् परितापम् सन्तापम् व्रजसि लभसे। आलिङ्गनाभावेन कायो जायतां दुर्बलः, दर्शनवैधुर्येण च प्रवर्त्ततामश्रु नयनयोः, परं सततं मानसे स्थितायामपि प्रियायां मनः सन्तप्यत इति कारणं नावधारयामीति भावः। 'निर्वाणमस्तं गमने निर्वृतौ गजमज्जने। सङ्गमेऽप्यपवर्गे च' इति विश्वः, अत्र विरहरूपसन्तापकारणाभावे तदुत्पत्त्या विभावना, निर्वृतिरूपसुखकारणीभूतप्रियासान्निध्यस्य 'सत्त्वेऽपि तदनुत्पत्त्या विशेषोक्तिरित्यनयोः सन्देहसङ्करः। अत्र कदाचिदित्यग्रेऽपिशब्दानुक्त्या वाच्यानभिधानम्, मोक्षनिर्वृतिरूपोभयार्थकस्य निर्वाणशब्दस्याप्रसिद्धे निर्वृतिरूपार्थे प्रयोगान्निहतार्थता चेति दोषद्वयम्। शिखरिणी वृत्तम्, तल्लक्षणञ्च—रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणीति ॥ १ ॥

धीरताम् आकारगोपनप्रभुताम्, उज्झित्वा विसृज्य, परिदेवितेन विलापेन, मालविकाविषयकेण खेदप्रकाशनेनेत्यर्थः।

उक्तवती मत्सन्देशश्रवणानन्तरं किमुत्तरमाह, बकुलावलिकेति शेषः।

भट्टारकं—राजानम्, 'राजा भट्टारको देव' इत्यमरः। सा तपस्विनी दीना

---

लिये तो परम सुखका साधन उपस्थित ही रहा, फिर तुम क्यों परिताप करते हो ॥ १ ॥

विदूषक—आप धैर्य त्यागकर मत विलाप करें। सौभाग्यसे मुझे बकुलावलिका, मालविकाकी प्रिय सखी, मिलगई, मैंने आपका संवाद उसे कह दिया है।

राजा—उसपर उसने क्या कहा ?

विदूषक—'आप महाराजसे निवेदन करदें, मैं इस आदेशसे अनुगृहीत हुई।

अनुगृहीतास्म्यनेन नियोगेन । किंतु सा तपस्विनी देव्याधिकं रक्षन्त्या नागरक्षित इव निधिर्न सुखं समासादयितव्या । तथापि यतिष्ये । ]

**राजा—भगवन् सकल्पयोने, प्रतिबन्धवत्स्वपि विषयेष्वभिनिवेश्य किं तथा प्रहरसि यथा जनोऽयं न कालान्तराक्षमो भवति । ( सविस्मयम् )**

**क रुजा हृदयप्रमाथिनी क च ते विश्वसनीयमायुधम् ।**
**मृदु तीक्ष्णतरं यदुच्यते तदिदं मन्मथ दृश्यते त्वयि ॥ २ ॥**

---

मालविका, अनेन दयापात्रतया सह स्वान्तशुद्धिरभिहिता । अधिकं सविशेषम् अतिसावधानमित्यर्थः । नागरक्षितः सर्पपालितः, निधयो हि सर्पपालिताः सुखं नास्कन्द्यन्ते जनैः, यथा हि सर्पपालिता निधयः सत्यप्यभिलाषविषयत्वे दुरापास्तथैव धारिणीसविशेषावधानपालिता मालविका कष्टलभ्येति भावः, नचैवं विगतस्पृहः स्यामित्याशङ्कायां निषेधति–तथापीति । घटयिष्यामि त्वया सह मालविकां योजयिष्यामि । क्वचित् पुस्तके–'देव्या अधिकतरं रक्ष्यमाणा रक्षितानामिव निधीनां सुखं न समासादयितव्या, तथापि यतिष्ये' इतीदृशः पाठः । अनया प्राप्त्याशया बिन्दोः समन्वयाद् गर्भसन्धिरिति मन्तव्यम् ।

भगवन् । प्राणिमात्रेष्वेव निरङ्कुशप्रभावविस्तारेण तथा संबोधनम् । सङ्कल्पयोने कन्दर्प, प्रतिबन्धवत्सु सविघ्नेषु, विषयेषु भोग्येषु, अभिनिवेशकारी आग्रहजनकः । किन्तथा प्रहरसि किमिति तथा पीडयसि । कालान्तराक्षमः विलम्बासहिष्णुः । सप्रतिबन्धे विषये नियोजयतः कालप्रतीक्षाऽवसरप्रदानमुचितमिति कामं प्रति पर्यनुयोगः ।

क्व रुजेति । हृदयप्रमाथिनी मनःपीडाप्रदा रुजा परितापः क्व कुत्र ? तव विश्वसनीयम् कुसुमरूपतयाऽपरितापकरत्वेन प्रतीतं ते तव आयुधं बाणरूपमस्त्रं च क्व ? नोभयं सङ्गच्छत इत्यर्थः । कुसुममयेन तवास्त्रेणेदृशस्य तापस्योत्पादनमत्याश्चर्यकरमिति भावः । मृदु कोमलम् अथ च तीक्ष्णतरम् अतिप्रखरं च

---

किन्तु महारानी उसकी अधिक देखभाल करती रहती हैं इस लिये सर्परक्षित खजानेकी तरह वह सुखसे नहीं मिलेगी । फिर भी यत्न करूंगी ।

राजा—भगवन् कामदेव, विघ्नवाले विषयमें राग उत्पन्न करके तुमने इस तरह प्रहार करना प्रारम्भ करदिया कि मैं अब उतावला होरहा हूँ । ( विस्मयके साथ )

कहाँ हृदयको मसल देनेवाले यह सन्ताप ! और कहाँ तुम्हारे यह विश्वसनीय

विदूषकः—णं भणामि तस्सिं साहणिज्जे कज्जे किदो मए उवाओवक्खेओ । ता पज्जवत्थावेदु भवं अप्पाणं । [ ननु भणामि तस्मिन्साधनीये कार्ये कृतो मयोपायोपक्षेपः । तत्पर्यवस्थापयतु भवानात्मानम् । ]

राजा—अथेमं दिवसशेषमुचितव्यापारविमुखेन चेतसा क्व नु खलु यापयामि ।

विदूषकः—अज्ज एव्व पढमावदारसुहआणि रत्तकुरवआणि उवाअणं पेसिअ णववसन्तावदारव्ववदेसेण इरावदीए णिउणिआमुहेण पत्थिदो भवं 'इच्छामि अज्जउत्तेण सह दोलाहिरोहणं अणुहविदुं'त्ति । भवदा वि से पडिण्णादं । ता पमदवणं एव्व गच्छम्ह । [ अद्यैव प्रथमावतारसुभगानि रक्तकुरवकाण्युपायनं प्रेष्य नववसन्तावतारव्यपदेशेनेरावत्या निपुणिकामुखेन प्रार्थितो

---

यदाख्यायते लोकैरुच्यते, हे मन्मथ मदन, तदिदं त्वयि दृश्यते, 'एकमेव त्वदीयमस्त्रं कुसुममयत्वेन कोमलं मादृशमहासत्त्वजनव्यथकत्वाच्च तीक्ष्णतरम् । तदयं छायातपयोरिव विरुद्धधर्मयोरेकत्र समावेशः । अत्रायुधे हृदयप्रमाथित्वविश्वसनीयतयोर्विरूपयोः सङ्घटनात् विषमालङ्कारः । सुन्दरीवृत्तम्—'अयुजोर्यदि सौ जगौ युजोः सभरा ल्गौ यदि सुन्दरी तदा' इति च तल्लक्षणम् ॥ २ ॥

साधनीये सम्पादयितुमर्हे, मालविकामिलनरूपे । उपायोपक्षेपः साधनसमुपन्यासः । उपायस्य सामाद्यन्यतमस्य उपक्षेपः प्रयोग इति वार्थः । पर्यवस्थापयतु प्रकृतौ स्थापयतु ।

उचितव्यापारविमुखेन नित्यकरणीयकार्यकलापानुन्मुखेन, मालविकाविषयकाभिलाषदूयमानतयाऽस्थिरेणेति भावः ।

प्रथमावतारेति । प्रथमावतार आद्यो विकासः, तेन सुभगानि चेतोहराणि, प्रचुरप्रीतिपात्राणीत्याशयः। उपायनम् उपहारम् । निपुणिकामुखेन तदाख्यपरिजनद्वारा,

---

(पुष्पमय) शस्त्र !! लोक जो 'कोमल और अतिशय तीक्ष्ण' इस तरह कहा करते हैं, वह तुम्हींमें देख रहा हूँ ॥ २ ॥

विदूषक—महाराज, मैं कहता हूं इस कार्यमें मैंने उपयुक्त नीति वरती है, आप धैर्य रखें ।

राजा—अच्छा, मन उदास होरहा है, इस सन्ध्यासमयको कहाँ वितावें ।

विदूषक—आज ही तो सर्वप्रथमपुष्पित नवीन कुरवकपुष्प भेजकर नववसन्तागम सूचनाके छलसे रानी इरावतीने निपुणिकाद्वारा कह भेजा है कि मैं आर्यपुत्रके

भवान्, 'इच्छाम्यार्यपुत्रेण सह दोलाधिरोहणमनुभवितु'मिति । भवताप्यस्यै प्रतिज्ञातम् । तत्प्रमदवनमेव गच्छावः । ]

राजा—न क्षममिदम् ।

विदूषकः—कहं विअ । [ कथमिव । ]

राजा—वयस्य, निसर्गनिपुणाः स्त्रियः । कथमन्यसंक्रान्तहृदयमुपलालयन्तमपि ते सखी न मां लक्षयिष्यति । अतः पश्यामि ।

उचितः प्रणयो वरं विहन्तुं बहवः खण्डनहेतवो हि दृष्टाः ।

---

ईदृशः प्रयोगो नैषधीये यथा—'प्रविश्य यन्मे वदनं ह्रियाऽह तद्विनिर्यदाकर्णय मन्मुखाध्वना' । दोलाधिरोहणमनुभवितुं दोलायामुपविश्य तद्दोलनजायमानानन्दमुपभोक्तुमित्यर्थः ।

न क्षमं न योग्यम् ।

निसर्गनिपुणाः निसर्गेण स्वभावेन निपुणाः दक्षाः पराशयविज्ञा इत्यर्थः । ननु सन्तु पराशयविज्ञाः प्रमदाः, प्रमदवनगमनस्यायोग्यत्वं पुनरितः कुतः समर्थितमित्यपेक्षायामाह—कथमिति । अन्यसङ्क्रान्तहृदयं परवनितानुरक्तमनसम् , उपलालयन्तं सादरमनुरोधं पालयन्तम् । ते सखी इरावती । न लक्षयिष्यति न ज्ञास्यति । अनुरोधपालनार्थं प्रमदवनमुपेतस्य ममाकारादिभिः परप्रमदानुरक्तचित्ततां तव सखी निस्संशयमवयास्यति, तेन विशेषतो विमनायिष्यते च सेति वरं तत्रागमनमेवेति राज्ञोऽभिप्रायः ।

उचित इति । प्रणयः याच्ञा, दोलाधिरोहणाय इरावत्याः प्रार्थनेत्यर्थः, विहन्तुं खण्डयितुं विफलयितुं, उचितः युक्तः, तस्याः प्रार्थनाया अकरणेऽपि विशेषदोषो नास्तीत्याशयः । हि यतः बहवः अनेके खण्डनस्य प्रार्थनोल्लङ्घनस्य हेतवः कारणानि राजकार्यबाहुल्यशरीरास्वास्थ्यादीनि दृष्टाः कल्पनोन्नेया इत्यर्थः ।

---

साथ झूलेका आनन्द लेना चाहती हूँ। आपने भी वादा किया है। अतः प्रमदवन चला जाय।

राजा—नहीं' ऐसा करना ठीक नहीं होगा।

विदूषक—क्यों ?

राजा—मित्र, स्त्रियां स्वभावसे ही होशियार हुआ करती हैं। मेरा हृदय अन्यासक्त है, मेरे अनुराग प्रदर्शित करनेपर भी वह क्या यह ताड़ न लेगी ?। देखो—

प्रणय परित्याग कर देना अच्छा है, उसके अनेक कारण होसकते हैं। किन्तु

उपचारविधिर्मनस्विनीनां न तु पूर्वाभ्यधिकोऽपि भावशून्यः ॥ ३ ॥

विदूषकः—णारिहदि भवं अन्तेउरट्ठिदं दक्खिण्णं एक्कपदे पिट्ठदो कादुम् । [ नार्हति भवानन्तःपुरस्थितं दाक्षिण्यमेकपदे पृष्ठतः कर्तुम् । ]

राजा—( विचिन्त्य । ) तेन हि प्रमदवनमार्गमादेशय ।

विदूषकः—इदो इदो भवं । [ इत इतो भवान् । ]

( उभौ परिक्रामतः । )

विदूषकः—णं एदं पमदवणं पवणबलचलाहिं पल्लवङ्गलीहिं तुवरेदि

---

भावशून्यः स्वाभाविकानुरागरहितः पूर्वाभ्यधिकः पूर्वापेक्षया समधिकोऽपि मनस्विनीनां प्रशस्तमनसाम् उपचारविधिः स्नेहप्रकाशनप्रकारः तु न, उचित इति शेषः । कयाचित् प्रणयिन्या कृतेऽनुरोधे तत्प्रत्याख्यानादपि कृत्रिमप्रणयप्रकाशनं तस्या अधिकं खेदमावहतीति तात्पर्यम् । अत्राप्रस्तुतमनस्विनीसामान्यात् प्रस्तुतेरावती-प्रतीतेरप्रस्तुतप्रशंसालङ्कारः । मालभारिणी छन्दः—‘विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम्’ इति च तल्लक्षणम् ॥ ३ ॥

अन्तःपुरस्थितं स्वावरोधप्रसिद्धम्, दाक्षिण्यं दक्षिणनायकभावम्, ‘एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः’ इति साहित्यदर्पणे दक्षिणनायकलक्षणम् । एकपदे सपदि सहसा, पृष्ठतः कर्त्तुं परिहर्त्तुम् ।

तेन हि तवोक्तस्य सारवत्त्वेनानुपेक्षणीयत्वादित्यर्थः ।

पवनबलचलाभिः वातकम्पिताभिः । पल्लवाः किसलयान्येवाङ्गुल्यस्ताभि-रिति निरङ्गं रूपकम् । त्वरयति त्वरां कर्त्तुमाग्रहणातीत्यर्थः । क्वचित् पुस्तके ‘पवनबलचलाभिः’ इत्यस्य स्थाने ‘पवनदरचलाभिः’ इति पाठः । तत्र पाठे—पव-नेन वायुना दरमीषच्चलाभिरित्यर्थः करणीयः ।

---

चतुर रमणियोंके निकट पूर्वापेक्षया अधिक होनेपर भी अनुरागविहीन व्यवहार भला नहीं लगता है ॥ ३ ॥

विदूषक—आप चिरागत अन्तःपुरदाक्षिण्यका त्याग नहीं करसकते हैं ।

राजा—( चिन्ता करके ) तब प्रमदवनका मार्ग बताओ ।

विदूषक—इस मार्गसे,

( दोनों चलते हैं )

विदूषक—महाराज ! यह प्रमदवन वायुवेगसे डोलनेवाले पल्लवरूप अपनी

विअ भवन्तं पवेसिदुं । [ नन्वेतत्प्रमदवनं पवनबलचलाभिः पल्लवाङ्गुलीभिस्त्वरयतीव भवन्तं प्रवेष्टुम् । ]

राजा—( स्पर्शं रूपयित्वा । ) अभिजातः खलु वसन्तः । सखे, पश्य

उन्मत्तानां श्रवणसुभगैः कूजितैः कोकिलानां
सानुक्रोशं मनसिजरुजः सह्यतां पृच्छतेव ।
अङ्गे चूतप्रसवसुरभिर्दक्षिणो मारुतो मे

---

स्पर्शं रूपयित्वा ( प्रमदवनस्य वायोः ) स्पर्शं तत्सुखम्, रूपयित्वा अभिनीय । अभिजातः प्रकामरमणीयः । अथवा सर्वथाऽऽगतः ।

उन्मत्तानामिति । माधवेन वसन्तसमयेन श्रवणसुभगैः श्रुतिप्रियैः कर्णतर्पणैरित्यर्थः । उन्मत्तानां ( चूताङ्कुरास्वादकषायकण्ठानाम् ) माद्यताम् कोकिलानां पिकानां कूजितैः कलालापैः मनसिजरुजः मनोजजनितसन्तापस्य सह्यतां सोढुं योग्यताम् 'अपि शक्नोषि कामकृतं परितापं सोढुं त्वम्' इति सानुक्रोशं सानुकम्पं पृच्छता जिज्ञासमानेन इव मे मम अङ्गे शरीरावयवसमुदये सान्द्रस्पर्शः कोमलस्पर्शः करतल इव चूतप्रसवसुरभिः सहकारसुमनःसुगन्धिः दक्षिणो दक्षिणदिगायातः मारुतो वायुः व्यापृतः समासञ्जितः । एतेन वसन्तर्तुलिङ्गस्य शीतलसुगन्धिमलयानिलप्रकटीभावनिवेदनेन वसन्तागमः प्रमाणितः । यथा कश्चित् स्वजनं रुजा परीतं समेत्य कोऽपि तदात्मीयः प्रेम्णाऽनुकम्पया च तदीयपरितापस्य सह्यतां जिज्ञासतेऽशतः परितापं परिचेतु च तदङ्गं स्वकरेण परामृशति, परकीयतापस्य दर्शनस्पर्शनप्रश्नैः परीक्षायाः प्रचुरप्रथितत्वात् तथाऽयं वसन्तवायुरिति स्वजनव्यवहारस्य तत्र समारोपणात् समासोक्तिः । 'समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ॥' इति च तल्लक्षणम् । सा चेयं समासोक्तिः करतल इवेत्युपमया सह्यतां पृच्छतेवेति हेतूत्प्रेक्षया च सङ्कीर्यते । 'कृपा दयाऽनुकम्पा स्यादनुक्रोशः' । 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने' इत्युभयत्राप्यमरः ।

---

अंगुलियोंसे शीघ्र प्रवेशकरनेके लिये आपको प्रेरित कर रहा है ।

राजा—( स्पर्शका अभिनय करके ) सभी तरहसे वसन्तका आविर्भाव होचुका है । मित्र, देखो तो—

वसन्तकाल, आम्रमुकुलकी सुगन्धिसे आमोदित मलयवायुरूप अपने करतलसे हमारे शरीरको सहला रहा है । मालूम पड़ता है वह सहृदयतावशीभूत होकर

सान्द्रस्पर्शः करतल इव व्यापृतो माधवेन ॥ ४ ॥

**विदूषकः**—पविस णिव्वुदिलाहाअ । [ प्रविश निर्वृतिलाभाय । ]

( उभौ प्रविशतः । )

**विदूषकः**—अवधाणेण दिट्ठिं देहि । एदं क्खु भवन्तं विअ विलोहइदुकामाए पमदवणलच्छीए जुवदीवेसलज्जावअत्तिअं वसन्तकुसुमणेवत्थं गहीदं । [ अवधानेन दृष्टिं देहि । एतत्खलु भवन्तमिव विलोभयितुकामया प्रमदवनलक्ष्म्या युवतिवेषलज्जापयितृकं वसन्तकुसुमनेपथ्यं गृहीतम् । ]

**राजा**—ननु विस्मयादवलोकयामि ।

---

मनसि जायत इति मनसिजः 'सप्तम्यां जनेर्डः' 'हलदन्तात् सप्तम्याः संज्ञायाम्' इति च पाणिनीयसूत्राभ्यां डप्रत्ययाऽलुकौ । मन्दाक्रान्ता वृत्तम् । तल्लक्षणं यथा—'मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्' इति ॥ ४ ॥

निर्वृतिलाभाय सुखप्राप्तये, 'निर्वृतिः स्वस्थितावस्तंगमने च सुखे स्त्रियाम्' इति मेदिनी । प्रविशेत्यस्य प्रमदवनमिति कर्माध्याहार्यम् ।

अवधानेन मनोयोगपूर्वकम्, लोभयितुकामया आकर्षयितुमभिलषन्त्या, प्रमदवनलक्ष्म्या तदाख्योपवनशोभया, युवतीनां वेशः शरीरनेपथ्यम्, तस्य लज्जापयितृकं हीनताप्रदर्शकम् । प्रमदवनलक्ष्मीर्हि स्पर्द्धालुर्नायिकेव भवतः स्वविषयेऽनुरागातिरेकं जनयितुकामा वसन्तसमयसुलभसुमनःसमृद्ध्याऽऽत्मानं मण्डयित्वा स्थितेति हेतूत्प्रेक्षा । लज्जापयितुमित्यत्र पुगागमश्चिन्त्यः, सति त्वभिनिवेशे लज्जामापयतीति लज्जापम्, तत्करोतीति णिचा रूपं समर्थनीयम् ।

विस्मयात् आश्चर्यातिशयात्, अवलोकयामि पश्यामि, एतत प्रमदवनमिति शेषः ।

---

कोकिलकूजनके द्वारा यह जिज्ञासा प्रकट कररहा है कि कामपीडा सह्य है या नहीं ॥ ४ ॥

विदूषक—शान्तिलाभके लिये प्रमदवनमें चलाजाय ।

( दोनोंका प्रवेश )

विदूषक—सावधानतापूर्वक देखें, यह प्रमदवनशोभा आपको लुभानेके लिये ही युवतियोंके शृङ्गारको लजानेवाले वसन्ती फूलोंसे सजकर उपस्थित है ।

**राजा**—मैं विस्मयसे इस प्रमदवनको देख रहा हूँ ।

रक्ताशोकरुचा विशेषितगुणो बिम्बाधरालक्तकः
प्रत्याख्यातविशेषकं कुरबकं श्यामावदातारुणम् ।
आक्रान्ता तिलकक्रिया च तिलकैर्लग्नद्विरेफाञ्जनैः
सावज्ञेव मुखप्रसाधनविधौ श्रीर्माधवी योषिताम् ॥ ५ ॥

---

रक्ताशोकरुचेति । रक्तस्य लोहितवर्णस्य अशोकस्य तदाख्यकुसुमप्रभेदस्य रुचा प्रभया बिम्बं बिम्बफलमिव अधरः योषितामोष्ठस्तस्यालक्तकः रञ्जनसाधनरसः विशेषितः अतिशायितः, गुणो रक्तवर्णता यस्य स तादृशः । तथा श्यामं कृष्णवर्णम्, अवदातं सितम्, अरुणं रक्तवर्णञ्च कुरुबकं च प्रत्याख्यातं निराकृतं तिरस्कृतं विशेषकं रमणीनां कपोलादौ चित्रकं नानावर्णरचनाविशेषरूपं येन तादृशम्, समजनीति क्रियाऽध्याहार्या । किञ्च लग्नद्विरेफाञ्जनैः संसक्तभ्रमरकज्जलैः ( मधुपानार्थमुपस्थितैर्भ्रमरैः कज्जलशोभां बिभ्रद्भिः ) तिलकैः पुन्नागकुसुमैः तिलकक्रिया ललाटिकालङ्कारशोभा आक्रान्ता परिभवं गमिता । तदेवं माधवी वसन्तकालिकी श्रीः शोभा योषितां स्त्रीणां मुखप्रसाधनविधौ मुखालङ्करणे सावज्ञेव सतिरस्कारेव दृश्यते इति शेषः । अयमाशयः—रक्ताशोककुसुमसमृद्धिः अधरालक्तककान्तिहरी, कुरुबककुसुमं कपोलादिगतचित्रकचारिमातिशायि, पुष्पासवपानलोभाकृष्टभ्रमरशोभितरक्ताभपुन्नागपुष्पाणि ललाटतटवर्त्तिमध्यगतकृष्णबिन्दुसुन्दरसिन्दूरतिलकविजयीनि, तदियं वसन्तलक्ष्मीः स्ववेशात् युवतिवेशानामपकर्षात् तत्रावज्ञामिव करोतीति सुतरामीदृशी प्रमदवनशोभा विस्मयमावहतीति । अत्रोपमेयानां वनितानां प्रसाधनविधेरुपमानभूताया वसन्तश्रियः प्रसाधने उत्कृष्टताप्रतीतेर्व्यतिरेकालङ्कारः । 'बिम्बाधरालक्तकः' 'लग्नद्विरेफाञ्जनैः' इत्युभयत्र लुप्तोपमा । अन्ते 'सावज्ञेव' इत्यत्रोत्प्रेक्षा । आद्यपादत्रयप्रतिपाद्यार्थस्यान्तिमपादप्रतिपाद्यार्थं प्रति कारणत्वात् वाक्यार्थहेतुकं काव्यलिङ्गं च । तदेषामलङ्काराणामङ्गाङ्गिभावात् सङ्करः । शार्दूलविक्रीडितं छन्दः । 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमरः । 'तिलकः पुन्नागः' इति शब्दकल्पद्रुमः । श्यामं च तदवदातं च अरुणञ्चेत्यत्र विग्रहे 'वर्णो वर्णेन' इति पूर्वयोः समासे चरमेण सह कर्मधारयः ॥ ५ ॥

---

रक्ताशोकपुष्पकी सुन्दरतासे रमणियोंके बिम्बसदृश अधरपर स्थित अलक्तक तिरस्कृत होता है, काला उजला और लाल रंगसे युक्त कुरवकफूलके द्वारा कपोलावस्थित तिलक पराजित होता है, कज्जलकी तरह संलग्न भ्रमर हैं, पुन्नागपुष्प ललाटस्थित तिलकको पराभूत करता है । मालूम पड़ता है सभी प्रकार यह वसन्तशोभा स्त्रियोंके प्रसाधनकी अवज्ञा कर रहा है ॥ ५ ॥

( उभौ नाट्येनोद्यानशोभां निर्वर्णयतः। )

( ततः प्रविशति पर्युत्सुका मालविका। )

मालविका—अविण्णादहिअअं भट्टारअं अहिलसन्दी अप्पणो वि दाव लज्जेमि। कुदो विहवो सिणिद्धस्स सहीजणस्स इमं वुत्तन्तं आचक्खिदुं। जाणे अप्पडिआरगरुअं वेअणं केत्तिअं कालं मअणो मं णइस्सदि त्ति। ( इति कतिचित्पदानि गत्वा। ) आ, कहिं क्खु पत्थिदम्हि। ( इति स्मृतिमभिनीय। ) आदिट्ठम्हि देवीए—'मालविए, गोदमचापलादो दोलापरिब्भट्ठाए सरुजो मह चलणो। तुमं दाव गदुअ तवणीआसोअस्स दोहलं णिवट्टेहि' त्ति। जइ सो पञ्चरत्तब्भन्तरे कुसुमं दंसेदि तदो ( इत्यन्तरा निःश्वस्य ) अहं अहिलासपूरइत्तअं पसादं दावइस्सं त्ति। ता जाव णिओअभूमिं पढमं गदा होमि, दाव अणुपदं मह चलणालंकारहत्थाए वउलावलिआए आअन्दव्वं, ता परिदेवइस्सं ताव वीसद्धं मुहुत्तअं। ( इति परिक्रामति। ) [ अविज्ञातहृदयं भर्तारमभिलषन्त्यात्मनोऽपि तावल्लज्जे। कुतो विभवः स्निग्धस्य सखीजनस्येमं वृत्तान्तमाख्यातुम्। न जानेऽप्रतिकारगुरुकां वेदनां कियन्तं कालं मदनो मां नेष्यतीति। आः, कुत्र खलु प्रस्थितास्मि। आदिष्टास्मि देव्या—'मालविके, गौतमचापलाद्दोलापरि

---

निर्वर्णयतः सविस्मयं विलोकयतः।

पर्युत्सुका राज्ञो विलोकनार्थमुत्कण्ठितचित्ता।

अविज्ञातहृदयम् अपरिचितमनोदशम्, 'मयि कीदृशो भाव' इति निश्चयेन यस्य विषये नावगतम्, तादृशमित्यर्थः। आत्मनोऽपि लज्जे स्वतोऽपि जिह्रेमि, तादृशातिदुःसाध्यकार्ये चेतोबन्धादिति भावः। कुतो विभवः कुतः सामर्थ्यम्? अप्रतिकारगुरुकाम् अप्रतिकारेण प्रतिकाराविधानेन गुर्वीमतिमहतीम्। अप्रतीकारता च सखीजनाविनिवेदनेन, तथाविधत्वञ्चासम्भवविषयकाभिलाषबन्धादित्यर्थः। नेष्यति प्रापयिष्यति, कियन्तं कालं राजवियोगखेदमनुभावयिष्यतीत्यर्थः। गौतमस्य

---

( दोनों अभिनयद्वारा उद्यानको देखने लगते हैं )

( तदनन्तर उत्कण्ठिता मालविकाका प्रवेश )

मालविका—महाराजकी मनोदशाका मुझे परिचय नहीं है, इसलिये उनकी कामना करके मैं अपने आप लज्जाका अनुभव करती हूँ। प्रियसखीसे यह कथा कह सकूं इतनी शक्ति मुझमें कहाँ? नहीं समझती मुझे कब तक कामदेव इस तरह सताते रहेंगे? (कुछ चलकर) किधर चली हूँ? (यादकरनेका अभिनय करके) देवीने

अद्यायाः सरुजौ मम चरणौ । त्वं तावद्गत्वा तपनीयाशोकस्य दोहदं निर्वर्तयेति' । यद्यसौ पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति, ततोऽहमभिलाषपूरयितृकं प्रसादं दापयिष्यामीति । तद्यावन्नियोगभूमिं प्रथमं गता भवामि, तावदनुपदं मम चरणालंकारहस्तया बकुलावलिकयागन्तव्यम् , तत्परिदेवयिष्ये तावद्विस्रब्धं मुहूर्तकम् । ]

**विदूषकः—( दृष्ट्वा । ) ही ही, वअस्स, एदं क्खु सीहुपाणुव्वेजिदस्स मच्छण्डिआ उवणादा ।** [ आश्चर्यमाश्चर्यम्, वयस्य, एतत्खलु सीधुपानोद्वेजितस्य मत्स्यण्डिकोपनता । ]

---

तदाख्यस्य राज्ञो विदूषकस्य । चापलात् अविचार्यकार्यकारित्वात् ( दोलोपविष्टायामसावधानायाञ्च मयि तच्चालनात् ) सरुजौ रुजाविशिष्टौ ( दोलावधिकपातजन्यव्यथायुक्तौ ) अत एव न शक्नोमि चलितुमित्यर्थः । दोहदम् पादाघातरूपमभिलाषम् निर्वर्त्तय निष्पादय । सः तपनीयाशोकतरुः । दर्शयति प्रकटयति । अभिलाषपूरयितृकम् मनोरथपूर्त्तिप्रदम् यथाभिलाषपूर्त्तिमित्यर्थः । दास्यामीत्येतत्पर्यन्तं देव्युक्तानुवादः । नियोगभूमिम् आदिष्टकार्यपालनोपयुक्तप्रदेशम् । मम चरणालङ्कारहस्तया मदीयनूपुरादिकमादायेत्यर्थः । विस्रब्धम्—निश्शङ्कम् , परादर्शनादित्यर्थः । परिदेविष्यामि विलप्यात्मानं लघूकरिष्यामि ।

सीधुपानोद्वेजितस्य मद्यपानेनोद्वेजितस्य, मत्स्यण्डिका सिताप्रभेदः ( राव- इति प्रसिद्धा) यथा मधु पीत्वोद्विग्नो जनो मत्स्यण्डिकासेवनेनाधिकं मदवेगमुद्वहति, तथैव मदनार्त्तस्य राज्ञो दृष्टिपथातिथीभूता सतीयं मालविका तदीयां विह्वलतां वर्द्धयिष्यतीति भावः । अप्रस्तुतप्रशंसाऽलङ्कारः । 'इक्षोः पक्वैः रसैः सिद्धः सीधुः पक्वरसश्च सः' । इति राजनिघण्टुः । 'इक्षो रसो यः संपक्वो घनः किञ्चिद् द्रवान्वितः । मन्दं यत् स्यन्दते तस्मान्मत्स्यण्डीति निगद्यते॥' इति भावप्रकाशः ।

---

**मुझे आदेश दिया है, मालविके, गौतमके चाञ्चल्यके कारण झूलापरसे गिरनेसे मेरे पैरमें चोट लगगई है, अतः मैं चल नहीं सकती । तुम जाकर तपनीयाशोककी दोहदपूर्त्ति करना । यदि पांच रात्रिके अन्दर उसमें फूल उग आया तो मैं (निश्वास छोड़कर ) तुम्हें यथेच्छ पुरस्कार दूँगी । मैं जब तक उस जगह पहुँचूंगी तब तक बकुलावलिका भी चरणालङ्कार लिये वहाँ पहुँच जायगी । जब तक वह नहीं आई रहेगी, दिलखोलकर रो लूंगी । ( ऐसा कहकर चलने लगती है )**

**विदूषक—( देखकर ) आश्चर्य, आश्चर्य, यह तो मदमत्त व्यक्तिके आगे मिश्री रखी हुई है ।**

राजा—अये किमेतत् ।

विदूषकः—एसा णादिपरिक्खिदवेसा उस्सुअवअणा एआइणी मालविआ अदूरे वट्टदि । [ एषा नातिपरिष्कृतवेषोत्सुकवदनैकाकिनी मालविकाऽदूरे वर्तते । ]

राजा—( सहर्षम् । ) कथं मालविका ।

विदूषकः—अह इं । [ अथ किम् । ]

राजा—शक्यमिदानीं जीवितमवलम्बयितुम् ।

त्वदुपलभ्य समीपगतां प्रियां हृदयमुच्छ्वसितं मम विक्लवम् ।
तरुवृतां पथिकस्य जलार्थिनः सरितमारसितादिव सारसात् ॥ ६ ॥

---

नातिपरिष्कृतवेशा नात्यलङ्कृता, तथाविधत्वञ्च तस्या रहसि लोकदर्शनविरहविभावनात्, पूर्वरागसमुद्भूतबलवन्मनोवैक्लव्याद् वेति बोध्यम् । एकाकिनी सहायान्तररहिता, एतेन सुखोपसर्पणीयतोक्ता ।

कथम् इदमत्राश्चर्यं ।

अथ किम् सत्यं त्वयोक्तमित्यर्थः ।

जीवितमवलम्बयितुम् इयं मदीयं जीवनं स्वाशयप्रकाशादिनाशाबन्धनेन रक्षितुं शक्नोतीति राजाशयः ।

त्वदुपलभ्येति । आरसितात् बहुशब्दायितवतः सारसात् तदाख्यया प्रसिद्धात् पक्षिणस्तरुवृतां वृक्षावलीवेष्टितां प्रच्छन्नामित्यर्थः, सरितम् नदीमुपलभ्य प्राप्य जलार्थिनः पिपासाक्षामकण्ठस्य पथिकस्य अध्वनीनस्य इव त्वत् ( सकाशात् ) समीपगतां निकटवर्त्तिनीं प्रियां वल्लभाम् उपलभ्य समासाद्य मम विक्लवम् मदनविह्वलम् हृदयम् उच्छ्वसितम् आनन्दमन्थरम् सम्पद्यत इत्यर्थः । अत्रोपमालङ्कारः ।

---

राजा—अरे, वह क्या ?

विदूषक—सादे वेशमें और उत्कण्ठित चेहरा लिये अकेली मालविका निकटमें ही है।

राजा—मालविका ! कैसे !!

विदूषक—और क्या ।

राजा—अब जीवन धारण कर सकूंगा।

सारस पक्षीके कलरवसे वृक्षको झुरमुटमें छिपी नदीधाराको पिपासित पान्थकी तरह तुम्हारे आश्वासनपर अपनी प्रियतमाको समीपमें प्राप्तकर मेरा यह उत्कण्ठित हृदय प्रफुल्लित हो उठा है ॥ ६ ॥

अथ क तत्रभवती।

विदूषकः—एसा तरुराइमज्झादो णिक्कन्ता इदो ज्जेव्व परिवट्टन्ती दीसइ।
[ एषा तरुराजिमध्यान्निष्क्रान्तेत एव परिवर्तमाना दृश्यते। ]

राजा—( विलोक्य, सहर्षम्। ) वयस्य, पश्याम्येनाम्।

विपुलं नितम्बदेशे मध्ये क्षामं समुन्नतं कुचयोः।
अत्यायतं नयनयोर्मम जीवितमेतदायाति ॥ ७ ॥

सखे, पूर्वस्मादतिमनोहरावस्थान्तरमुपारूढा तत्रभवती। तथा हि।

---

अन्ते वृत्त्यनुप्रासश्च। तयोः संसृष्टिः। उपलम्भकर्त्तारं राजानं मत्त्वोच्छ्वासकर्त्तृत्वेन च हृदयं समर्थ्यैककर्त्तृकत्वविरहाल्ल्यबभावं प्रति वृथा भ्राम्यतां केषाञ्चिदयं गदोन्माद एव, तदुभयक्रियाकर्तृत्वेनैकस्य हृदयस्यैव प्रतिपादयितुं शक्यत्वात्। द्रुतविलम्बितं वृत्तम्—'द्रुतविलम्बितमाह नभौ भरौ' इति च तल्लक्षणम् ॥ ६ ॥

तरुराजिमध्यात् तरुगुल्मात्, निष्क्रान्ता निर्गता, इत एव आवयोरभिमुखमेव। अभिवर्त्तमाना आगच्छन्ती।

विपुलं नितम्बेति। नितम्बबिम्बे श्रोणिमण्डले विपुलं पीवरम्, मध्ये कटिदेशे क्षामम् अतिकृशम्, कुचयोः स्तनयोः समुन्नतम् अत्युच्छ्रितम्, तथा नयनयोश्चक्षुषोरत्यायतम् अतिविस्तृतम् एतत् पुरःसरत् मालविकारूपम् मम जीवितम् प्राणधारणकारणभूतम् आयाति अस्मदभिमुखमागच्छति। अत्र सर्वत्र सप्तमीविभक्तिरवच्छेदार्था, यथा—'अकृशं कुचयोः कृशं वलग्ने विपुलं चेतसि विस्तृतं नितम्बे। अधरेऽरुणमाविरस्तु चित्ते करुणाशालि कपालि भागधेयम्' ॥ इत्यत्र। 'नितम्बबिम्ब' इत्यत्र च्छेकानुप्रासः। 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः। आर्याप्रभेदो वृत्तम् ॥ ७ ॥

अवस्थान्तरम् अन्याम् ( पूर्वावस्थाव्यतिरिक्ताम् ) अवस्थाम्। उपारूढा उपगता।

---

वह है कहाँ ?

विदूषक—वृक्षश्रेणीके बीचसे होकर वह इधर ही आती हुई दीख रही है।

राजा—( देखकर, प्रसन्नतासे ) मित्र, देखता हूँ—

स्थूलनितम्ब, कृशकटि, स्तनद्वय उठा हुआ, आँखें अतिविशाल, यह तो हमारा जीवन ही इधर आरहा है ॥ ७ ॥

सखे ! इसने तो पूर्वापेक्षया अतिरमणीय एक दूसरी ही अवस्था प्राप्त करली

शरकाण्डपाण्डुगण्डस्थलेयमाभाति परिमिताभरणा ।
माधवपरिणतपत्रा कतिपयकुसुमेव कुन्दलता ॥ ८ ॥

विदूषकः—एसा वि भवं विअ मअणव्वाहिणा परिमिट्ठा भविस्सदि ।
[ एषापि भवानिव मदनव्याधिना परिमृष्टा भविष्यति । ]

राजा—सौहार्दमेवं पश्यति ।

मालविका—अअं सो ललिदसुउमालदोहलापेक्खी अगिहीदकुसुमणेवत्थो उक्कण्ठिदाए मह अणुकरेदि असोओ । जाव एदस्स पच्छाअसीदले सिलापट्टए णिसण्णा अप्पाण विणोदेमि । [ अयं स ललितसुकुमारदोहदापेक्षी

---

शरेति । शरकाण्डो गण्डोपमानभूततृणयष्टिविशेषवत् पाण्डुनी पाण्डुरवर्णे गण्डस्थले कपोलदेशौ यस्याः सा तथोक्ता, शरकाण्डपाण्डुकपोलभागेत्यर्थः । तथा परिमिताभरणा स्वल्पालङ्कारा इयं मालविका माधवे वसन्तसमये परिणतपत्रा पाण्डुच्छदा कतिपयकुसुमा स्वल्पपुष्पा कुन्दलतेव आभाति शोभते । शरकाण्डपाण्डुकपोलदेशा विरलालङ्कारा चेयं मालविका वसन्तसमये द्वित्रसुमायाः पाण्डुपत्रायाश्च कुन्दलतायाः सादृश्यमाश्रयतीति भावः । पूर्णवाक्य उपमा, शरकाण्डपाण्डुगण्डस्थलेत्यत्र च लुप्तोपमा, वृत्त्यनुप्रासश्च, तदेतयोरेकाश्रयानुप्रवेशात्मा सङ्करः । तस्य चोपमया संसृष्टिः । आर्याभेद एव वृत्तम् ॥ ८ ॥

मदनव्याधिना कामरुजा, परिमृष्टा आक्रान्ता । अत्रोपमायां प्रक्रमभङ्गो दोषः, सुवेव विमलश्चन्द्र इत्यत्रेव । यदपि–'न लिङ्गवचने भिन्ने न न्यूनाधिकते तथा । उपमा दूषणायालं यत्रोद्वेगो न धीमताम् ॥' इत्यादिवचनम्, तदपि लिङ्गादिभेदेऽपि सहृदयानुद्वेगदायिस्थल एवादोषत्वमाह । 'परिमृश्यते' इति पाठस्तु निर्दोषः ।

सौहार्दं मय्यनुरागातिशयः । एवं पश्यति इयं मालविकाऽपि मदनव्याधिना पीड्यत इति सम्भावयति ( मयि तव प्रेमातिशय एव मम दशां विलोक्य तस्या अपि मद्विषयानुरागेण पीडितत्वं प्रमापयतीति नासौ वस्तुस्थितिरिति भावः ) ।

ललितसुकुमारदोहदापेक्षी ललितं रमणीयम्, सुकुमारं कोमलञ्च दोहदम्

---

है, देखो तो—इसका कपोल कण्डेकी तरह पाण्डुवर्ण, शरीर परिमितालङ्कार है, मालूम पड़ता है वसन्तमें परिणतपत्र और कतिपय फूलोंसे युक्त कुन्दलता हो ॥ ८ ॥

विदूषक—यह भी आपकी ही तरह कामव्याधिसे पीडिता होगी ।

राजा—प्रणय इसी तरह देखता है ।

मालविका—मनोरम और कोमल दोहदकी प्रतीक्षा करनेवाला अपुष्पित यह

अगृहीतकुसुमनेपथ्य उत्कण्ठिताया ममाऽनुकरोत्यशोकः । यावदस्य प्रच्छायशीतले शिलापट्टके निषण्णात्मानं विनोदयामि । ]

**विदूषकः**—सुदं भवदा उक्कण्ठिदम्हि त्ति तत्तहोदी मन्तेदि । [ श्रुतं भवता उत्कण्ठितास्माति तत्रभवती मन्त्रयते । ]

**राजा**—नैतावता भवन्तं प्रसन्नतर्कं मन्ये । कुतः

वोढा कुरबकरजसां किसलयपुटभेदशीकरानुगतः ।
अनिमित्तोत्कण्ठामपि जनयति मनसो मलयवातः ॥ ९ ॥

---

रमणीचरणाघातरूपमभिलाषम्, अपेक्षत इति तथोक्तः । अगृहीतकुसुमनेपथ्यः अधृतपुष्पशोभः ( अकुसुमित इत्यर्थः ) । मम ललितसुकुमारराजसङ्गमरूपाभिलाषवत्याः अपरिहितकुसुममयवेशायाश्च ।

अनुकरोति अनुहरति । सादृश्यमाश्रयतीत्यर्थः । प्रच्छायशीतले छायामनोहरे । शिलापट्टके प्रस्तरखण्डे । विनोदयामि सुखयामि ।

श्रुतम् आकर्णितम्, मालविकोक्तमित्यर्थः । अतश्च मदुक्तं सप्रमाणमिति भावः ।

प्रसन्नतर्कं सप्रमाणतया यथार्थानुमानम् । उत्कण्ठायाः कारणान्तरतोऽपि सम्भवात्, तया कारणान्तरस्याप्यनुमातुं शक्यत्वादिति भावः । उत्कण्ठायाः कारणान्तरजन्यतामेवाह—

वोढेति । कुरबकरजसां पुष्पविशेषपरागाणां वोढा वहनशीलः, किसलयपुटानां मुद्रितपल्लवानां भेदेन विकासनेन शीकरैः तदन्तर्गतहिमबिन्दुभिरनुगतः अनुसृतः मलयवातः दक्षिणदिगलङ्कारभूतमलयाचलस्पर्शरसिको वायुः मनसः सर्वजनहृदयस्य अनिमित्तोत्कण्ठाम् अकारणमुत्सुकभावमपि जनयति समेधयति । एवञ्चेयमस्या उत्कण्ठा मलयवातस्पर्शजाऽपि संभवतीति तस्या ऐकान्तिकभावेन कामदशानुमापकत्वं नास्तीति त्वदुक्तं शिथिलमूलमिति राजाशयः । अत्राप्रस्तुतात् सामान्यात् मानसौत्सुक्यात् प्रस्तुतस्य विशेषस्य मालविकामानसौत्सुक्यस्य प्रतीतेरप्रस्तुतप्रशंसा-

---

अशोक मुझ उत्कण्ठिताकी बराबरी कररहा है । तब तक इसीकी सुशीतल छायामें बैठकर अपनेको बहलाऊं ।

विदूषक—कुछ सुना आपने ? यह तो 'मैं उत्कण्ठिता हूँ' ऐसा कहती हैं ।

राजा इतनेसे ही आपके अन्दाजको सही नहीं मान सकता हूँ । क्योंकि—

कुरबकपुष्पके परागसे सनी, नूतन विकसित पल्लव मकरन्दसे भींगी यह मलयवायु विना किसी कारणके भी हृदयको उत्कण्ठित करदेती है ॥ ९ ॥

( मालविकोपविष्टा । )

राजा—सखे, इतस्तावदावां लतान्तरितौ भवावः ।

विदूषकः—इरावदिं विअ अदूरे पेक्खामि । [ इरावतीमिवादूरे प्रेक्षे । ]

राजा—नहि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गजः । ( इति विलोकयन् स्थितः । )

मालविका—हिअअ, णिरवलम्बणादो अदिभूमिलङ्घिणो ते मणोरहादो विरम । किं मं आआसिअ । [ हृदय, निरवलम्बनादतिभूमिलङ्घिनो ते मनोरथाद्विरम । किं मामायास्य । ]

( विदूषको राजानं वीक्षते । )

राजा—प्रिये, पश्य महत्त्वं स्नेहस्य ।

औत्सुक्यहेतुं विवृणोषि न त्वं तत्त्वावबोधैकफलो न तर्कः ।

---

ऽलङ्कारः । कुरबकरजसां वोढेति सुगन्धभावः, किसलयपुटभेदशीकरानुगत इति शीतलत्वम्, मलयसम्बन्धेन मन्दता च वायोः प्रतीयते । आर्या जातिः ॥ ९ ॥

लतान्तरितौ भवावः । प्रच्छन्नौ भूत्वा मालविकाया आशयमवधारयाव इत्यर्थः ॥

अदूरे नातिसमीपे, एतेन तस्याः शीघ्रमत्रोपस्थितिसम्भावनया प्रच्छन्नस्थितेः प्रत्यूहपराहतत्वं व्यञ्जितम् ।

ग्राहं जलजन्तुप्रभेदम् । यथा सरिति विकचां कमलिनीमवलोक्य तत्र वर्त्तमानस्य ग्राहस्योत्प्रेक्षया तदादानान्न निवर्त्तते मतङ्गजस्तथैवेरावत्युपस्थितिशङ्कया प्रियानिभृतावलोकनान्न विरन्तुमीहेऽहमित्यर्थः । अप्रस्तुतप्रशंसाऽलङ्कारः ।

औत्सुक्यहेतुमिति । रम्भे कदलीस्तम्भाविव उरू यस्याः सा तत्संबुद्धौ रम्भोरु,

---

( मालविका बैठ जाती है )

राजा—सखे, हम दोनों इधर लताकुञ्जमें जरा छिपजायँ ।

विदूषक—नजदीकमें इरावतीके समान ( किसीको आती हुई ) देखरहा हूँ ।

राजा—हाथी कमलिनीको देखकर मगरसे नहीं डरता है । ( ऐसा कहकर देखने लगता है )

मालविका—हृदय, तुम्हारा मनोरथ बेकार ही बहुत बढ़ गया है, तुम इसे छोड़दे । मुझे व्यर्थ क्यों सताता है ?

( विदूषक राजाकी ओर देखता है )

राजा—प्रिये, प्रेमकी महिमा तो देखो ।

हे रम्भोरु, तुम उत्कण्ठाका कारण प्रकाशित नहीं करती हो, अनुमान कभी

तथापि रम्भोरु करोमि लक्ष्यमात्मानमेषां परिदेवितानाम् ॥ १० ॥

विदूषकः—संपदं भवदो णिस्संसअं भविस्सदि । एसा अपिदमअण-संदेसा विवित्ते णं बउलावलिआ उवट्ठिदा । [ सांप्रतं भवतो निःसंशयं भविष्यति । एषार्पितमदनसंदेशा विविक्ते ननु बकुलावलिकोपस्थिता । ]

राजा—अपि स्मरेदसावस्मदभ्यर्थनाम् ।

विदूषकः—किं दाणिं एसा दासीए दुहिता तुह गुरुअं संदेसं विसुमरेदि । अहं दाव ण विसुमरेमि । [ किमिदानीमेषा दास्या दुहिता तव गुरुकं संदेशं विस्मरति । अहं तावन्न विस्मरामि । ]

---

त्वम् औत्सुक्यहेतुम् उत्कण्ठाकारणभूतं वस्तु न विवृणोषि न प्रकाशयसि तथा तर्कोऽनुमानमपि तत्त्वावबोधैकफलः अनन्यथाभावेन तत्त्वग्राही न, व्यभिचारित्वेनार्थान्तरस्यापि ग्राहकत्वादुत्कण्ठाकारणं बोधयितुं नालमित्यर्थः, तथापि त्वयाऽनुच्यमानत्वेनाप्रकाशत्वेऽनुमयापि तत्त्वतोऽग्राह्यत्वे चापि एषां सम्प्रति त्वया विधीयमानानां परिदेवितानां विलपितानां लक्ष्यमात्मानं करोमि त्वदीयपरिदेवितानां लक्ष्यत्वेनात्मानं निर्धारयामि । तदिदं स्नेहस्य महत्त्वमिति पूर्वोक्तेन वाक्यार्थावसितिः । हेतुं विनापि लक्ष्यीकरणरूपकार्योत्पत्तेर्विभावनाऽलङ्कारः । 'विलापः परिदेवनम्' इत्यमरः । उपजातिर्वृत्तम्, 'स्यादिन्द्रवज्रा यदि तौ जगौ गः,' 'उपेन्द्रवज्रा जतजास्ततो गौ,' 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' ॥ इति लक्षणम् ॥१०॥

निःसंशयम् संशयानामभावो निःसंशयम् । असन्दिग्धप्रतिपत्तौ कारणमाह—एषेति । अर्पितमदनसन्देशा कामवाचिकं सन्दिष्टा । अतोऽनया रहस्यसख्या सर्वं समयानुकूलं सम्पाद्य तव संशयोऽपनेष्यत इत्यर्थः ।

अपि स्मरेत् किं स्मरिष्यति ? अभ्यर्थनां मालविकाप्रापणरूपप्रार्थनाम् । 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमरः ।

दास्यादुहिता दास्याः पुत्री, निन्दार्थे । अहमिति । अहं ब्राह्मणस्तव सखा च

---

ठीक ठीक पता बता नहीं सकता है, तथापि मैं तुम्हारे इन विलापोंका लक्ष्य अपनेको ही मानता हूँ ॥ १० ॥

विदूषक—अब आपका सन्देह दूर होगा । इस बकुलावलिकाको कामसन्देश दिया था, वह इसे निर्जनमें मिलरही है ।

राजा—क्या वह मेरा सन्देश याद करसकेगी ?

विदूषक—वह दासीपुत्री क्यों न याद करेगी, जब मैं न भूल सका ।

( प्रविश्य चरणालंकारहस्ता बकुलावलिका )

बकुलावलिका--अवि सुहं सहीए। [ अपि सुखं सख्याः । ]

मालविका--अम्हो, बउलावलिआ उवट्ठिदा। सहि, साअदं दे। उवविस। [ अहो, बकुलावलिकोपस्थिता । सखि, स्वागतं ते । उपविश । ]

बकुलावलिका--( उपविश्य। ) हला, तुमं दाणिं जोग्गदाए णिउत्ता। ता एक्कं दे चलणं उवणेहि, जाव सालत्तअं सणूउरं अ करेमि। [ सखि, त्वमिदानीं योग्यतया नियुक्ता । तस्मादेकं ते चरणमुपनय यावत्सालक्तकं सनूपुरं च करोमि । ]

मालविका--( आत्मगतम्। ) हिअअ, अलं सुहिदाए, उवट्ठिदो अअं विहवो। कहं दाणीं अत्ताणं मोचेअं। अहवा एदं एव्व मे मिच्चुमण्डणं भविस्सदि। [ हृदय, अलं सुखितया, उपस्थितोऽयं विभवः । कथं वेदानीमात्मानं मोचयेयम् । अथवा एतदेव मे मृत्युमण्डनं भविष्यति । ]

---

सन् यं सन्देशं न विस्मरामि, तमेषा दासी विस्मर्त्तुं प्रभवेदित्यस्या महदौद्धत्यमतस्तथा मा शङ्किष्ठा इत्यर्थः ।

योग्यतया उपयुक्तपात्रत्वेन, नियुक्ता अत्राशोकतरुदोहदपूरणे व्यापारितेत्यर्थः ।

अलं सुखितया सुखवत्तानुभवेनालम् । अयं राजावलोकनावसररूपः । विभवः समृद्धिः । आत्मानं मुञ्चेयम् शरीरं त्यजेयम् । मृत्युमण्डनं मरणकालिकमलङ्करणम् । सत्यो हि पत्युपस्थितौ म्रियमाणाः सौभाग्यसूचकालङ्कारादिना सज्जीक्रियन्ते, तथैवाहमपीदमन्तिममलङ्करणं धारयामि, परतोऽस्मादेतदुत्तेजनया । मम मृत्योरवश्यंभावित्वादिति भावः ।

---

( चरणालङ्कार लिये बकुलावलिकाका प्रवेश )

बकुलावलिका—सखी, मजेमें तो रही ?

मालविका—अहा ! बकुलावलिका आ गई । स्वागत है, बैठो !

बकुलावलिका—( बैठकर ) तुमको योग्य समझकर भेजा है, पैर लाओ, इसे रंगकर नूपुर पहना दूं ।

मालविका—( स्वगत ) हृदय, तुमको सुखसे क्या मतलब ?, यही तो विभव मिला । मैं अपनेको कैसे छुड़ाऊं ? अथवा यही हमारा मृत्युमण्डन होगा ।

बकुलावलिका—किं विआरेसि। उस्सुआ क्खु इमस्स तवणीआसोअस्स कुसुमोग्गमे देवी। [ किं विचारयसि। उत्सुका खल्वस्य तपनीयाशोकस्य कुसुमोद्गमे देवी। ]

राजा—कथमशोकदोहदनिमित्तोऽयमारम्भः।

विदूषकः—किंणु क्खु जाणासि तुमं। मह कालणादो देवी मं अन्तेउरणेवच्छेण योजइस्सदि त्ति। [ किंनु खलु जानासि त्वम्। मम कारणाद्देवी मान्मंतःपुरनेपथ्येन योजयिष्यतीति। ]

मालविका—हला, मरिसेहि दाव णं। ( इति पादमुपहरति। ) [ सखि, मर्षय तावदेनम्। ]

बकुलावलिका—अइ, सरीरअं सि मे। ( इति नाट्येन चरणसंस्कारमारभते। ) [ अयि, शरीरमसि मे। ]

राजा—

चरणान्तनिवेशितां प्रियायाः सरसां पश्य वयस्य रागलेखाम्।

---

कुसुमोद्गमे कुसुमकोरकोद्भेदे। अतस्त्वरणीयमत्र कर्मणीति भावः।

आरम्भः चरणेऽलक्तकनूपुरादिकम्।

अन्तःपुरनेपथ्येन अन्तःपुररमणीजनोचितेन नेपथ्येन वेशेन।

मर्षय तावदिदम्। ज्येष्ठायास्तव चरणसंस्करणे नियोजनरूपम्।

शरीरमसीति। तथा च स्वाङ्गेषु यथा सेव्यसेवकभावकृतोऽपराधविवेको न भवति तथैवात्यात्मीयेषु जनेष्वपीति वृथा तवापराधक्षमायाचनव्यापारः। तथा च स्मर्यते—'उपचारः कर्त्तव्यो यावदनुत्पन्नसौहृदाः पुरुषाः। उत्पन्नसौहृदानामुपचारः कैतवं भवति'। इति॥

चरणान्तेति। वयस्य सखे! चरणान्ते पादप्रान्ते निवेशितां निहितां लिखिता-

---

बकुलावलिका—क्या सोच रही हो? देवी इस अशोकको पुष्पित देखनेके लिये उत्सुक हैं।

राजा—तो क्या यह अशोकदोहदकी तैयारी है?

विदूषक—आप क्या ऐसा समझ रहे थे कि मेरे लिये ही इसे राजाङ्गनाके रूप में सजा रही है।

मालविका—क्षमा करना ( ऐसा कहकर पैर बढ़ा देती है। )

बकुलावलिका—तुमतो हमारा देह ही हो ( ऐसा कहकर चरण रंगती है )

राजा—सखे, देखो—प्रियाके चरणमें अभी अभी लगी यह रागरेखा ऐसी मालूम

प्रथमामिव पल्लवप्रसूतिं हरदग्धस्य मनोभवद्रुमस्य ॥ ११ ॥

विदूषकः—चलणाणुरूवो तत्तहोदीए अहिआरो उवक्खित्तो । [ चरणानुरूपस्तत्रभवत्या अधिकार उपक्षिप्तः । ]

राजा—सम्यगाह भवान् ।

नवकिसलयरागेणाग्रपादेन बाला स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन ।
अकुसुमितमशोकं दोहदापेक्षया वा प्रणमितशिरसं वा कान्तमार्द्रापराधम् १२

---

मित्यर्थः । सरसाम् अचिरनिवेशितत्वेनार्द्रां रसव्यञ्जनपटुञ्च प्रियाया मालविकाया रागलेखाम् अलक्तकरचितां रचनां हरदग्धस्य कपालिना कोपानले भस्मतां गमितस्य मनोभवः कामदेव एव द्रुमो वृक्षस्तस्य प्रथमां सर्वाद्यां पल्लवप्रसूतिम् इव पश्य विलोकय । रूपकसङ्कीर्णोत्प्रेक्षाऽलङ्कारः । मालभारिणीवृत्तम् । तल्लक्षणं यथा—'विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम्' इति ॥ ११ ॥

चरणानुरूपः पादयोरुपयुक्तः । सुकुमारारक्तचरणाघातेन मनोहरारक्तकुसुमोत्पादनार्थं नियोग उचित इति भावः ।

नवकिसलयेति । बाला कुमारी मालविका नवस्य प्रत्यग्रप्रस्फुटितस्य किसलयस्य पल्लवस्य रागो वर्ण इव रागोऽरुणिमा यस्य तादृशेन स्फुरिता प्रदीप्ता नखानां नखराणां रुक् कान्तिर्यत्र तादृशेन अनेन पुरोदृश्यमानेन आर्द्रपादेन अलक्तकरससिक्तचरणेन दोहदापेक्षया अकुसुमितम् अपुष्पितम् अशोकं तदाख्यया प्रसिद्धं तरुम् आर्द्रापराधं सद्यो विहितागस्कम् अत एव प्रणमितशिरसं प्रणयिनीपादप्रान्ते प्रणयापराधमार्जनार्थं नतमस्तकं कान्तं दयितं वा ( 'वा'शब्दोऽत्र समुच्चयार्थः ) द्वौ उभौ एतौ एव हन्तुमर्हति ताडयितुं योग्या भवति । अनया बालया नवकिसलयरागपादाग्रेणाशोकस्य कृतापराधस्य कान्तस्य च प्रहारः सम्पादयितुं योग्य इति भावः । 'नवकिसलयरागेण' इत्यत्र लुप्तोपमा, शिरोऽवनमनं प्रत्यार्द्रापराधत्वस्य हेतुत्वात् काव्यलिङ्गम्, प्रस्तुतस्याशोकस्य अप्रस्तुतस्य कान्तस्य चैकत्र हननक्रिया-

---

पड़ रही है, मानो महादेवद्वारा जलाए गये कन्दर्परूप वृक्षका पुनः प्रथम पल्लव प्रकट हुआ है ॥ ११ ॥

विदूषक—देवीने उपयुक्त चरणको अधिकार प्रदान किया है ।

राजा—ठीक कहते हो ।

इसके चरण नवपल्लव रक्त हैं, उनमें नखोंकी शोभा प्रस्फुटित हो रही है, अल-

विदूषकः—पहरिस्सदि तत्तहोदी तुमं अवरद्धम् । [ प्रहरिष्यति तत्रभवती त्वामपराद्धम् । ]

राजा—मूर्ध्ना प्रतिगृहीतं वचः सिद्धिदर्शिनो ब्राह्मणस्य ।

( ततः प्रविशति युक्तमदा इरावती चेटी च । )

इरावती—हञ्जे णिउणिए, सुणामि बहुसो मदो किल इत्थिआजणस्स विसेसमण्डणं त्ति । अवि सच्चो एसो लोअवाओ । [ चेटि निपुणिके, शृणोमि बहुशो मदः किल स्त्रीजनस्य विशेषमण्डनमिति । अपि सत्य एष लोकवादः । ]

निपुणिका—पढमं लोअवाओ एव अज्ज सच्चो संवुत्तो । [ प्रथमं लोकवाद एवाद्य सत्यः संवृत्तः । ]

---

यामन्वयात् दीपकालङ्कारश्च । तदेषामेकाश्रयानुप्रवेशात्मा सङ्करः । 'पात् पादश्चरणोऽस्त्रियाम्' इति जटाधरः । कुसुमान्यस्य सञ्जातानीति कुसुमितः ततो नञ्समासः । मालिनीवृत्तम् 'ननमयययुतेयं मालिनी भोगिलोकैः' इति तल्लक्षणम् ॥

तत्रभवती मालविका, अपराद्धं प्रणयापराधिनम्, एतेन तस्या राज्ञश्च पूर्वरागस्य साफल्यमाशंसितम् ॥

सिद्धिदर्शिनः सिद्धिं मालविकाप्रीतिपरिणतिं परिणयं पश्यति तच्छीलस्य । ब्राह्मणस्येत्युक्त्याऽऽशीःप्रदानयोग्यतोक्ता ।

युक्तमदा प्रयुक्तमद्या पीतासवेत्यर्थः । राजपत्नीनां पत्या रत्यतिशयमनुभवितुं तत्सेवनस्यानिषिद्धत्वमाह—'कामतोऽपि हि राजन्यो वैश्यो वापि कथञ्चन । मद्यं पीत्वा सुरासिञ्जं न किञ्चिद्दोषमर्हति ॥' इति बृहन्मनुः ।

मदः सुरापानजनितश्चित्तविकारः । विशेषमण्डनम् असाधारणम् अलङ्करणम् । भूषणान्तरासाध्यसौन्दर्यसमुद्दीपनादिति भावः ।

सत्यः संवृत्त इति । त्वदीयेष्वङ्गेषु सौन्दर्यातिशयाविष्करणादित्यर्थः ।

---

क्तकका रंग उसे और निखार रहा है । इन चरणोंसे यह बाला—दोहदकी प्रतीक्षामें बैठे इस अशोकको और प्रणयापराधी प्रियतमको प्रहृत कर सकती है ॥ १२॥

विदूषक—तुम अपराध करोगे, प्रहार सहोगे ।

राजा—सिद्ध ब्राह्मणका आदेश शिर आंखोंपर ।

( अनन्तर मदमत्त इरावती और चेटीका प्रवेश )

इरावती—अरी निपुणिके, सुनती हूँ मद स्त्रियोंका अलङ्कार है । क्या यह ठीक है ।

निपुणिका—पहले लोकप्रवाद था, अब तो सत्य हो गया ।

इरावती—अलं मयि सिणेहेण । कहेहि कुदो दाणिं ओगमिदव्वं दोलाघरं पढमं गदो भट्टा ण वेत्ति । [ अलं मयि स्नेहेन । कथय कुत इदानी-मवगन्तव्यं दोलागृहं प्रथमं गतो भर्ता न वेति । ]

निपुणिका—भट्टिणीए अखण्डिदादो पणआदो । [ भट्टिन्या अखण्डितात् प्रणयात् । ]

इरावती—अलं सेवाए । मज्झत्थदं परिगहिअ भणाहि । [ अलं सेवया । मध्यस्थतां परिगृह्य भण । ]

निपुणिका—वसन्तोस्सवुवाअणलोलुवेण अज्जगोदमेण कहिअं तुवरदु भट्टिणी त्ति । [ वसन्तोत्सवोपायनलोलुपेनार्यगौतमेन कथितं त्वरतां भट्टिनीति । ]

इरावती—( अवस्थासदृशं परिक्रम्य । ) हञ्जे, मदेण किलाअमाणं अत्ताणं अज्जउत्तस्स दंसणे हिअअं तुवरेदि । चलणा उण ण मह पसरन्ति । [ चेटि, मदेन क्लाम्यमानमात्मानमार्यपुत्रस्य दर्शने हृदयं त्वरयति । चरणौ पुनर्न मम प्रसरतः । ]

---

स्नेहेन स्नेहप्रदर्शकचाटुवचनोपन्यासेनेत्यर्थः ।

भट्टिन्याः अकृताभिषेकाया राजपत्न्याः, 'देवी कृताभिषेकायामितरासु च भट्टिनी' इत्यमरः । अखण्डितात् प्रणयात् अव्याहतादनुरागात् , तवाव्याहतः प्रणय एव तस्य दोलागृहप्राप्तिं सूचयितुमलमिति वृथाऽन्यं प्रति तत्प्रश्न इति भावः ।

सेवया चाटुकारेण, मध्यस्थताम् अपक्षपातम् ।

वसन्तोपायनलोलुपेन वसन्तोत्सवे यदुपायनं तण्डुलमोदकादिकम् , तस्य लोलुपेन कामुकेन । आर्यगोतमेन तदाख्येन विदूषकेण ।

---

इरावती—मुझपर स्नेह मत दिखा । यह तो बता—महाराज दोलागृहमें पहले आगये हैं या नहीं ? यह किससे ज्ञात होगा ?

निपुणिका—आपको अपने अखण्डित प्रणय से ।

इरावती—ठकुरसुहाती मत कह, तटस्थ होकर बोल ।

निपुणिका—वसन्तोत्सवोपहारलोभी गौतमने बताया है । आप शीघ्रता करें ।

इरावती—( अवस्थानुकूल शीघ्रता करके ) नशा जोर मार रहा है, हृदय आर्य-पुत्रके दर्शनके लिये उत्सुक है, किन्तु पैर उठते ही नहीं ।

निपुणिका—णं संपत्त म्ह दोलाघरं। [ ननु संप्राप्ते स्वो दोलागृहम्। ]

इरावती—णिउणिए, अज्जउत्तो एत्थ ण दीसदि। [ निपुणिके, आर्यपुत्रोऽत्र न दृश्यते। ]

निपुणिका—णं भट्टिणीए आलोअदु। परिहासणिमित्तं कहिं वि अदिट्ठेण भत्तुणा होदव्वं। अम्हे वि पिअङ्गुलदापरिक्खित्तं असोअसिलापट्टअं पविसामो। [ ननु भट्टिन्यवलोकयतु। परिहासनिमित्तं कुत्राप्यदृष्टेन भर्त्रा भवितव्यम्। आवामपि प्रियङ्गुलतापरिक्षिप्तमशोकशिलापट्टकं प्रविशावः। ]

इरावती—तह। [ तथा। ]

निपुणिका—( विलोक्य। ) आलोअदु भट्टिणी चूदङ्कुरं विचिण्णन्तीणं पिपीलिआहिं दंसिदं। [ अवलोकयतु भट्टिनी चूताङ्कुरं विचिन्वत्योः पिपीलिकाभिर्दष्टम्। ]

इरावती—कहं विअ एदं। [ कथमिवेदम्। ]

निपुणिका—एसा असोअपादवच्छाआए मालविआए बउलावलिआ

---

प्रियङ्गुलतापरिक्षिप्तम् श्यामलतापरिवेष्टितम्। अशोकशिलापट्टकम् अशोकतरुतलस्थप्रस्तरखण्डम्॥

चूताङ्कुरमिति। यथा चूतमुकुलं विचिन्वत्योरावयोः पिपीलिकाभिर्दष्टं तथाऽनुमिनोमि कयाचिदत्र राजान्वेषणकर्मणि प्रत्यूहः क्रियेतेति। मालविकाकृतसापत्न्यभावसंभावनयेत्थमुक्तिः।

कथमिव! त्वया कथमित्थमुच्यते, कस्तवेत्थमभ्यूहनेऽनुकूलस्तर्क इति प्रश्नः।

---

निपुणिका—ओ, हमलोग दोलाघर तो आगये।

इरावती—निपुणिके, आर्यपुत्रको तो यहाँ देख नहीं रही हूं।

निपुणिका—महारानीजी, हो सकता है परिहास करनेके लिये महाराज कहीं छिपे बैठे हों। हमलोग भी श्यामालतावेष्टित अशोकके नीचे देखें।

इरावती—वैसा ही किया जाय।

निपुणिका—देखिये महारानी, हमलोग आम्रमुकुलकी खोज में थीं, और इधर चीटें काटने लगे।

इरावती—कैसे?

निपुणिका—अशोकतरुकी छायामें बकुलावलिका मालविकाके चरणोंको अलङ्कृत कररही है।

चलणालंकारं णिव्वट्टेदि । [ एषाशोकपादपच्छायायां मालविकाया वकुलावलिका चरणालंकारं निर्वर्तयति । ]

इरावती—( शङ्कां रूपयित्वा । ) अभूमी इअं मालविआए, कहं एत्थ तक्केसि । [ अभूमिरियं मालविकायाः, कथमत्र तर्कयसि । ]

निपुणिका—तक्केमि दोलापरिब्भंसिदाए सरुअचलणाए देवीए असोअदोहलाहिआरे मालविआ णिवुत्तेत्ति । अण्णहा कहं देवी सअं धारिअं णूउरजुउलं परिअणस्स अब्भणुजाणिस्सदि । [ तर्कयामि दोलापरिभ्रष्टया सरुजचरणया देव्याऽशोकदोहदाधिकारे मालविका नियुक्तेति । अन्यथा कथं देवी स्वयंधारितं नूपुरयुगुलं परिजनस्याभ्यनुज्ञास्यति । ]

इरावती—महदी क्खु से संभावणा । [ महती खल्वस्याः संभावना । ]

निपुणिका—किं ण अण्णेसीअदि भट्टा । [ किं नान्विष्यते भर्ता । ]

इरावती—हला, ण मे चलणा अण्णदो पवट्टन्ति । मदो मं विआरेदि । आसङ्किदस्स दाव अन्तं गमिस्सं । ( मालविकां निर्वर्ण्य । निरूप्यात्मगतम् । )

---

निर्वर्त्तयति निष्पादयति, एतेनानयैवेरावत्या हानिरभिहिता ।

अभूमिः अगन्तव्यस्थानम्, अस्य प्रमदवनोद्देशस्य राजपरिवारमात्रगन्तव्यत्वादिति भावः ।

अशोकदोहदाधिकारे अशोकतरौ चरणाघातरूपकर्त्तव्ये । परिजनस्य परिचारिकाभावेन रक्षितायाः । अभ्यनुज्ञास्यति धारणायानुमंस्यते । स्वव्यवहार्यभूषणस्य परिचारिकाया उपयोगाय प्रदातुमनुचितत्वादिति भावः ।

सम्भावना संशयः । मालविकासापत्नाशङ्का सत्येत्यर्थः ।

---

इरावती—( शङ्का प्रकटकर ) यह तो मालविकाके आनेकी जगह नहीं है । यहाँ वह क्यों आई ? क्या समझती हो ?

निपुणिका—मैं समझती हूं, झूलापरसे गिरनेके कारण देवीके पैरमें चोट है, अतः उन्होंने अशोकदोहदके लिये मालविकासे कहा है । अन्यथा वह देवीके पैरके नूपुर कैसे धारण करती ?

इरावती—हमको भी सन्देह होता है ।

निपुणिका—महाराजको क्यों न ढूंढा जाय ?

इरावती—मेरे पैर आगे नहीं बढ़ रहे हैं । नशा मुझे बेकाबू कर रहा है ।

ठाणे क्खु कादरं मे हिअअं। [ सखि, न मे चरणावन्यतः प्रवर्तते। मदो मां विकारयति। आशङ्कितस्य तावदन्तं गमिष्यामि। स्थाने खलु कातरं मे हृदयम्। ]

बकुलावलिका—( मालविकायै चरणं दर्शयन्ती। ) अवि रोअदि दे राअरेहाविण्णासो। [ अपि रोचते ते रागरेखाविन्यासः। ]

मालविका—हला अत्तणो चलणं त्ति लज्जेमि णं पसंसिदुं। तेण पसाहणकलाए अहिणीदासि। [ सखि, आत्मनश्चरण इति लज्जे एनं प्रशंसितुम्। तेन प्रसाधनकलायामभिनीतासि। ]

बकुलावलिका—एत्थ क्खु भत्तुणो सीसम्हि। [ अत्र खलु भर्तुः शिष्यास्मि। ]

विदूषकः—तुवरेहि दाव णं गुरुदक्खिणाए। [ त्वरय तावदेनां गुरुदक्षिणायै। ]

मालविका—दिट्ठिआ ण गव्विदासि। [ दिष्ट्या न गर्वितासि। ]

---

विकारयति विह्वलीकरोति। अन्तं गमिष्यामि इदमित्थमनित्थं वेति निश्चेष्यामीति भावः। कातरं शङ्कासमाकुलम् ( राजप्रलोभनायैव मालविकाया रहः-सेवनपूर्वकवेशविन्यासस्य राज्ञोऽप्येतादृशप्रलोभनेनाक्षिप्तहृदयतायाश्च सम्भवात् )।

रागलेखाविन्यासः अलक्तकरेखाकरणम्। प्रसाधनकलायाम् प्रसाधनरूपकर्मणि। अभिविनीतासि शिक्षितासि।

गर्वितासि अलङ्करणप्रावीण्यरूपकारणसद्भावेऽपि तवागर्वत्वं भाग्यवत्त्वस्यैव फलमिति भावः।

---

पहले सन्देह दूर कर लूंगी। ( मालविकाकी ओर देखकर स्वगत ) मेरा दिल कातर हो रहा है।

बकुलावलिका—( मालविकाको उसका पैर दिखाकर ) रागलेखा अच्छी मालूम पड़ रही है ?

मालविका—अपने चरणोंकी तारीफ करनेमें लज्जा मालूम पड़रही है। यह प्रसाधनकला तुम्हें किसने सिखाई ?

बकुलावलिका—इसमें महाराजकी शिष्या हूँ।

विदूषक—गुरुदक्षिणा चुकानेमें जल्दी करो।

मालविका—भाग्यवश तुम इतराती नहीं हो।

बकुलावलिका—उवदेसाणुरूवा चलणा लम्भिअ अज्ज दाव गव्विदा भविस्सं । ( रागं विलोक्यात्मगतम् । ) हन्त, सिद्धं मे दुत्थम् । ( प्रकाशम् । ) सहि, एक्कस्स दे चलणस्स अवसिदो राअणिक्खेवो । केवलं मुहमारुदो लम्भइदव्वो । अहवा पवादं एदं ठाणं । [ उपदेशानुरूपौ चरणौ लब्ध्वाद्य तावद्गर्विता भविष्यामि । हन्त, सिद्धं मे दूत्यम् । सखि, एकस्य ते चरणस्यावसितो रागनिक्षेपः । केवलं मुखमारुतो लम्भयितव्यः । अथवा प्रवातमेतत्स्थानम् । ]

राजा—सखे, पश्य

आर्द्रालक्तकमस्याश्चरणं मुखमारुतेन शोषयितुम् ।
प्रतिपन्नः प्रथमतरः संप्रति सेवावकाशो मे ॥ १३ ॥

---

उपदेशानुरूपे प्रसाधनकार्योपदेशकेन गुरुणा यादृशो रञ्जनयोग उपदिष्टस्तादृशे तादृशरञ्जनोपेते तव चरणे पादौ लब्ध्वा इदानीम् अद्य गर्विता सदर्पा भविष्यामि । पात्रविशेषावाप्तौ सत्यामेव शिल्पनैपुण्यस्य साफल्याद् गर्वोदयावसर इति । तदुक्तम्—'पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः । जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥' इति । मुखमारुतः फूत्कारः, लम्भयितव्यः प्रापणीयः । आर्द्रताशोषणार्थमिति भावः ।

'आर्द्रालक्तकम्' इति । आर्द्रं प्रत्यग्रनिवेशितत्वेनाशुष्कम् अलक्तकं लाक्षारसो यत्र तादृशम्, अस्या मालविकायाश्चरणं मुखमारुतेन फूत्कारद्वारा बीजयितुं शोषयितुं मे मम सेवावकाशः परिचर्यावसरः सम्प्रति प्रथमतरः प्रतिपन्नः प्राप्तः । बकुलावलिकया सम्पाद्यमानो मालविकायाश्चरणालक्तकस्य शोषणव्यापारः प्रथमं मयैव कर्त्तव्य इति राज्ञ आवेगोक्तिः । अत्र सेवावसराभिधानभङ्ग्या मालविकायां भार्याभावाभिधानात् पर्यायोक्तालङ्कारः, आर्याप्रभेदो वृत्तम् ॥ १३ ॥

---

बकुलावलिका—शिक्षा सफल करने योग्य चरणोंके मिलनेसे अब गर्व कर सकूंगी । ( राग देखकर स्वगत ) हमारा दौत्य सिद्ध हुआ । ( प्रकाश ) एक चरणका रंगना समाप्त हुआ, केवल फूंक लगानी है । अथवा—हवा तो यहाँ चल ही रही है ।

राजा—सखे, देखो - आर्द्र अलक्तकसे भींगे हुए इसके चरणको फूंकसे सुखानेका यह पहला मौका मेरे लिये उपस्थित है ॥ १३ ॥

**विदूषकः**—कुदो दे अणुसओ। एदं भवदा चिरक्कमेण अणुभविदव्वं। [ कुतस्तेऽनुशयः। एतावद्भवता चिरक्रमेणानुभवितव्यम्। ]

**बकुलावलिका**—सहि, अरुणसतपत्तं विअ सोहदि दे चलणं। सव्वहा भत्तुणो अङ्कपरिवट्टिणी होहि। [ सखि, अरुणशतपत्रमिव शोभते ते चरणम्। सर्वथा भर्तुरङ्कपरिवर्तिनी भव। ]

( इरावती निपुणिकामवेक्षते। )

**राजा**—ममेयमाशीः।

**मालविका**—हला, मा अविणीअं मन्तेहि। [ सखि, मा अविनीतं मन्त्रयस्व। ]

**बकुलावलिका**—मन्तइदव्वं एव्व मन्तिदं मए। [ मन्त्रयितव्यमेव मन्त्रितं मया। ]

---

अनुशयः खेदः। क्रमेण शनैः। एतत् मालविकाचरणशुश्रूषणम्।

शतपत्रम् कमलम्। 'शतपत्रं कुशेशयम्। सहस्रपत्रं कमलम्' इत्यमरः। अङ्कपरिवर्त्तिनी क्रोडगता, पत्नीत्यर्थः।

ममेयमाशीः मदभीष्टार्थाशंसनात्, न त्वस्या इयमाशीः, अस्याः कृते राजसहस्रकृतसेवाया अपि सुलभत्वात्तत्रादराभावादित्यर्थः।

अविनीतं विनयरहितमुद्धतमित्यर्थः। राजभार्याभावस्य मादृशजनदुरापत्वात्तथाशंसनमौद्धत्यमिति तथा मा भाषिष्ठा इत्यर्थः।

मन्त्रयितव्यं वक्तुमुचितम्, लक्षणानुसारेणोक्तत्वात्, तथा च कमलाकृतिचरणायाः पद्मिन्यास्तव राजभार्याभावः सुतरामुपपन्न इति मयाऽविनीतं नोक्तमित्यर्थः। तदुक्तं सामुद्रिके—'पद्मेन भूपतेः पत्नी जनयेद् भूपतिं सुतम्'। इति।

---

विदूषक—आपको इसका खेद क्यों हो रहा है? यह तो आपको धीरे धीरे बहुत दिनों तक भोगना होगा।

बकुलावलिका—रक्तकमलके समान तुम्हारे चरण शोभ रहे हैं। महाराजकी प्रिया होओ।

( इरावती निपुणिकाकी ओर देखती है )

राजा—यह तो मेरा आशीर्वाद हुआ।

मालविका सखि, नहीं कहने योग्य बात मत कह।

बकुलावलिका—मैंने कहने योग्य ही बात कही है।

मालविका—पिआ क्खु अहं तव । [ प्रिया खल्वहं तव । ]

बकुलावलिका—ण केवलं मह । [ न केवलं मम । ]

मालविका—कस्स वा अण्णस्स । [ कस्य वान्यस्य । ]

बकुलावलिका—गुणेसु अहिणिवेसिणो भत्तुणो वि । [ गुणेष्वभिनिवेशिनो भर्तुरपि । ]

मालविका—अलीअं मन्तेसि । एदं एव्व मयि णत्थि । [ अलीकं मन्त्रयसे । एतदेव मयि नास्ति । ]

बकुलावलिका—सच्चं तुयि णत्थि । भत्तुणो किसेसु सुन्दरपाण्डुरेसु दीसइ अङ्गेसु । [ सत्यं त्वयि नास्ति । भर्तुः कृशेषु सुन्दरपाण्डुरेषु दृश्यतेऽङ्गेषु । ]

निपुणिका—पढमं गणिदं विअ हदासाए उत्तरं [ प्रथमं गणितमिव हताशाया उत्तरम् । ]

---

प्रिया खल्विति । एतेन मत्प्रसादनार्थमुचितानुचितविवेकस्तव न भवतीति भावः ।

मम न केवलं ममैव प्रिया, अपितु सर्वस्यापि गुणज्ञस्येति भावः ।

गुणेषु शिक्षासौन्दर्यादिषु, अभिनिवेशिनः आग्रहिणः ।

एतदेव गुणवत्त्वमेव ।

सत्यं त्वयि नास्ति । अत्र विपरीतलक्षणया त्वयि सन्ति गुणा इत्यर्थः । भर्तुः राज्ञः, कृशेषु दुर्बलेषु, सुन्दरपाण्डुरेषु सुन्दरेषु पाण्डुवर्णेषु च । त्वयि यदि गुणा नाभविष्यन् किमिति त्वद्विषयकानुरागजनितखेदैरात्मानं पीडयित्वा राजा कृशपाण्डुगात्रोऽजास्यतेति भावः ।

प्रथमं गणितम् पूर्वं चिन्तितम् । त्वरयाऽवार्यस्य चोत्तरस्य प्रदानादिति भावः ।

---

मालविका—मैं तुम्हारी प्रिय हूं ।

बकुलावलिका—केवल मेरी ही नहीं ।

मालविका—तो फिर और किसकी प्रिया हूं ?

बकुलावलिका—गुणग्राही महाराजकी भी प्रिया हो

मालविका—झूठ कहती है, यही गुण मुझमें नहीं है ।

बकुलावलिका—सचमुच तुममें नहीं है ? वह तो महाराजके दुर्बल तथा विरहसे पाण्डुवर्ण अङ्गोंमें है ।

निपुणिका—पहले गणितके समान हताश बकुलावलिकाका यह उत्तर है ।

बकुलावलिका—अणुराओ अणुराएण परिक्खिदव्वो त्ति सुअणवअणं पमाणीकरेहि। [ अनुरागोऽनुरागेण परीक्षितव्य इति सुजनवचनं प्रमाणीकुरु। ]

मालविका—किं अत्तणो छन्देण मन्तेसि। [ किमात्मनश्छन्देन मन्त्रयसि। ]

बकुलावलिका—णहि णहि भत्तुणो क्खु एदाइं पणअमिदुलाइं अक्खराइं वत्तन्तरिदाइं। [ नहि नहि। भर्तुः खल्वेतानि प्रणयमृदुलान्यक्षराणि वक्त्रान्तरितानि। ]

मालविका—हला, देवीं चिन्तिअ ण मे हिअअं विस्ससदि। [ सखि, देवीं चिन्तयित्वा न मे हृदयं विश्वसिति। ]

बकुलावलिका—मुद्धे, भमरसंपादो भविस्सदि त्ति वसन्तावदारसव्वस्सं किं ण चूदप्पसवो ओदंसिदव्वो। [ मुग्धे, भ्रमरसंपातो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूतप्रसवोऽवतंसितव्यः। ]

---

हताशायाः पिशुनायाः, इयमिरावती दासीति बकुलावलिकां प्रति सेर्ष्योक्तिः।

अनुरागेणानुराग इति। स्वीयेन राजविषयकरतिभावेन राज्ञः स्वविषया रतिरनुमातव्या त्वयेति भावः।

आत्मनश्छन्देन स्वेच्छया। छन्दो नर्तयितुर्यथैव मनस इत्यत्रेव च्छन्द इच्छा।

प्रणयमृदुलानि प्रीतिकोमलानि। वक्त्रान्तरितानि मुखान्तरं विदूषकमुखं गतानि। राजाभिप्रायमेव विदूषकमुखादहमश्रौषमिति नास्ति राज्ञस्त्वद्विषयेऽनुरागे संशय इति भावः।

देवीम् धारणीम्। चिन्तयित्वा अन्तरायतया सम्भाव्य।

मुग्धे अप्रौढे, भ्रमरसम्पातः षट्पदोपनिपतनम्, वसन्तावतारसर्वस्वम् मधुसमयसमागमप्रधानम्। चूतप्रसवः आम्रमञ्जरी, नावतंसयितव्यः नालङ्कारतया

---

बकुलावलिका—'अपने अनुरागसे दूसरेके अनुराग को जानना चाहिये' इस विद्वानोंकी बातको प्रमाण मानो।

मालविका—तुम अपने मनसे गढकर कहा करती हो।

बकुलावलिका—नहीं नहीं, महाराजकी यह प्रणयकथा एक दूसरे आदमीके मुंहसे सुनी गई है।

मालविका—देवीकी याद करके मेरा हृदय विश्वास नहीं करता है।

बकुलावलिका—पगली कहाँ की, भौंरे झुकेंगे, क्या इसी भयसे लोग वसन्तावतारसर्वस्व आम्रमञ्जरीको धारण नहीं करते ?

मालविका—तुमं दाव दुज्जादे गच्छतस्स सहायिणी होहि। [ त्वं तावद्दुर्जाते गच्छतः सहायिनी भव। ]

बकुलावलिका—विमद्दसुरही बउलावलिआ क्खु अहं। [ विमर्दसुरभिर्बकुलावलिका खल्वहम्। ]

राजा—साधु बकुलावलिके, साधु।

भावज्ञानानन्तरं प्रस्तुतेन प्रत्याख्याने दत्तयुक्तोत्तरेण।
वाक्येनेयं स्थापिता स्वे निदेशे स्थाने प्राणाः कामिनां दूत्यधीनाः ॥१४॥

---

धारणीयः। वसन्तसमागमे तत्कालसम्भवेषु कुसुमेषु चूतमञ्जरी श्रेष्ठा, तामवतंसयितुरुपरि भ्रमरास्तत्सौरभलोभेन परापतन्ति तथापि सावतंस्यत एव, नान्तरीयककष्टस्येष्टावाप्तिवर्त्मन्यवश्यसोढव्यत्वात्। तथाचाहुः—'न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते, न वा गावः सन्तीति यवा नोप्यन्ते' इति। तथा च देव्या विरोधितासंभवेऽपि राजप्रणयस्त्वया माननीय एवेत्यर्थः। अतश्चात्र समादप्रस्तुतात् प्रस्तुतस्य समस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः।

दुर्जाते विपदुपनिपाते, तथा च रघुवंशे—'दुर्जातबन्धुरयमृक्षहरीश्वरो मे पौलस्त्य एष रणमूर्ध्नि पुरः प्रहर्त्ता' इति। 'दुर्जातं व्यसने क्लीबमसम्यग् जातवस्तुनि'। इति केशवः।

विमर्दसुरभिः। विपत्तौ धीरा, 'सुरभिः—धीर' इति कल्पद्रुमः। अन्यत्र विमर्दन घर्षणेन सुरभिर्विशेषसौरभशालिनी बकुलावलिका बकुलश्रेणी स्वभावसुरभिरपि यथा विमर्दनेऽधिकं सौरभमावहति—तथाऽहमपि स्वभावचतुरा विपद्दर्शने धैर्यावलम्बनेन विशेषविवेकप्रकाशिनीति ते श्रेय इति भावः।

भावज्ञानानन्तरमिति। भावस्य 'मालविकापि मय्यनुरागिणीति मालविकामनोवृत्तेः' ज्ञानानन्तरम् बोधात्, परतः प्रस्तुतेन आरब्धेन तथा प्रत्याख्याने 'हला मा अविनीतं मन्त्रय' इति मालविकाकृतनिषेधे 'मन्त्रयितव्यमेव मन्त्रितम्' दत्तं प्रयुक्तं युक्तं समुचितमुत्तरं येन तादृशेन वाक्येन वचनेन इयं मालविका स्वे स्वकीये निदेशे

---

मालविका—इस आपत्ति समयमें तुम्हारा ही सहारा है।

बकुलावलिका—मैं तो विपत्तिमें सहायक ( मसलने पर सुगन्धिप्रद ) बकुलावलिका ही हूँ।

राजा—साधु बकुलावलिके साधु।

अभिप्राय समझकर प्रस्ताव किया और प्रत्याख्यान करने पर उपयुक्त उत्तर

इरावती—हञ्जे, पेक्ख कारिदं एव्व बउलावलिआए एदस्सिं पदं मालविआए। [ सखि, पश्य कारितमेव बकुलावलिकयैतस्मिन्पदं मालविकायाः। ]

निपुणिका—भट्टिणि, अहिआरस्स उइदो उवदेसो। [ भट्टिनि, अधिकारस्योचित उपदेशः। ]

इरावती—ठाणे क्खु संकिदं मे हिअअं। गहीदत्था अणन्तरं चिन्तइस्सं। [ स्थाने खलु शङ्कितं मे हृदयम्। गृहीतार्थानन्तरं चिन्तयिष्यामि। ]

बकुलावलिका—एसो दुदीओ वि दे णिव्वुत्तपरिकम्मा चलणो। जाव णं सणूउरं करेमि। ( इति नाट्येन नूपुरयुगलमामुच्य। ) हला, उट्ठेहि।

---

आज्ञायां निजादेशपालन इत्यर्थः। स्थापिता, स्वमतानुवर्त्तिनी कृतेत्यर्थः। (एवञ्च) 'कामिनां प्राणा दूत्यधीनाः' इति ( यदुक्तं ) स्थाने युक्तम्। कामिनामिच्छायाः पूर्तौ जीवनं तदपूर्त्तौ च मरणमिति हेतोस्तेषां जीवनस्य दूत्यधीनत्वमित्याशयः। अत्र 'कामिनः प्राणा दूत्यधीनाः' इत्यप्रस्तुतात् सामान्यात् मत्प्राणा बकुलावलिकाऽधीना इति विशेषस्य प्रतीयमानतयाऽप्रस्तुतप्रशंसाऽलंकारः। किञ्चान्तिमवाक्यार्थं प्रति प्रथमवाक्यत्रयार्थस्य हेतुतया वाक्यार्थहेतुकं काव्यलिङ्गञ्चालङ्कारः। अनयोरङ्गाङ्गिभावेन सङ्करः। शालिनी वृत्तम्—'मात्तौ गौ चेच्छालिनी वेदलोकैः' इति च तल्लक्षणम् ॥ १४ ॥

प्रेक्षस्व पश्य, एतस्मिन् देवीनियोगपालने। पदं व्यवसितम्। अतश्चात्यन्तमियमस्मद्दुःखकारणमिति भावः।

अधिकारोचितः दौत्यकरणविषयकराजनियोगस्य योग्यः। तथा च राज्ञः प्रेरणयैव तथाऽऽचरन्ती बकुलावलिका नापराध्यतीति भावः।

स्थाने खलु शङ्कितम्, युक्तमाशङ्कितमित्यर्थः। राज्ञो मालविकायामासक्तिः

---

के द्वारा उसे अपने आदेश में लाई। ठीक कहा गया है कि कामिजनों के प्राण दूतियों के हाथ में रहते हैं ॥ १४ ॥

इरावती—देखतो सखी, बकुलावलिकाने मालविकाको ठीक कर लिया।

निपुणिका—जैसा आदेश मिला है वैसा पाठ पढ़ा रही है।

इरावती—मेरा सन्देह ठीक उतरा, पहले भलीभांति समझ लूं, तब पीछे प्रतिकार करूंगी।

बकुलावलिका—दूसरे चरणको भी रंग दिया। लाओ नूपुर भी पहनादूं (नुपूर पहनाकर) सखी, उठो, अशोकको विकसित करनेमें देवीका आदेश पालन करो।

असोअविआसइत्तअं देवीए णिओअं अणुचिट्ठ । [ एष द्वितीयोऽपि ते निवृत्तपरिकर्मा चरणः । यावदेनं सनूपुरं करोमि । हला, उत्तिष्ठ । अशोकविकासयितृकं देव्या नियोगमनुतिष्ठ । ]

( उभे उत्तिष्ठतः । )

इरावती--सुदो देवीए णिओओ । होदु दाणिं । [ श्रुतो देव्या नियोगः । भवत्विदानीम् । ]

बकुलावलिका--एसो उवारूढराओ उअभोअक्खमो पुरदो दे वट्टई । [ एष उपारूढराग उपभोगक्षमः पुरतस्ते वर्तते । ]

मालविका--( सहर्षम् । ) किं भट्टा । [ किं भर्ता । ]

---

संभाव्यमानाऽधुना सप्रमाणाऽजनीति शङ्काया युक्तता समर्थिता ।

गृहीतार्था अवधारितविषया, कियतीं मात्रामारूढा तयोः प्रीतिरिति तत्त्वतोऽवगतार्था । चिन्तयिष्यामि तयोर्विघटनोपायमिति शेषः ।

निवृत्तपरिकर्मा सम्पादितप्रक्षालनालक्तकक्षारणादिपरिष्कारः ।

आमुच्य परिधाप्य । अशोकविकासयितृकम् अशोककुसुमविकासजनकम् । देव्या नियोगम् धारिण्या आदेशम् । अनुतिष्ठ सम्पादय । आमोचनं परिधानम् । तथा चामरः 'आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्' ।

उपारूढरागः उपारूढः सञ्जातो रागः रक्तिमा यत्र तादृशः । उपभोगः शिरसि निवेशादिना धारणम्, तत्क्षमः तदुपयुक्तश्चेति वृक्षपक्षेऽर्थः ।

उपारूढरागः समुत्पन्नस्नेहः, सुरताद्युपयोगी चेति च राजपक्षे । द्व्यर्थवचनविन्यासाद् राजरूपप्रधानार्थसूचनाच्चेदमेकं पताकास्थानम्, तथा चोक्तं दर्पणे—

'द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।
प्रधानार्थान्तरापेक्षी पताकास्थानकं परम्' ॥ इति ।

सहर्षम् अभिलष्यमाणराजोपस्थितिप्रभवोऽत्र हर्षो बोध्यः । एतेन मालविकाया राजनिबद्धभावतोक्ता ।

---

[ दोनों उठती हैं ]

इरावती—देवीकी आज्ञा तो सुनली । देखें अब क्या होता है ?

बकुलावलिका—सुराग और तुम्हारे उपयोग योग्य यह तेरे आगे है ।

मालविका—( हर्षसे ) क्या, महाराज !

बकुलावलिका—( सस्मितम् । ) ण दाव भट्टा । एसो असोअसाहावलम्बी पल्लवगुच्छओ । ओदंसेहि णं । [ न तावद्भर्ता । एषोऽशोकशाखावलम्बी पल्लवगुच्छः । अवतंसयैनम् । ]

( मालविका विषादं नाटयति । )

विदूषकः—सुदं भवदा । [ श्रुतं भवता । ]

राजा—सखे, पर्याप्तमेतावत्कामिनाम् ।

अनातुरोत्कण्ठितयोः प्रसिद्ध्यता समागमेनापि रतिर्न मां प्रति ।

---

सस्मितम् मालविकाया आकृतिगोपनापटुत्वकृतं स्मितमत्र । तदेवोद्भिद्यमानं गोपयितुं वक्ष्यति—न तावदिति ।

विषादं नाटयति राजोपस्थितिप्रतिषेधोत्थो विषादोऽयम् । एतेन मालविकाया नितान्तसरलभावो व्यञ्जितः ॥

एतावत् यावन्मयाऽऽकर्णितं तावत कामिनां पर्याप्तम्, अवलम्बनायेति भावः । [ आशास्थानमिति कामिजनजीवनस्य तावतापि सन्तोषः ] ।

अनातुरोत्कण्ठितयोरिति । अनातुरः अव्यग्रोऽसञ्जातोत्कण्ठ इत्यर्थः, उत्कण्ठितश्च तयोरेकोऽनुत्कोऽपरश्चोत्कण्ठितस्तयोरित्याशयः । ( कुतश्चित् कारणात् ) प्रसिद्ध्यता सम्पद्यमानेनापि समागमेन मां प्रति न रतिः । विषमानुरागयोर्दैववशाजायमानेऽपि समागमे न मम सन्तोषोऽन्यचित्तकृते रागे शवयोः सङ्गमस्येवारस्यत्वादिति भावः । समानुरागयोस्तुल्यप्रीत्योः परस्परप्राप्तिनिराशयोः अन्योन्यसङ्गमनिराशयोः शरीरनाशोऽपि वरं मृत्युरपि स्तुत्य इत्यर्थः । नायकयोरेकतरस्योत्कण्ठापरवशत्वेऽपरस्य चातथात्वे दैववशाजायमानेऽपि सङ्गमे न मम स्वाद्यताऽवगमो वैरस्यात्, समचित्तयोस्तु तयोः परस्परप्राप्तिप्रतिबन्धेन शरीरनाशोऽपि वरमिति भावः । उत्कण्ठितस्य मम समागमार्थं मालविकाया उत्कण्ठाव्यञ्जकं वचनमेव

---

बकुलावलिका—( मुस्कुराकर ) महाराज नहीं, अशोकशाखावलम्बी पल्लव गुच्छ । इसे कानमें पहनले ।

( मालविका विषादका अभिनय करती है )

विदूषक—आपने सुना तो ?

राजा—कामिजनके लिये इतनाही काफी है ।

उत्कण्ठित और अनुत्कण्ठित प्रेमियोंके मिलनसे भी मुझे सन्तोष नहीं होता

परस्परप्राप्तिनिराशयोर्वरं शरीरनाशोऽपि समानुरागयोः ॥ १५ ॥

( मालविका रचितपल्लवावतंसा पादमशोकाय प्रहिणोति । )

राजा—वयस्य,

आदाय कर्णकिसलयमस्मादियमत्र चरणमर्पयति ।
उभयोः सदृशविनिमयादात्मानं वञ्चितं मन्ये ॥ १६ ॥

मालविका—वामो क्खु, एसो असोओ जो वञ्जअं पमाणीकदुअ कुसुमुग्गमं ण दंसेदि । अवि णाम अह्माण सम्भावणा सफला हवे ? ।

[ वामः प्रतिकूलः । व्यञ्जकं प्रकाशकम् । प्रमाणीकृत्य स्वीकृत्य । रमणीचरणाघात एव स्वकीयकुसुमानां विकाशहेतुरित्यङ्गीकृत्यैत्यर्थः । प्रश्ने नाम सम्भावनायाम् । सम्भावना उद्यमः । चरणाघातरूपो ममाऽयमुद्यमः अशोककुसुमविकाशेन सार्थको भवेत् किमित्यर्थः ] ।

---

पर्याप्तमिति राज्ञोऽभिप्रायः । अत्राप्रस्तुतात् सामान्यात् प्रस्तुतस्य विशेषस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः । 'दैवादृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक् प्रिये' । इत्यमरः । वंशस्थविलं वृत्तम्—'जतौ तु वंशस्थमुदीरितं जरौ' इति तल्लक्षणम् ॥१५॥

आदायेति । इयं मालविका अस्मादशोकपादपात् कर्णकिसलयं कर्णाभरणार्थं पल्लवमादाय गृहीत्वा अत्र अशोकतरौ चरणम् अर्पयति ददाति उभयोरशोकमालविकयोः सदृशविनिमयात् समानपरिवर्त्तनात् ( समस्य कर्णाभरणोपयुक्ताशोककिसलयस्यार्पणात् पादप्रहाररूपसुखावाप्तेः) आत्मानं वञ्चितं प्रतारितं मन्ये । ममात्र स्थितस्यापि न कर्णपूरप्रदानं न वा चरणमादातुमवसर इति दातृत्वग्रहीतृत्वोभयाभावाद् वञ्चितत्वमिति भावः । अत्र समानविनिमयात् परिवृत्तिरलङ्कारः, तल्लक्षणं यथा—'परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत्' इति ॥ आर्या जातिः ॥ १६ ॥

वामः प्रतिकूलः, व्यञ्जकम् कुसुममुकुलोद्भेदकरम्, प्रमाणीकृत्य सत्यतया

---

है । किन्तु परस्परमिलनकी उत्कण्ठाको लिये हुए दो प्रेमी अगर सङ्गम निराश होकर प्राणत्याग कर देते हैं, तो उसे भी मैं अच्छा समझता हूँ ॥ १५ ॥

( मालविका पल्लव लेकर कानमें पहनलेती है और अशोक वृक्ष पर सानन्द पादप्रहार करती है )

राजा—सखे, इस मालविकाने अशोकसे पल्लव लेकर उसपर चरणन्यास किया । दोनोंमें समान विनिमय हुआ । कोई घाटेमें नहीं रहा ॥ १६ ॥

मालविका—यह अशोक रूठा मालूम पड़ रहा है, इसने चरणप्रहार पाकर भी पुष्प नहीं खिलाए । मैं इस व्यापारमें सफल तो होऊंगी ?

बकुलावलिका—हला, णत्थि दे दोसो । णिग्गुणो अअं असोओ जइ कुसुमोब्भेदमन्थरो भवे जो दे चलणसक्कारं लम्भिअ । [ सखि, नास्ति ते दोषः । निर्गुणोऽयमशोको यदि कुसुमोद्भेदमन्थरो भवेत्, यस्ते चरणसत्कारं लम्भितः । ]

राजा—

अनेन तनुमध्यया मुखरनूपुराराविणा
नवाम्बुरुहकोमलेन चरणेन संभावितः ।

---

प्रमाप्य । अशोकतरोर्हि कृते समुचितमिदं यदसौ स्वमुकुलव्यञ्जकं रमणीचरणाघातमासाद्य तत्सत्यतां प्रमापयन् विकसेत्, तथाऽकुर्वतश्चास्य वामत्वमित्यर्थः ॥

चरणसत्कारम् पादस्पर्शरूपं बहुमानम् । अनेन दुर्लभत्वत्पदाघातकृतार्थस्याप्यस्याशोकतरोरनुद्भिन्नमुकुलत्वं तदीयनिर्गुणतामेव प्रमापयति, न तव कमपि दोषमित्याशयः ।

अनेनेति । तनुमध्यया कृशोदर्या मालविकया मुखरेण सशब्देन नूपुरेण ( करणभूतेन ) आराविणा शब्दायमानेन अनेन नवाम्बुरुहकोमलेन नूतनविकासिकमलसुकुमारेण पादेन सम्भावितः सम्मानितः पूर्णदोहदतया कृतार्थित इत्यर्थः । त्वम्, हे अशोक, यदि सद्य एतत्क्षणमेव मुकुलैर्न सम्पत्स्यसे समृद्धो भविष्यसि उद्भिन्नमुकुलतया लोभनीयो न जास्यसे तदा ललितकामिसाधारणं सुन्दरकामुकजनसमानं दोहदं कामिनीपादाघातरूपमभिलाषं वृथा वहसि निरर्थकं धारयसि । अनया कृशाङ्गया पादाघातानुग्रहेण पूरितमनोरथस्य तवाशोकतरोर्यदि तत्कालमेव कुसुमोद्गमो नाविरस्ति, तदा कामिसाधारणदोहदधारणं तव निरर्थकमेव, कामिनां पादाघातेन रोमाञ्चादेः फलस्य त्वरितमुदीयमानत्वस्याव्यभिचारित्वादिति भावः । अत्रापमानकारणतया प्रसिद्धात् पदाघातात् सम्मानरूपविरुद्धकार्योत्पत्तेर्विषमालङ्कारः । 'नवाम्बुरुहकोमलेन' इत्यत्र लुप्तोपमा च । तयोः सङ्करः । 'ललितं त्रिषु

---

बकुलावलिका—इस अशोकको तुम्हारे द्वारा पादप्रहारसे सम्मानित किया गया, उसपर भी यदि वह फूल नहीं प्रकट करता तो यह उसकी ही अगुणज्ञता है । तुम्हारा कुछ दोष नहीं ।

राजा—इस कृशोदरी मालविकाने कमलकोमल सनूपुर चरणोंद्वारा तुम्हारा

अशोक यदि सद्य एव मुकुलैर्न संपत्स्यसे
वृथा वहसि दोहदं ललितकामिसाधारणम् ॥ १७ ॥

सखे, वचनानुसरणपूर्वकं प्रवेष्टुमिच्छामि ।

विदूषकः—एहि। णं परिहासइस्सं। [ एहि, एनां परिहासयिष्यामि । ]

( उभौ प्रवेशं कुरुतः । )

निपुणिका—भट्टिणि भट्टिणि, भट्टा एत्थ पविसदि। [ भट्टिनि भट्टिनि, भर्तात्र प्रविशति । ]

इरावती—एदं मम पढमं चिन्तिदं हिअएण। [ एतन्मम प्रथमं चिन्तितं हृदयेन । ]

---

सुन्दरम्' इति हलायुधः। 'साधारणं तु सामान्यम्' इत्यमरः । 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति लक्षितं पृथ्वी वृत्तम् ॥ १७ ॥

वचनानुसरणपूर्वकम् किमपि वचनं पुरस्कृत्य । 'वचनावकाशपूर्वकम्' इति पाठेऽपि स एवार्थः ।

एहि आगच्छ, एनाम् मालविकाम्। परिहासयिष्यामि परिहासेन विनोदनाय कृतेन कुतुकप्रश्नादिना विनोदयिष्यामि ।

भट्टिनि राज्ञि, विस्मयप्रकाशनाय द्विरुक्तिः, स च राज्ञोऽतर्कितोपनिपातकृतः।

एतत् भर्त्तुः प्रमदवनोपस्थानम्, मालविकायां प्रमदवनमुपेतायां भर्त्ताऽपि तदालापावसरप्राप्तये तत्र गतः स्यादिति मया पूर्वमेव सम्भावितमिति नास्ति कश्चन विस्मयावसर इति भावः। एतेन चेरावत्या वचनेन तस्या मालविकाविषयक ईर्ष्या-भावो व्याञ्जि ।

---

सम्मान किया, उस पर भी तत्काल तुम विकसित नहीं हुए। तब तो ललित कामियों के समान दोहदका धारण व्यर्थ ही करते हो ॥ १७ ॥

सखे, कुछ कहनेका अवसर पाकर प्रवेश करना चाहता हूँ।

विदूषक—आइये इससे मजाक करता हूँ।

(दोनों प्रवेश करते हैं)

निपुणिका—महारानी, महारानी, महाराज यहाँ आरहे हैं।

इरावती—ऐसा सन्देह तो मुझे पहले ही हुआ था।

विदूषकः—( उपेत्य । ) भोदि, जुत्तं णाम अत्तहोदि पिअवअस्सो अअं असोओ णं वामपादेण ताडिदुं । [ भवति, युक्तं नाम अत्रभवति प्रियवयस्योऽयमशोको ननु वामपादेन ताडयितुम् । ]

उभे—( ससंभ्रमम् । ) अम्हो, भट्टा । [ अहो, भर्ता । ]

विदूषकः—बउलावलिए, गहीदत्थाए तुए अत्तहोदी ईरिसं अविणअं करन्ती कीस ण णिवारिदा । [ बकुलावलिके, गृहीतार्थया त्वयात्रभवतीदृशमविनयं कुर्वन्ती कस्मान्न निवारिता । ]

( मालविका भयं रूपयति । )

---

उपेत्य मालविकासमीपमागत्य । भवति मान्ये मालविके, अत्रभवति पूजनीये, प्रियवयस्ये प्रियसखे राजनीति विशेष्यपदमध्याहार्यम् । उपस्थिते वर्त्तमाने, अशोकः तदाख्यया प्रसिद्धः ।

वामपादेन सव्येतरचरणेन, ताडयितुम् प्रहर्त्तुम् । युक्तं नाम उचितं किम् ? नैव युक्तमित्यर्थः । 'नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च । सम्भाव्यकुत्साप्राकाश्यविकल्पेऽपि च दृश्यते' इति मेदनी । मम प्रियस्तव चानुरागी राजोपस्थितोऽत्रेति तमनादृत्याशोकतरौ तव पादप्रहारकृपातिरेको नोचित इति विदूषकाशयः । एतेन राज्ञ एकान्तानुरागो निवेदितः ।

गृहीतार्थया अधिगतसकलरहस्यया । राज्ञोऽभिप्रायस्य मालविकायै निवेदनाय बकुलावलिका पूर्वमनेनागृहीतेति तस्या ईदृशं विशेषणं तद् भर्त्सनाय विदूषकेणोक्तम् । ईदृशम् अतिमहान्तम् । अविनयम् राजावमाननारूपम् । राजन्युपस्थितेऽभिलष्यति च तमसम्भाव्याशोकतरुसम्भावनारूपोऽत्रावमानोऽविनयः ।

भयं रूपयति भयं नाटयति एतेन बकुलावलिकायां कृतस्य भर्त्सनस्य फलेन

---

विदूषक—( समीप जाकर ) माननीय प्रियतमके समीपवर्त्ती रहनेपर क्या अशोकको वामपाद द्वारा ताडित करना ठीक होगा ?

उभय—( अकचकाकर ) आश्चर्य, महाराज यहाँ उपस्थित हैं। जय हो महाराज की, जय हो ।

विदूषक—तुम तो सब जानती हो बकुलावलिके, फिर भी ऐसे अनुचित आचरणसे तुमने इसे रोका नहीं, क्यों ?

( मालविका भयका अभिनय करती है )

निपुणिका—भट्टिणि, पेक्ख। किं पउत्तं अज्जगोदमेण। [ भट्टिनि, पश्य। किं प्रवृत्तमार्यगौतमेन। ]

इरावती—कहं क्खु बह्मबन्धू अएणहा जीविस्सदि। [ कथं खलु ब्रह्मबन्धुरन्यथा जीविष्यति। ]

बकुलावलिका—अज्ज, एसा देवीए णिओअं अणुचिट्ठदि। एदस्सिं अदिक्कमे परवदी इअं। पसीददु भट्टा। ( इत्यात्मना सहैनां प्रणिपातयति। ) [ आर्य, एषा देव्या नियोगमनुतिष्ठति। एतस्मिन्नतिक्रमे परवतीयम्। प्रसीदतु भर्ता। ]

---

मालविकाया भयेन बकुलावलिकाया निवेदितार्थतया कृतकार्यत्वं मालविकायाश्च विदितराजाभिप्रायत्वमावेदितम्।

किं प्रवृत्तम् किं प्रारब्धम्, मालविकाराजसंयोजनात्मकम् अकार्यमनेन प्रारब्धमिति पश्येत्यनुयोगः।

ब्रह्मबन्धुः ब्राह्मणाधमः, 'ब्रह्मबन्धुरधिक्षेपे निर्देशेऽपि द्विजन्मनाम्' इति मेदिनी। कथं जीविष्यति जीवनं धारयिष्यति, अयमाशयः केनापि कर्त्तव्याकर्त्तव्यविशेषविवेचनावञ्चितेन व्यापारेण राज्ञः प्रसादनमेवास्य जीविकासाधनमिति तस्मिन्नस्य प्रवृत्तिः स्वाभाविकी, तदलमस्य विगर्हणेन, राजैवात्राधिकापराधीति। आर्य, इदं राज्ञः सम्बोधनम्, एतेन विदूषकोक्तस्य राजानुमतत्वं मनसिकृत्य बकुलावलिका स्वस्या मालविकायाश्चाविनयस्य क्षमायै राजानमनुनाथत इत्यर्थः स्फुटति।

एषा मालविका, देव्याः धारिणीदेव्याः, नियोगम् आदेशम्, अनुतिष्ठति पालयति, एतस्मिन् वर्त्तमाने, अतिक्रमे मर्यादालङ्घने, भवतीहोपस्थिते भवन्तमनादृत्याशोकतरावादरप्रकाशनरूपे स्वाविनये इत्यर्थः। परवती परायत्ता, एतेन तस्या अनपराधतयाऽनुग्राह्यतोक्ता, पराज्ञाकृतस्याविनयस्याकृतकल्पतया मन्वादिभिरभिधानादित्थमुक्तिः, तथा च स्मृतिः–'सर्वान् बलकृतानर्थानकृतान् मनुरब्रवीदिति'। प्रणिपातयति नमयति, स्वयं नमति मालविकामपि तथा कर्त्तुं प्रेरयतीत्यर्थः।

---

निपुणिका—महारानी, देखिये गौतमका तमाशा।

इरावती—बेचारा ब्राह्मण जियेगा कैसे?

बकुलावलिका—महाशय, यह मालविका देवीकी आज्ञाका पालन कर रही है, इस अपराधमें इसकी लाचारी है। आप अप्रसन्न न हों। ( अपने साथ उसेभी प्रणत करती है )

राजा—यद्येवमनपराधासि। उत्तिष्ठ भद्रे। ( हस्तेन गृहीत्वैनामुत्थापयति। )

विदूषकः—जुज्जइ देवी एत्थ माणइदव्वा। [ युज्यते देव्यत्र मानयितव्या। ]

राजा—( विहस्य। )

किसलयमृदोर्विलासिनि कठिने निहतस्य पादपस्कन्धे।
चरणस्य न ते बाधा संप्रति वामोरु वामस्य ॥ १८ ॥

---

यद्येवम् देव्या आदेशमनुरुध्याशोकतरौ तव पादाघातप्रवृत्तिश्चेदित्यर्थः। अनपराद्धा अकृतापराधा। उत्तिष्ठ पादप्रदेशपतनेनापराधक्षमाप्रार्थनाव्यापारान्निवर्त्तस्व। भद्रे महनीयाचरणे।

देवी प्रधानमहिषी धारिणी। अत्र अशोकतरौ पादाघाते कारणीये। मानयितव्या आदरणीया, तदादरश्च तदादेशमनुसृत्य प्रवर्त्तमानाया अस्या मालविकाया अनपराधतां प्रख्याप्यैव कर्त्तुं शक्योऽधुनेति युज्यते तव व्यापार इति विदूषकस्याशयः।

किसलयमृदोरिति। विलासिनि सलीलगत्यादिविलासशीले वामोरु वरजघने, कठिने कठोरस्पर्शे कर्कशे पादपस्कन्धे तरुप्रकाण्डे निहितस्य स्थापितस्य ते तव किसलयमृदोः पल्लवकोमलस्य वामस्य दक्षिणेतरस्य चरणस्य पादस्य बाधा पीड़ा सम्प्रति न विद्यत इति क्रियामध्याहृत्य काक्वा प्रश्नः। अत्र किसलयमृदोरिति चरणविशेषणेन बाधाया नितान्तसम्भाव्यतया प्रश्नस्य प्राप्तावसरत्वम्, कठिने इति पादपस्कन्धविशेषणेनापि स एवार्थः,। निहितस्य नतु निधीयमानस्य, तस्मिन्निधानसमये तु व्यथाया विषये प्रश्नस्याप्यनौचित्यम् अतिमृदुतया चरणस्य तथाविधतरुप्रकाण्डस्पर्शेऽवश्यं दवथुप्राप्तेः। 'सम्प्रति' इत्यनेनापि तदा तु बाधाऽऽसीदेवाधुना साऽस्ति नवेति चार्था आवेद्यन्ते। विलासश्च यानस्थानासनादीनां मुखनेत्रादिकर्मणाम्। विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना' इति साहित्यदर्पणे लक्षितः।

---

राजा—यदि ऐसी बात है तब तुम निपराध हो, उठो।

( हाथ पकड़कर उसे उठाता है )

विदूषक—यहाँ यही ठीक है। देवीकी गौरवरक्षा करनी ही है।

राजा—( स हास ) ओ विलासिनि, ओ वामोरु, तुमने अपने सुकोमल चरणसे कठिन अशोक स्कन्धपर प्रहार किया है, उसमें कोई तकलीफ तो नहीं है ?॥१८॥

( मालविका लज्जां नाटयति । )

इरावती—अहो, णवणीदकप्पहिअओ अज्जउत्तो । [ अहो, नवनीतकल्पहृदय आर्यपुत्रः । ]

मालविका—बउलावलिए, एहि । अणुट्ठिदं अत्तणो णिओअं देवीए णिवेदेम्ह । [ बकुलावलिके, एहि । अनुष्ठितमात्मनो नियोगं देव्यै निवेदयावः । ]

बकुलावलिका—विण्णावेहि भट्टारं विसज्जेहि त्ति । [ विज्ञापय भर्तारं विसर्जयेति । ]

राजा—भद्रे, यास्यसि । मम तावदुत्पन्नावसरमर्थित्वं श्रूयताम् ।

---

'अस्त्री प्रकाण्डः स्कन्धः स्यात् मूलाच्छाखावधिस्तरोः' इत्यमरः । 'किसलयमृदोः' इति लुप्तोपमा । कठिने पादपस्कन्धे निहितस्य ते चरणस्य बाधा नेति प्रश्नवाक्ये बाधाहेतोर्वाक्यार्थतया वाक्यार्थहेतुकं काव्यलिङ्गञ्च । 'वामोरु' इति 'संहितशफलक्षण-वामादेश्च' इति विहितोऽन्तस्य सम्बुद्धौ रूपम् । आर्या वृत्तम् ।। १८ ।।

नवनीतकल्पहृदयः नवनीतकोमलमानसः, येनैवं मालविकयाऽशोकतरौ पदाहते तदीयां वेदनां सम्भाव्यैवं सविषादं तस्या बाधां जिज्ञासत इत्यर्थः । अत्रेरावत्या ईर्ष्याकलुषतया राज्ञो निन्दायामेव तात्पर्यम्, सा च स्वस्त्रीषु तादृशप्रश्नानाचरणात् कल्पनीयेति बोध्यम् ।।

अनुष्ठितम् पालितम्, नियोगम् अशोकतरोर्दोहदपूरणात्मकम् ।

विसृज गन्तुमनुमन्यस्व । राज्ञः समीपात्तदीयामाज्ञामनादाय गन्तुं नोचितमिति तं गमनानुज्ञां याचस्वेत्याशयः । यास्यसि गन्तुमनुमतिं लप्स्यसे, एतेन त्वरा प्रतिषिध्यते, तेन च राज्ञः सानुरागत्वं समर्थ्यते । उत्पन्नावसरम् प्राप्तकालम् । अर्थित्वम् प्रार्थना । अयमर्थः—इतः पूर्वत एव मया त्वां प्रति किमपि प्रार्थयितव्यमासीदवसरानवाप्त्या तथा कर्तुं नापारि सम्प्रत्यवकाशे लब्धे तत्प्रार्थनाऽऽकर्णनार्थं त्वयाऽवश्यं समयः प्रदेय इति राज्ञो निर्बन्धेन तदीयोत्कण्ठितत्वं व्यज्यते ।

---

( मालविका लज्जाका अभिनय करती है )

इरावती—अहा ! आर्यपुत्रका हृदय मक्खनकी तरह मुलायम है ।

मालविका—बकुलावलिके, आओ, देवीसे कह दें कि आदेश-पालन कर दिया ।

बकुलावलिका—महाराजसे जानेकी अनुमति प्राप्त कर ले ।

राजा—कल्याणि, जाओ, केवल हमारी एक प्रार्थना सुन लो ।

बकुलावलिका—अवहिदा सुणाहि। आणवेदु भट्टा। [ अवहिता शृणु। आज्ञापयतु भर्ता। ]

राजा—

धृतिपुष्पमयमपि जनो बध्नाति न तादृशं चिरात्प्रभृति।
स्पर्शामृतेन पूरय दोहदमस्याप्यनन्यरुचेः ॥ १९॥

---

अवहिता दत्तावधाना, शृणिवति मालविकां प्रति बकुलावलिकाह। 'आज्ञापयतु भर्ता' इति च सैव राजानं प्रति। एतेनावहितेति विशेषणेन राज्ञः प्रार्थनायाः पालनीयत्वम्, प्रार्थनापरस्यापि राज्ञो विषये 'आज्ञापयतु' इत्युक्त्या राज्ञः सम्माननीयता चाभिव्यज्यते।

धृतिपुष्पमिति। अयम् मल्लक्षणः अपि जनः चिरात् बहुकालात् प्रभृति बहुं कालं व्याप्येत्यर्थः। तादृशं पूर्वतुल्यम् धृतिपुष्पम् धैर्यरूपं कुसुमम् न बध्नाति नोद्भावयति, यथाऽहं पूर्वं त्वयि साभिलाषः सन्नपि धैर्यवानासम्, अधुना तव सान्निध्यात्, भावज्ञानात्, सुचिरप्रतीक्षाश्रान्तमानसत्वाच्च तथा धैर्यं न बध्नामीति भावः। नन्वेवमधैर्ये निवेदिते राज्ञस्तद्विषये वैमुख्यमप्युद्भावयितुं शक्यत इति तन्निषेधायाह—स्पर्शामृतेनेति। अनन्यरुचेः त्वदेकाभिलाषस्य अनन्यकामुकस्येत्यर्थः, अस्यापि ममापि दोहदम् अभिलाषम् स्पर्शामृतेन गात्रस्पर्शसुधया पूरय सम्पादय। अयमर्थः—यथायमशोकतरुः कामिनीपादाघातरूपदोहदप्रतीक्षी पुष्पमनासादयन्नौचित्यादनुरागाच्च त्वया चरणार्पणेन सम्भावि तथैवाहमपि त्वदाप्तये धैर्यरूपं पुष्पमधारयन् जनान्तरानपनेयाधिश्चौचित्यादेव स्पर्शामृतार्पणेन सम्भावनीय इति। एतेन स्वप्रार्थनाया औचित्यप्ररूढत्वेनावश्यपूरणीयता समर्थिता। अत्र धृतौ पुष्पत्वारोपः फलप्रदत्वेन, स्पर्शे चामृतत्वारोपः सद्योजीवनाधायकतया। उभयत्रापि शाब्द आरोपः। राज्ञोऽशोकतरुत्वारोपश्चार्थः, तदेवमेकदेशविवर्ति रूपकमलङ्कारः, यत्र कस्यचिदार्थत्वमेकदेशविवर्ति तदि'ति लक्षणात्। उत्तरार्धवाक्यार्थं प्रति पूर्वार्द्धवाक्यार्थस्य हेतुतया काव्यलिङ्गञ्च। तदनयोरङ्गाङ्गिभावात् सङ्करः। आर्या वृत्तम् ॥१९॥

---

बकुलावलिका—सावधानीसे सुन। कहिये। महाराज,।

राजा—यह व्यक्ति भी बहुत समय धैर्यकुसुम का धारण नहीं करसका है, अतः अनन्यासक्त इस जनका मनोरथ भी चरणस्पर्शरूप अमृतसे पूर्ण करदो ॥ १९ ॥

**इरावती**—( सहसोपसृत्य ) पूरेहि पूरेहि । असोओ कुसुमं ण दंसेदि । अअं उण पुप्फदि एव्व । [ पूरय पूरय । अशोकः कुसुमं न दर्शयति । अयं पुनः पुष्यत्येव । ]

( सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः । )

**राजा**—( अपवार्य । ) वयस्य, का प्रतिपत्तिरत्र ।

**विदूषकः**—किं अण्णं । जङ्घाबलं एव्व । [ किमन्यत् । जङ्घाबलमेव । ]

**इरावती**—बउलावलिए, तुए साहु उवक्कन्तं । दाणिं सफलब्भत्थणं करेहि अज्जउत्तं । [ बकुलावलिके, त्वया साधूपक्रान्तम् । इदानीं सफलाभ्यर्थनं कुर्वार्यपुत्रम् । ]

---

सहसा अतर्कितम्, उपसृत्य मालविकाऽध्युषितदेशमासाद्येत्यर्थः ।

पूरय मनोरथं सम्पादय । अत्र द्विरुक्त्या त्वरितत्वम्, तेन राज्ञो नितान्तव्यग्रता, तया च राजविषये तदवरोधस्येरावत्या ईर्ष्यामानाख्यो भावो व्यज्यते । पुष्यत्येव अवश्यं कुसुमं दर्शयति, अत्र विपरीतलक्षणया राज्ञो वञ्चकत्वमावेदितम् । अनेन च संरम्भवचनविन्यासेन तोटकं नाम सन्ध्यङ्गं निवेशितं भवति ।

प्रतिपत्तिः युक्तिः, किङ्कर्तुमुचितमिति जिज्ञासा । यद्वा प्रतिपत्तिः प्रबोधः, कथमेनां प्रबोधयामीति राज्ञः प्रश्नः ।

जङ्घाबलम् चरणोर्ध्वदेशयोर्बलं पराक्रम एव प्रतिपत्तिरिति शेषः । जङ्घाबलमाश्रित्य स्थानादस्मात् पलायनमेवात्र शरणम् । ( अत्र स्थितौ वाचि प्रयुज्यमानायां क्रुद्धचित्तया राज्याऽर्थान्तरोत्प्रेक्षणे तस्याः कोपस्य समिद्धत्वेनानर्थस्य सम्भवात् तथोपदेशः ) ।

साधु शोभनम् । उपक्रान्तम् प्रारब्धम् । सोल्लुण्ठनोक्तिरियमिति बकुलाव-

---

**इरावती**—( सहसा समीप आकर ) पूर्ण करो, पूर्ण करो । अशोक फूल नहीं देरहा है । यह तो फूलेंगे नहीं, फल ही देंगे ।

( इरावतीको देखकर सभी हकाबकासे रहजाते हैं )

**राजा**—( धीरेसे ) सखे, अब क्या किया जाय ?

**विदूषक**—और क्या ? इस समय तो भागनेमें ही भलाई है ।

**इरावती**—खूब, खूब, बकुलावलिके, तुम अच्छा काम कर रही हो । अभी तो महाराजकी प्रार्थना पूरी कर लो ।

उभे—पसीदृदु भट्टिणी। काओ अम्हे भत्तुणो पणअपरिग्गहस्स॥ ( इति निष्क्रान्ते। ) [ प्रसीदतु भट्टिनी। के आवां भर्तुः प्रणयपरिग्रहस्य। ]

इरावती—अविस्ससणीआ पुरिसा। अत्तणो वञ्चणवअणं पमाणीकरिअ आक्खित्ताए वाहजणगीदगहीदचित्ताए विअ हरिणीए एदं ण विण्णादं मए। [ अविश्वसनीयाः पुरुषाः। आत्मनो वञ्चनावचनं प्रमाणीकृत्याक्षिप्तया व्याधजनगीतगृहीतचित्तयेव हरिण्यैतन्न विज्ञातं मया। ]

---

लिकाऽऽचरणस्य निन्दा गम्यते। सफलाभ्यर्थनम् सफला फलशालिनी अभ्यर्थना प्रार्थना यस्य तं तादृशं फलवदाशंसमित्यर्थः। आर्यपुत्रम् राजानम्। ईदृशेषु वाक्येषु विशेषणांश एव साध्यत्वविवक्षया कर्मत्वादिकं समर्थनीयम्। क्वचित् सफलप्रार्थनमित्येव पाठः, सोऽप्यर्थांशेन भिद्यते।

आवाम् बकुलावलिकामालविके। प्रणयपरिग्रहस्य स्नेहस्वीकारस्य। राज्ञः स्नेहप्रार्थनापूरणीयेत्यस्य राजप्रणयिजनकर्त्तव्यतया नावां तत्राधिक्रियावहे इति वृथा तथा तवादेश इति। 'प्रणयः प्रश्रये प्रेम्णि याञ्चाविस्रम्भयोरपि' इति 'परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः' इति चोभयत्र मेदिनी।

अविश्वसनीयाः अप्रत्ययार्हाः। आत्मनः स्वस्याः। वञ्चनवचनम् प्रतारणावाक्यम्। प्रमाणीकृत्य सत्यत्वेनाभ्युपेत्य। अधिक्षिप्तया आकृष्टया। मयेति विशेष्यमध्याहार्यम्। व्याधजनस्य लुब्धकसमुदयस्य गीतेन मृगाकर्षणप्रयोजनकगानेन गृहीतम् आकृष्टं चित्तं यस्याः तया तथोक्तया हरिण्या मृग्या इव एतत् दृश्यमानं सापत्न्यसमुद्भूतं शोकरूपं शल्यम्, न विज्ञातम् न तर्कितम्। व्याधो यथा सरससङ्गीतेन मृगानाकृष्य गीतश्रवणबद्धश्रवणांश्च कृत्वा विश्वास्य व्यापादयति तथा पुरुषोऽपि ( प्रकृते राजा ) त्वं प्रिये प्रमदवनं गच्छन्तं मामनुसर, तत्र यथासुखविहारमाचरिष्याम इत्यापातमधुरेण वचनेन विश्वस्तां मां वञ्चयित्वाऽत्रानीय भाविसपत्नीप्रदर्शनरूपेण शल्येन व्यथयसीति सर्वथा विश्वासानर्हाः पुरुषा इति पिण्डार्थः।

---

दोनों—महारानी प्रसन्न हों। महाराजके प्रेमका हमें हक ही कहाँ है?

इरावती—पुरुषगण विश्वासके पात्र नहीं होते। व्याधगीतपर आकृष्ट हरिणीकी भांति प्रतारणापर विश्वास करनेसे इन विषयोंसे अपरिचित रही।

विदूषकः—( जनान्तिकम्। ) भो, पडिपज्जेहि किंपि उत्तरम्। उदआन्दमूले विवहिए विमहिदेण कुम्भीलएण संधिच्छेदे सिक्खिदव्वो त्ति वत्तव्वं होदि। [ भो, प्रतिपद्यस्व किमप्युत्तरम्। उदकान्तमूले विपथिके विमथितेन कुम्भीलकेन संधिच्छेदः शिक्षितव्य इति वक्तव्यं भवति। ]

राजा—सुन्दरि, न मे मालविकया कश्चिदर्थः। मया त्वं चिरयसीति यथाकथंचिदात्मा विनोदितः।

इरावती—विस्ससणीओसि। ण मए विण्णादं ईरिसं विणोदवत्थुअं अज्जउत्तेण उवलद्धं त्ति। अण्णहा दुक्खभाइणीए एव्वं ण करीअदि।

---

प्रतिपद्यस्व प्राप्नुहि। किमप्युत्तरयस्व, अन्यथेयमविक्रमपमानमुत्प्रेक्षमाणा किमप्यकार्यं कर्तुं व्यवस्येदिति भावः। नन्वेतादृशेऽवसरे किमुत्प्रेक्ष्योत्तरत्वेनोपस्थापयेयमित्येव नावयामीति तत्राह—उदकान्त इत्यादि। उदकान्तमूले सरिदादिजलसमीपे, विपथिके पथिकशून्ये, नितान्तनिर्जन इत्यर्थः। विमथितेन केनचित् जनेन धृत्वा ताडितेन, कुम्भीलेन चौरेण, सन्धिच्छेदः घर्त्तुः शरीरसन्धिस्थानकर्त्तनम्, शिक्षितव्यः अभ्यसनीयः, इति वक्तव्यं वाच्यं भवति। अयमाशयः—पलायनानुपयुक्तनिर्जननदीजलसमीपदेशे केनचिद् यामिकेन धृत्वा ताडितश्चौरो यथा तदीयशरीरसन्धिस्थानच्छेदनं विधाय पलायितुं प्रयतते, तथाऽहमपि निर्जनेऽत्र स्थाने प्रायेण निर्यातितः सन् स्वीकृतसन्धिभङ्गं विधाय गन्तुमिच्छामीति।

'कुम्भीलः शालमीने च चौरश्लोकार्थयोरपि' इति मेदिनी।

अर्थः प्रयोजनम्। चिरयसि विलम्बसे। यथाकथञ्चित् येन केन प्रकारेण। आत्मा मनः। विनोदितः सन्तोषमापादितः। तवागमने जायमानेन विलम्बेन जनिताया उत्कण्ठाया उपशमार्थमेव मम मालविकया सह सम्भाषणं नानुरागप्रसूतमिति राजाभिप्रायः।

---

विदूषक—( राजासे, धीरे धीरे ) कुछ उत्तर तो दो। यही कह दो कि 'जलाशयके समीप एकान्तमें पकड़े गये चोरको सन्धिच्छेद सीखना है'।

राजा—सुन्दरि, मुझे मालविकासे कुछ मतलबनहीं। तुम देर कर रही थी, इसी लिये मैं किसी तरह दिल बहला रहा था।

इरावती—तुमपर विश्वास नहीं है। आपने ऐसी चीज पा ली है, यह मैं नहीं समझ सकी। यदि समझ जाती तो ऐसा नहीं करती।

[ विश्वसनीयोऽसि । न मया विज्ञातमीदृशं विनोदवस्तुकमार्यपुत्रेणोपलब्धम् इति । अन्यथा दुःखभागिन्यैवं न क्रियते । ]

**विदूषकः—मा दाव अत्तभवदो दक्खिण्णस्स उअरोहं करेहि । समीवदिट्ठेण देवीए परिचारिइत्थिआजणेन संकहावि जयि वारीअदि एत्थ तुमं एव्व पमाणं।** [ मा तावदत्रभवती दाक्षिण्यस्योपरोधं कुरु । समीपदृष्टेन देव्याः परिचारिस्त्रीजनेन संकथापि यदि वार्यते, अत्र त्वमेव प्रमाणम् । ]

---

ईदृशम् मालविकारूपम् । विनोदवस्तुकम् चित्तानुरञ्जनसाधनं द्रव्यम् । अन्यथा भवत्कर्तृकेदृशविनोदवस्तुलाभस्य ज्ञायमानत्वे सति । दुःखभागिन्या अतिहतभाग्यया । एवम् अत्रागमनरूपम् । न क्रियते न विधीयते । ईदृशि स्थितौ अत्रागमनेन भवता सहैवात्मनोऽपि खेदस्यैव समेधनादत्रागमनं नाकरिष्यमिति भावः ।

तत्रभवतो राज्ञः । दाक्षिण्यस्य दक्षिणनायकत्वस्य सर्वासु भार्यासु तुल्यानुरागतया ख्यातेरित्यर्थः । 'तत्र त्वनेकमहिलासु समरागो दक्षिणः कथितः' इति दर्पणे । उपरोधम् बाधां मा कुरु न विधेहि । अत्र माङ्योगे लुङ् कथन्नेति शङ्कायां नायं माङ्शब्दः किन्तु निषेधार्थो माशब्दः, 'ओमानोना निषेधवचनाः' इति स्मरणादिति सन्तोष्टव्यम् । समीपदृष्टेन निकटे प्रत्यक्षीकृतेन ( ननु आयस्यान्विष्य विलोकितेन, एतेन तत्रास्थाविरहो व्यञ्जितः ) देव्याः धारिण्याः परिचारिस्त्रीजनेन अनुचरीभूतललनाजनेन अत्र प्रसङ्गे मालविकालक्षणेन सङ्कथा वार्त्तालापः अपि यदि त्वया वार्यते प्रतिषिध्यते तदा अत्र वारणविषये त्वमेव प्रमाणं निदर्शनम् । अयमर्थः—त्वं धारिणी च राज्ञोऽवरोधौ, तवापि परिचारिकाः, तस्या अपि ताः, सर्वाभिरेव ताभिर्यथावसरं राजा प्रयोजनवशाद् वाचं व्यामिश्रयति, अथ धारिणी राज्ञो भवत्याः परिचारिकया सह वार्त्तालापं प्रतिबध्नीयात्तदा भवत्या हृदये यादृशस्य खेदस्योदयः स्यात्तादृशमेव खेदमत्रभवतो राज्ञो मालविकया सह वार्त्तालापस्य प्रतिबन्धने देव्या अपि जायेत । तद् विचार्यैवात्र निषेधे पदमादध्या अन्यथा तस्याः कोपस्य विषयः स्या इति 'प्रमाणम्' इत्यनेन व्यञ्जितम् । 'उल्लापः काकुवागन्योन्योक्तिः संलापसङ्कथे' इति हेमचन्द्रः । सङ्कथाशब्दो नैषधीये 'परेण पुंसा हि ममापि सङ्कथाकुलाबलाचारसहासनासहा' ॥ इति ।

---

विदूषक—आप इनकी समानुरागतापर आक्षेप न करें। समीपागत देवीकी परिचारिकासे बातें करना भी मना है, यह तो आप ही जानें।

इरावती—णं संकहा णाम होदु । किंति अत्ताणं आआसइस्सं । (इति रुषा प्रस्थिता । ) [ ननु संकथा नाम भवतु । किमित्यात्मानमायासयिष्यामि । ]

राजा—( अनुसरन् । ) प्रसीदतु भवती ।

( इरावती रशनासंदानितचरणा व्रजत्येव । )

राजा—सुन्दरि, न शोभते प्रणयिनि जने निरपेक्षता ।

इरावती—सठ, अविस्ससणीअहिअओसि । ( शठ, अविश्वसनीयहृदयोऽसि । )

राजा—

शठ इति मयि तावदस्तु ते परिचयवत्यवधीरणा प्रिये ।
चरणपतितया न चण्डितां विसृजसि मेखलयापि याचिता ।। २० ।।

---

नन्विति विदूषकसम्बोधने । सङ्कथा भवतु मालविकया सह राज्ञ आलापः प्रवर्त्तताम् । आयासयिष्यामि अवस्थानादिना क्लेशयिष्यामि ।

अनुसरन् इरावतीमनुधावन् ।

रशनासन्दानितचरणा काञ्चीदामनिगडितपादा । एतेन तस्याः क्रोधविह्वलतया मनःस्थितेरत्यन्तास्थिरभावो व्यञ्जितः ।

प्रणयिनि स्नेहाधीने, निरपेक्षता रूक्षो व्यवहारः । न शोभते नोचितवत् प्रतीयते । एतेन मदीयमनुरोधं प्रतिपालयेति राजाशयः स्फुटीभवति ।

अविश्वसनीयः विश्वासानर्हः, एतेन त्वदीयानुरोधपालनं नावश्यकमित्यावेदितम् ।

शठ इति मयीति । प्रिये, परिचयवति विज्ञातचारित्रे मयि शठः गूढविप्रियकारी दर्शितकृत्रिमानुरागश्च अयम् इति ते तव अवधीरणा तिरस्कारोऽस्तु तावत् भवतु नाम । चिरपरिचितस्याशठस्यापि मम विषये तव शठ इति निर्णयो जायतां नाम, न मम तत्र किमपि विवक्षितमित्यर्थः । ( किन्तु ) चण्डि कोपनशीले, चरणपति-

---

इरावती—नहीं, बातें होती रहें, मैं क्यों बीचमें टपकूंगी ?

( रूठकर चल देती है )

राजा—( अनुगमन करते हुए ) प्रसन्नता दिखाइए ।

( इरावतीके पैर करधनीसे बंध जाते हैं, फिर भी वह बढ़ती जाती है )

राजा—सुन्दरि, प्रियजनके प्रति इस तरहकी उदासीनता भली नहीं जंचती है ।

इरावती—ओ छलिया, तुम विश्वासपात्र न रहे ।

राजा—प्रिये, मुझे पहचानती हो, अतः शठ कहकर मेरा तिरस्कार कर सकती

इरावती— इअं पि हदासा तुमं एव्व अणुसरदि। ( इति रशनामादाय राजानं ताडयितुमिच्छति। ) [ इयमपि हताशा त्वामेवानुसरति। ]

राजा—वयस्य, एषा इरावती।

बाष्पासारा हेमकाञ्चीगुणेन श्रोणीबिम्बादप्युपेक्षाच्युतेन।

---

तया पादयोर्निपतितवत्या मेखलया काञ्चीदाम्ना ( सख्येव ) याचिता कोपोपशमाय प्रार्थिता अपि ( अवधीरणाम् ) न विसृजसि ? न जहासि ? चरणानतसखीप्रार्थनाया अवश्यादर्त्तव्यत्वेन भवत्या कोपोऽवश्यत्याज्य इत्यर्थः। मामनादरेण त्यक्त्वा प्रयान्ती त्वं कृतापराधस्य मम दण्डाय तथाऽऽचरसीति कथनेनापि स्वस्या युक्तव्यवहारतां समर्थयितुमीशिषे, परमेतस्याः सख्या इव रशनायाः पादपतनपूर्वकमनुरोधं प्रत्याचक्षाणाऽधिविचारसभं न कमप्युचितमुत्तरं प्रतिपत्स्यस इति पुनरत्र चिन्तयेति राज्ञोऽभिप्रायः। अत्र पादपतनपूर्वकयाचनरूपे कारणे सत्यपि तत्फलप्रसादस्याभावाद्विशेषोक्तिः। शठनायकलक्षणं दर्पणे यथा—'शठोऽयमेकत्र बद्धभावो यः।

दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति' ॥ इति ॥

अपरवक्त्रं वृत्तम्, तल्लक्षणं यथा—'अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ' इति ॥ २० ॥

हताशा अतिदुष्टस्वभावा। अनुसरति अनुकरोति। अयमर्थः—इयं मेखलापि नितान्तखला राजानमनुसरति, यथासौ मालविकायामासक्तिं प्रदर्श्य विप्रियं कृतवान्, कुपितायां च मयि प्रार्थनादिनाऽनुनेतुमचेष्टत मां, तथैवेयमपि मेखला प्रथमं गमनं मे प्रतिबध्नती कोपमुत्पाद्य विरागं प्रदर्श्य गच्छन्त्या मम चरणे प्रणिपातमाचरतीति। 'हताशः पिशुनः' इति शब्दकल्पद्रुमः॥

'एषा इरावती' इत्यस्य 'मां हन्तुमुद्यता' इत्यत्राग्रेऽन्वयः।

बाष्पासारेति। मेघराजी वारिदपटली विद्युद्दाम्ना विद्युल्लतया विन्ध्यं तदाख्यं पर्वतमिव चण्डी नितान्तकोपना बाष्पाणां नयनजलानाम् आसारो धारासम्पातो यस्याः सा पुरोदृश्यमाना एषा इरावती श्रोणीबिम्बात् नितम्बमण्डलात् उपेक्षया

---

हो। किन्तु हे चण्डि, चरणोंपर गिरकर मनानेवाली इस मेखलाकी कथा क्यों नहीं सुनती हो ?॥ २० ॥

इरावती—यह अभागी भी तुम्हारी ही भांति है। ( ऐसा कहकर राजापर मेखलाप्रहार करना चाहती है )

राजा—सखे, मेघमाला जिस प्रकार विद्युन्मालासे विन्ध्यपर्वतको प्रताडित कर-

चण्डी चण्डं हन्तुमभ्युद्यता मां विद्युद्दाम्ना मेघराजीव विन्ध्यम् ॥ २१ ॥

इरावती—किं मं एव्व भूओ वि अवरद्धं करेसि । [ किं मामेव भूयोऽप्यपराद्धां करोषि । ]

राजा—( सशनं हस्तमवलम्बयति । )

अपराधिनि मयि दण्डं संहरसि किमुद्यतं कुटिलकेशि ।

---

अवज्ञया च्युतेन स्खलितेन हेमकाञ्चीगुणेन सुवर्णनिर्मितरशनादाम्ना मां चण्डं नितान्तपरुषं यथा स्यात्तथा मां हन्तुं प्रहर्तुं ताडयितुमिति शेषः । उद्यता प्रवृत्ता । यथा मेघमाला बाष्परूपं धाराऽऽसारं स्रावयन्ती विन्ध्यं नाम पर्वतप्रभेदं विद्युता हन्ति तथैवेयमपि इरावती साश्रुनयना मां काञ्चीगुणेन हन्तुमुद्यच्छतीति । उपमाऽलङ्कारः । 'चण्डी चण्डम्' इति सकृदनेकधा व्यञ्जनसाम्याच्छेकानुप्रासश्च । तयोः संसृष्टिर्मिथोऽनपेक्षणात् ॥ हन्तुमित्यस्य प्रहर्तुं ताडयितुमिति चार्थः, अतोऽत्र प्राणवियोगो न तत्प्रकृत्यर्थ इति नाश्लीलत्वदोषः, अमङ्गलव्यञ्जकत्वाभावात् । तदुक्तम्प्राचीनैः—'निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्ति व्यपाश्रयम् । नाश्लीलम्' । इति । अत एव सुबन्धुरचिते वासवदत्ताघटके 'अविदितगुणाऽपि सत्कविभणितिः कर्णेषु वमति मधुधाराम्' इत्यत्राप्यश्लीलत्वं न, वमतेः समर्पणपर्यवसायित्वात् । एवञ्च 'चण्डी चण्डं मां प्रहर्तुं प्रवृत्ता' इति नीरसं पाठभेदं कल्पयित्वाऽश्लीलत्वं वारयतां महामहोपाध्यायहरिदाससिद्धान्तवागीशानां प्रयासो मुधैवेति सुधियो विभावयन्तु । शालिनी वृत्तम् ॥ २१ ॥

किम् कथम्, भूयः पुनः, अपराद्धाम् हन्तुमभ्युद्यता मामित्युक्त्या सापराधाम् । अनिष्टाचरणेन स्वयमपराध्य राज्ञो मयि पुनर्मिथ्याऽपराधारोपणं नितान्तनिन्दनीयमिति भावः ।

अपराधिनीति । कुटिला वक्राः केशा यस्यास्तत्संबोधने कुटिलकेशि कुञ्चितकचकलापे, त्वम् अपराधिनि सापराधे मयि मल्लक्षणे जने उद्यतं प्रस्तुतं दण्डं काञ्चीदाम्ना प्रहाररूपं निग्रहं किं किमर्थं संहरसि निवर्तमानप्रवृत्तिं सम्पादयसि ?

---

-र्ता हो उसी तरह क्रोधावेशमें साश्रुनयना यह इरावती उपेक्षावश पतित मेखलासे मेरे ऊपर प्रहार करना चाह रही है ॥ २१ ॥

इरावती—फिर मुझको क्यों चिढ़ाकर अपराध करवाना चाह रहे हो ।

( राजा मेखलायुक्त हाथ पकड़ लेता है )

राजा—ओ कुञ्चितकेशशालिनि, मुझ अपराधीके उद्यत दण्ड तुम क्यों प्रतिसंहृत

वर्धयसि विलसितं त्वं दासजनायाद्य कुप्यसि च ॥ २२ ॥

नूनमिदमनुज्ञातम् । ( इति पादयोः पतति । )

इरावती—ण क्खु इमे मालविआचलणा, जा दे हरिसदोहलं पूरयिस्सन्ति । ( इति निष्क्रान्ता सह चेट्या । ) [ न खल्विमौ मालविकाचरणौ, यौ ते हर्षदोहदं पूरयिष्यतः । ]

विदूषकः—उट्ठेहि । अकिदप्पसादोऽसि । [ उत्तिष्ठ । अकृतप्रसादोऽसि । ]

राजा—( उत्थायेरावतीमपश्यन् । ) तत्कथं गतैव प्रिया ।

विदूषकः—वअस्स, दिट्ठिआ इमस्स अविणअस्स अप्पसण्णा गदा एसा । ता वअं सिग्घ अवक्कमाम । जाव अङ्गारओ, रासिं विअ अणुवक्कपरिगमणं ण करेदि । [ वयस्य, दिष्ट्या अनेनाविनयेनाप्रसन्ना गतैषा । तद्वयं

---

( तेन ) अत्र अस्मिन् समये विलसितं लीलाविशेषं मिथ्याताडनप्रवृत्त्यभिनयरूपमिति यावत् । वर्द्धयसि प्रख्यापयसि दासजनाय परमानुगताय मल्लक्षणायात्मीयाय कुप्यसि क्रोधं प्रकाशयसि च । तथा च युगपदेव लीलाप्रदर्शनक्रोधयोश्चमत्कारस्त्वया प्रदर्श्यत इति तवैव लीलाया विलसितमिदमिति भावः । आर्या वृत्तम् ॥ २२ ॥

नूनम् निश्चयेन, इदं मत्प्रार्थितमपराधमार्जनरूपम्, अनुज्ञातम् अनुमतम्, ताडनोद्यतमेखलोपसंहरणादिति भावः ।

हर्षदोहदम् हर्षजनकम् अभिलाषविशेषम्, अत्र दोहदस्य हर्षजनकत्वं स्वपूर्तिद्वारैव ।

अकृतप्रसाद अविहितानुग्रहः, किञ्चिदनुक्त्वैव प्रस्थानादीदृगूहः ।

गतैव न तु स्थित्वाऽनुरोधमरक्षत् । दुःखकारणमिदमिति कथंपदव्यञ्जयम् ।

दिष्ट्या भाग्येन, अनेन इतः पूर्वमाचरितेन, अविनयेन अपराधेन, अप्रसन्ना

---

कर रही हो । एक ओर तुम विलास बढ़ा रही हो और इधर इस दासपर क्रोध भी करती हो ॥ २२ ॥

( ऐसा कहकर चरणोंपर गिरता है )

इरावती—यह मालविकाके चरण नहीं हैं, जो तुम्हारे मनोरथ पूर्ण करेंगे ।

( ऐसा कहकर दासीके साथ जाती है )

विदूषक—नहीं मना सके ।

राजा—( उठकर और इरावतीको नहीं देखकर ) क्या प्रिया चली ही गई ?

विदूषक—सखे, भाग्यवश इस अपराधसे अप्रसन्न होकर चली गई है । जब

शीघ्रमपक्रमामः । यावदङ्गारको राशिमिवानुवक्रं प्रतिगमनं न करोति । ]

राजा—अहो मदनस्य वैषम्यम् ।

मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनं सेवाम् ।
एवं हि प्रणयवती सा शक्यमुपेक्षितु कुपिता ॥ २३ ॥

---

असन्तुष्टा, एषा इरावती, गता इतः प्रस्थिता । अन्यथाऽत्र किमप्यनर्थान्तरमुपस्थापयेदिति भावः । अपक्रमामः इतो निर्गच्छामः । अङ्गारकः मङ्गलग्रहः, राशिम् मेषाद्यन्यतमम्, अनुवक्रम् वक्रभावेन, प्रतिगमनम् प्रतिकूलगमनम् । अयमाशयः—पापग्रहो मङ्गलो यथा वक्रभावेन स्वभोग्यं राशिं सङ्क्रम्य जनस्यानिष्टं जनयति तथाऽसन्तुष्टा प्रतिकूला चेयमिरावती यावदत्र प्रत्यावृत्यास्माकं किमप्यनिष्टान्तरं नोपस्थापयति तावदितः पलायामह इति ।

मदनस्य कामदेवस्य, वैषम्यम् वैपरीत्यम् विपरीतकारित्वम् । मालविकायामासक्तस्यापि ममेरावतीं प्रसादयितु येयं चेष्टैतदेव मदनस्याश्चर्यं वैषम्यमित्याशयः ।

मन्य इति । प्रियया मालविकया हृतं स्वायत्तीकृतं मनो हृदयं यस्य सः मालविकायामत्यासक्त इत्यर्थः, अहं तस्या इरावत्याः प्रणिपातलङ्घनं मदीयप्रणिपातातिक्रमं सेवां सामयिकमुपकारं मन्ये । कथं तथेत्याह—एवं हीति । हि यस्मात् प्रणयवती प्रणयमानशीला कुपिता क्रुद्धा सा इरावती एवम् अनेन प्रकारेण उपेक्षितुं कियन्तं कालम् उपेक्ष्य स्थातुं शक्यं शक्या । प्रणयमानार्थं प्रणयशब्दो लक्षणया । अयमाशयः—यदीयमिरावती मत्प्रणिपातेन प्रसद्य मामनुसर्तुं प्रावर्त्स्यत् तदा तदीयवार्त्तालापाकृष्टो मालविकामनुवर्त्तितुमवसरमेव नाध्यगमिष्यम्, इदानीं तु कुपितायास्तस्या उपेक्षणं नानर्हमिति सम्प्रतीरावती मालविकाऽनुवर्त्तनसमयप्रदानेन मां भृशमुपाकृतेति । अत्र प्रणयवतीपदस्य स्नेहिन्या इत्यर्थकत्वे निरर्थकत्वं दुरर्थकत्वं च, प्रणयस्योपेक्षायामनुपकारकत्वात् प्रत्युत प्रातिकूल्यात् । 'प्रणयमानवत्याः' इत्यर्थकत्वे तु मानशमनोपायेषूपेक्षाया अपि सत्त्वेन साधकमर्थोपपत्ताविति । तथा चोक्तं दर्पणे—
'मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः' ।

'तद्भङ्गाय पतिः कुर्यात् षडुपायानिति क्रमात् ।
साम भेदोऽथ दानञ्च नत्युपेक्षे रसान्तरम् ॥' इति ।

---

तक मंगलग्रह वक्रभावसे जिस प्रकार राश्यन्तरमें आता है, उस प्रकार फिर वह नहीं आजाती, तभी तक निकल चलें ।

राजा—हाय, कामदेवका कैसा विषम व्यवहार है ? प्रिया मालविकाने हृदय

( इति निष्क्रान्तः सह वयस्येन । )

इति तृतीयोऽङ्कः।



प्रातिकूल्येनानुकूलाचरणादनुकूलमलङ्कारः । तथा च तल्लक्षणम्—'अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत्' इति । 'कुपितासा उपेक्षितुं शक्यम्' इत्यत्र भावे प्रत्ययेन निर्वाहः, तथा चास्यैव कवेः शाकुन्तले—'शक्यमरविन्दसुरभिः कणवाही मालिनीरतङ्गाणाम् । अङ्गैरनङ्गतप्तैर्निर्भरमालिङ्गितुं पवन ॥' इति प्रयोगः । 'शक्यं च श्वमांसादिभिरपि क्षुत् प्रतिहन्तुम्' इति महाभाष्ये पस्पशायां कातन्त्रपरिशिष्टे च । अस्यैव नाटकस्य काटयवेमकृतकुमारगिरिराजीयव्याख्याने तु 'शक्यमिति निपातः' इत्युक्तम् ( १ ) । आर्या जातिः ॥ २३ ॥

वयस्येन मित्रेण विदूषकेण सह निष्क्रान्तः रङ्गमञ्चान्निर्गतः राजेत्यन्वयः । इति गर्भसन्धिः ।

इति मैथिलपण्डितश्रीरामचन्द्रमिश्रप्रणीते मालविकाग्निमित्रप्रकाशे
तृतीयोऽङ्क 'प्रकाशः' समाप्तः ।



आकृष्ट कर लिया है इसलिये इरावतीकी नाराजगीको उपकार समझ रहा हूँ, क्यों कि वह क्रुद्ध है, उसकी उपेक्षा करके भी कुछ समय तक रहा जा सकेगा ॥ २३ ॥

( सभी जाते हैं )

तृतीय अङ्क समाप्त ।



( १ ) शकेः कर्मसामान्ये लिङ्गसर्वनामनपुंसकयुक्ते कृत्यप्रत्ययः । ततः पदार्थान्तरसम्बन्धादुपजायमानमपि स्त्रीत्वं बहिरङ्गत्वादन्तरङ्गसंस्कारं न बाधत इति शक्यं क्षुदित्युक्तम् । यदा तु पूर्वमेव विशेषविवक्षा, तदा शक्या क्षुदिति भवत्येव । यदा तु प्रतिघातस्यैव क्षुत् कर्म, शकेस्तु प्रतिघातस्तदा क्षुधं प्रतिहन्तुं शक्यमिति महाभाष्यटीकायां कैयटः । एतेनात्रत्यः सर्वोऽपि संशयः समाहितो भवति । भावे प्रत्यय इति टीकाया अपि तात्पर्यमत्रैवेति ।

# चतुर्थोऽङ्कः ।

( ततः प्रविशति पर्युत्सुको राजा प्रतीहारी च । )

राजा—( आत्मगतम् । )

तामाश्रित्य श्रुतिपथगतामाशया बद्धमूलः
संप्राप्तायां नयनविषयं रूढरागप्रवालः ।
हस्तस्पर्शैर्मुकुलित इव व्यक्तरोमोद्गमत्वा-
त्कुर्यात्कान्तं मनसिजतरुर्मां रसज्ञं फलस्य ॥ १ ॥

---

पर्युत्सुकः मालविकादर्शनार्थं तत्सङ्गमार्थं वोत्कण्ठितः ।

तामाश्रित्येति । श्रुतिपथगतां श्रावणप्रत्यक्षविषयतां प्राप्ताम् चित्रदर्शनावसरे वसुलक्ष्म्या श्राविताभित्यर्थः । तां मालविकाम् आश्रित्य आलम्बनं विधाय आशया तदधिगमाभिलाषेण बद्धमूलः किञ्चिदुद्भिन्न इति भावः । इदमङ्कुरितत्वं ज्ञातव्यम् । नयनविषयं चक्षुर्गोचरतां सम्प्राप्तायां हरदत्तगणदासयोर्योग्यताप्रतिस्पर्द्धायां प्रकर्ष-निर्धारणार्थमायोजितेऽभिनयनृत्यप्रदर्शनावसरे प्रकाममालोकितायामिति भावः । रूढः उत्पन्नो राग एव अनुराग एव प्रवालः पल्लवो यस्य स तथोक्तः । एतेन पल्लवि-तभावः । हस्तस्पर्शैः करसम्पादितत्वाचप्रत्यक्षैः ( बकुलावलिकादेशात् स्वापराधमा-र्जनाय पादपतिताया मालविकाया उत्थापनावसरे जनितैः ] व्यक्तरोमोद्गमत्वात् स्फु-टरोमाञ्चाञ्चितत्वात् कुसुमितः सञ्जातपुष्प इव मनसिजतरुः कामवृक्षः मां फलस्य रसज्ञं सम्भोगसुखाभिज्ञं कान्तं स्वामिनं कुर्यात् विदध्यात्। मालविकया सह मदीयपाणि-ग्रहणमुपपाद्य तत्सङ्गसुखावाप्तिसनाथं फलञ्च मां विदध्यात् कामतरुरसौ यः श्रुतायां तस्यामङ्कुरितो दृष्टायां पल्लवितो हस्तस्पर्शेन च व्यञ्जितरोमोद्गमत्वात् पुष्पितो जात इति भावः। उत्प्रेक्षासङ्कीर्णं साङ्गरूपकमलङ्कारः । 'प्रवालो वल्लकीदण्डे विद्रुमे नवपल्लवे' इति विश्वः । 'कान्तो रम्ये प्रिये ग्राव्णि कान्ता प्रियङ्गुयोषितोः' इति हैमः । कुसुमित इति तारकादित्वादितच् । मन्दाक्रान्ता वृत्तम्, लक्षणं प्रागेवाभिहितम् ॥१॥

---

( तदनन्तर उत्कण्ठित राजा और प्रतीहारीका प्रवेश )

राजा—( स्वगत ) जो मालविकाके बारेमें सुननेसे उत्पन्न हुआ, उसे देखनेसे जिसमें अनुरागपल्लव लगे, जो उसके हस्तस्पर्शद्वारा प्रकाशित रोमाञ्चसे पुष्पित हुआ, वह कन्दर्प वृक्ष मुझे उसका स्वामी बनाकर अपने फलके रसास्वादनका अवसर देवे ॥ १ ॥

( प्रकाशम् । ) सखे गौतम ।

प्रतीहारी—जेदु जेदु भट्टा । असंणिहिदो गोदमो । [ जयतु जयतु भर्ता । असंनिहितो गौतमः । ]

राजा—( आत्मगतम् । ) आः, मालविकावृत्तान्तज्ञानाय मया प्रेषितः ।

विदूषकः—( प्रविश्य । ) वड्ढदु भवं । [ वर्धतां भवान् । ]

राजा—जयसेने, जानीहि तावत्कं देवी धारिणी सरुजचरणत्वाद्विनोद्यत इति ।

प्रतीहारी—जं देवो आणवेदि । ( इति निष्क्रान्ता । ) [ यद्देव आज्ञापयति । ]

---

गौतमेति । विदूषकसम्बोधनं तेन च राज्ञो नितान्तासमवहितचित्तता प्रतीयतेऽनुपस्थितस्यापि सम्बोधनप्रवृत्तेः ।

जयतु भर्ता । सर्वोत्कर्षेण वर्त्तताम् , एतेन प्रतीहार्या विनयः प्रकटितः ।

आः खेदे । खेदश्चात्र स्वमनोदशायाः स्वीयासम्बद्धवाग्व्ययद्योत्यत्वावगमेन बोध्यः, मालविकाया वृत्तान्तः क्वासौ किमवस्था चेति समाचारस्तस्य ज्ञानाय । एतेन तदीयानुपस्थितौ प्रतीहारीसमक्षमसौ मया समबोधीति ज्ञानाद्राज्ञो लज्जित्वम् ।

जानीहि । अवगच्छ ( अत्र ज्ञानेन तत्पूर्वकं राज्ञे निवेदन विवक्षितम् ) सरुजः पीडासहितः चरणः पादो यस्याः सा तस्या भावस्तस्मात् चरणस्य पीडावत्त्वादित्यर्थः । विनोद्यते प्रसाद्यते सखीभिर्दासीभिश्च सहावस्थाय विविधाभिरुपचारक्रियाभिर्वार्त्ताभिश्च पीडा कष्टं विस्मार्यत इत्यभिप्रायः । एतेनादेशप्रदानेन जयसेनायां ततः प्रस्थितायां विदूषकेण सह मालविकाया विषये वार्त्तालापस्यावसरः स्यादिति राज्ञ उत्कण्ठा व्यञ्जिता ।

---

( प्रकाश ) मित्र गौतम,

प्रतीहारी—जय हो महाराजकी । गौतम यहाँ नहीं हैं ।

राजा—(स्वगत) यही तो, उसे तो मैंने ही मालविकाकी खबर लानेको भेजा है ।

विदूषक—( प्रवेश करके ) आपकी जय हो ।

राजा—जयसेने, तुम यह तो देख आओ—धारिणीके पांवमें तकलीफ है, परिजन उनकी सेवामें हैं, वह अभी हैं कहाँ?

प्रतीहारी—जो आज्ञा । ( जाती है )

राजा—गौतम, को वृत्तान्तस्तत्रभवत्यास्ते सख्याः ।

विदूषकः—जो बिडालगहीदाए परहुदिआए । [ यो बिडालगृहीतायाः परभृतिकायाः । ]

राजा—( सविषादम् । ) कथमिव ।

विदूषकः—सा क्खु तवस्सिणी तए पिङ्गलच्छीए सारभण्डभूघरए गुहाए विअ णिक्खित्ता । [ सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्डभूगृहे गुहायामिव निक्षिप्ता । ]

राजा—ननु मत्संपर्कमुपलभ्य ? ।

---

तत्रभवत्याः आदरणीयायाः, ते सख्याः मालविकायाः ।

बिडालगृहीतायाः मार्जारधृतायाः परभृतिकायाः कोकिलायाः । एतेन तस्या जीवनविषये नैराश्यमुक्तम् । 'वनप्रियः परभृतः कोकिलः पिक इत्यपि' इत्यमरः ।

तपस्विनी निरपराधविपन्नाऽत एव शोच्या, 'अतिशोच्यौ तपस्विनौ' इति त्रिकाण्डशेषः । तया क्रूरकर्मकारितया प्रसिद्धया पिङ्गलाक्ष्या पिङ्गले श्वेतपीते अक्षिणी यस्यास्तथाभूतया तन्नामिकया च ( पिङ्गलाक्षीति तस्या निन्दा गम्या ) देवीपरिचारिकास्वन्यतमया । गुहायाम् गिरिगह्वर इव सारभाण्डानां धनाधारीभूतभाजनानां भूगृहे भूतलान्तर्वर्त्तिनि खाते निक्षिप्ता स्थापिता । गुहायामिवेत्युपमाया असंस्कृतत्वव्यञ्जकत्वम्, धनभाजनगृहतया जनान्तरसञ्चराहित्यम्, स्थापितेति परायत्तप्रवृत्तिकत्वञ्च गम्यते ।

न्विति प्रश्ने । मत्सम्पर्कम् मालविकया सह मदीयं रहःप्रणयसम्बन्धमुपलभ्य विज्ञाय । मत्प्रेमपात्रतापरिचयकृत एव मालविकाया अयं दण्डः किमिति प्रश्नः ।

---

राजा—गौतम, तुम्हारी आदरपात्र सखीकी क्या खबर है ?

विदूषक—बिल्लीके हाथों फंसी कोयलकी जो खबर होती है ।

राजा—( सविषाद ) क्या कहा ?

विदूषक—वही दासी पिङ्गलाक्षी उस बेचारीको गुहा समान उस सारभाण्ड घरके तहखानेमें रखती है ।

राजा—तो क्या हमारे साथ गुप्तप्रेमके कारण ही ?

विदूषकः—अह इं। [ अथ किम्। ]

राजा—क एवं विमुखोऽस्माकम्। येन चण्डीकृता देवी।

विदूषकः—सुणादु भवं। परिव्वाजिआए मे कहिदं। हिओ किल तत्तहोदी इरावदी रुअक्कन्तचलणं देविं सुहपुच्छिआ आअदा। [ श्रृणोतु भवान्। परिव्राजिकया मे कथितम्। ह्यः किल तत्रभवतीरावती रुजाक्रान्तचरणां देवीं सुखपृच्छयाऽऽगता ]

राजा—ततस्ततः।

विदूषकः—तदो सा देवीए पुच्छिदा। किं णु ओलोइदो वल्लहजणो त्ति। ताए उत्तं—मन्दो वो उवआरो जं परिजणे संकन्तं वल्लहत्तणं ण जाणीअदि। [ ततः सा देव्या पृष्टा। किं न्ववलोकितो वल्लभजन इति। तयोक्तम्। मन्दो व उपचारः यत्परिजने संक्रान्तं वल्लभत्वं न ज्ञायते। ]

---

अथ किं तथैव, त्वदीयसम्बन्धेनैवायं तस्या दण्डोऽतस्त्वया तदुद्धारप्रयासः करणीय इति भावः।

को जनः एवम् ईदृशः मर्मव्यथकः अस्माकम् विमुखः प्रतिकूलो य एवं मर्मणि प्रहरति। चण्डीकृता प्रकोपं गमिता।

परिव्राजिकया कौशिकीति प्रसिद्धया सन्न्यासिन्या। ह्यः गतदिवसे। रुजा पीडया आक्रान्तौ पीडितौ चरणौ पादौ यस्यास्ताम् सव्यथचरणामित्यर्थः। सुखपृच्छया सुखप्रश्नेन सुखं प्रष्टुमित्यर्थः। आगता आयाता।

सा इरावती देव्या धारिण्या, पृष्टा जिज्ञासिता। प्रश्नस्वरूपमाह—किंन्विति। अवलोकितः साक्षात्कृतः, प्रमदवने दृष्टः किमित्यर्थः। वल्लभजनः प्रियः राजेति यावत्। तया इरावत्या। वः युष्माकम् उपचारः राजनि वल्लभव्यवहारः मन्दः

---

विदूषक—जी, हाँ।

राजा—कौन आदमी हमारा इतना बड़ा दुश्मन है, जिसने देवीको भड़का दिया है?।

विदूषक—सुनिये महाराज, परिव्राजिकाजीने मुझसे कहा है, कल सुबह देवीको देखने इरावती आई थी।

राजा—तब ?

विदूषक—देवीने उससे पूछा कि प्रमदवनमें प्रियके दर्शन हुए ? इसपर उन्होंने

राजा—अहो, निर्भेदादृतेऽपि मालविकायामयमुपन्यासः शङ्कयति ।

विदूषकः—तदो ताए अणुबन्धिज्जमाणाए सा भवदो अविणअं अन्तरेण परिगदत्था किदा देवी । [ ततस्तयानुबन्ध्यमानया सा भवतोऽविनयमन्तरेण परिगतार्था कृता देवी । ]

राजा—अहो दीर्घरोषता तत्रभवत्याः । अतः परं कथय ।

विदूषकः—किं अवरं । मालविआ बउलावलिआ अ पादालवासं

---

अप्रशस्तः । यत् यस्मात् परिजने आत्मन एव परिचारकविशेषे (मालविकायाम् ) सङ्क्रान्तं गतं वल्लभत्वं प्रीतिपात्रत्वं न ज्ञायते नावगम्यते । भवतीषु राज्ञः प्रीतिरिदानीमन्यासक्तचित्ततया न प्राग्विवेति तस्मिन् भवतीनां वल्लभव्यवहारो न शोभत इति भावः ।

निर्भेदात् मालविकायां मम प्रेमबन्ध इति वृत्तान्तस्य प्रकाशीभावात् ऋते विनाऽपि मालविकायां तद्विषये अयम् इरावत्या क्रियमाण उपन्यासः प्रणयकलङ्कस्थापना शङ्कयति अन्यावरोधजनकोपभीतिं जनयति ।

तया धारिण्या अनुबन्ध्यमानया सविशेषमनुरुध्यमानया तया इरावत्या भवतोऽविनयम् अशिष्टमाचरणं विनाऽतिरिच्य देवी धारिणी परिगतार्था कृता ज्ञाततत्त्वा विहिता । नात्र राजाऽधिकप्रयत्नः किन्तु मालविकैव स्वव्यापारेण तमाकर्षतीति धारिणीमिरावती ज्ञापितवतीति सरलार्थः ।

अहो आश्चर्यम् । तत्रभवत्याः इरावत्याः दीर्घः बहुकालव्यापकः रोषः कोपो यस्याः सा दीर्घरोषा चिरकोपना तस्या भावः दीर्घरोषता ( उचितं तु तस्या इयता समयेन प्रमृष्टकोपत्वमिति भावः ) ।

---

कहा—अब आपका उनके विषयमें प्रेमव्यवहार अच्छा नहीं है, उनका प्रेम परिजनों पर चला गया है । क्या आपको यह मालूम नहीं है ? ।

राजा—अप्रकट होनेपर भी यह आरोप मालविकाके विषयमें शङ्का पैदा करता है ।

विदूषक—इसके बाद देवीके आग्रह करनेपर इरावतीने आपको बचाते हुए सारी कथा उनसे कह दी ।

राजा—( साश्चर्य ) उसका क्रोध इतने दिनों तक रहा !! आगे बताओ ।

विदूषक—और क्या कहूँ ? मालविका और बकुलावलिकाके चरणोंमे बेड़ियाँ

णिगलपदीओ अदिट्ठसुज्जपादं णागकण्णआओ विअ अणुहोन्ति । [ किमपरम् । मालविका बकुलावलिका च पातालवासं निगलपद्यावदृष्टसूर्यपादं नागकन्यके इवानुभवतः । ]

राजा—कष्टं कष्टम् ।

मधुरस्वरा परभृता भ्रमरी च विबुद्धचूतसङ्गिन्यौ ।
कोटरमकालवृष्ट्या प्रबलपुरोवातया गमिते ॥ २ ॥

---

किमतः परम् किमपि नातः परं वक्तव्यमित्यर्थः । निगडपद्यौ निगडानि शृङ्खलाः पादेषु ययोस्तादृश्यौ शृङ्खलाबद्धचरणे इत्यर्थः, अत्र 'पादोऽन्यतरस्याम्' इति ङीपि पाच्छब्दस्य भत्वे पदादेशः । अदृष्टसूर्यपादे अनवलोकितरविकिरणे नागकन्यके सर्पबालिके इव पातालवासम् अधोलोकनिवासम् अनुभवतः भुञ्जाते । 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः ।

मधुरस्वरेति । विबुद्धचूतसङ्गिन्यौ प्रस्फुटाम्रमञ्जरीविहारिण्यौ मधुरः श्रुतितर्पणः स्वरो ध्वनिर्यस्याः सा मधुरस्वरा परभृता कोकिला, भ्रमरी, च एते, प्रबलोऽतिकम्पनः पुरोवातः पूर्वाख्यदिगायातः पौरस्त्य इत्यर्थः । यस्यां तादृश्या अकालवृष्ट्या असामयिकवर्षाभिः कोटरं तरुगात्रवर्त्तिपक्षिवासोपयोगिगर्भगृहं गमिते प्रापिते । यथाऽऽम्रमञ्जरीषु विहरमाणे श्रुतिमधुरं स्वनन्त्यौ च कोकिलाभ्रमर्यौ ( वसन्तर्चौ समुपस्थितया ) पूर्वदिगायातझंझावातयुक्तया वृष्टयाऽकालिक्या कोटरं प्रवेश्येते तथा नृत्यगीताभिनयादिललितकलाभिरखिलानन्ददायिन्यौ मालविकाबकुलावलिके अन्धतमसाच्छन्ने सारभाण्डगृहे पाताल इव नागकन्यके स्थापिते इति महत्कष्टमिति भावः । अत्राकालवृष्ट्या विबुद्धचूतसङ्गिन्योः परभृताभ्रमर्योः कोटरप्रवेशरूपादप्रस्तुतात् समात् देव्या राजसङ्गिन्यो मालविकाबकुलावलिकयोः सारभाण्डगृहप्रवेशरूपस्य प्रस्तुतस्यसमस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः । अकालवृष्ट्येति तत्कृतस्योपद्रवस्यासह्यत्वद्योतनाय, सामयिकदृष्टेरनुग्रत्वात्सह्यत्वाच्च । आर्या वृत्तम् ॥ २ ॥

---

डाल दी गईं और सूर्यकिरणदर्शनसे वञ्चित वह दोनों व्यक्ति नागकन्याकी तरह पातालवासका अनुभव कर रही हैं ।

राजा—हा कष्ट !

मञ्जरित आम्रवृक्षपर बैठी मधुरकण्ठ कोयल और भ्रमरी प्रबल पुरवैआ हवासे भीषण अकालवृष्टिके द्वारा घोसलेकी शरण लेनेको बाधित हुईं ॥ २ ॥

अप्यत्र कस्यचिदुपक्रमस्य गतिः स्यात् ।

विदूषकः—कहं भविस्सदि । जं सारभाण्डघरव्यापारिदा माहविआ देवीए संदिट्ठा । मह अङ्गुली अमुद्दिअं अदेक्खिअ ण मोत्तव्वा तुए हदासा मालविआ बउलावलिआ अ त्ति । [ कथं भविष्यति । यत्सारभाण्डगृहव्यापारिता माधविका देव्या संदिष्टा । ममाङ्गुलीयकमुद्रिकामदृष्ट्वा न मोक्तव्या त्वया हताशा मालविका बकुलावलिका चेति । ]

राजा—( निःश्वस्य सपरामर्शम् । ) सखे, किमत्र कर्तव्यम् ।

विदूषकः—( विचिन्त्य । ) अत्थि एत्थ उवाओ । [ अस्त्यत्रोपायः । ]

राजा—क इव ।

विदूषकः—( सदृष्टिक्षेपम् । ) को वि अदिट्ठो सुणिस्सदि । कण्णे दे

---

अपिरत्र प्रश्नवचनः । कस्यचित् कस्यापि उपक्रमस्य शृङ्खलितचरणयोः कारागतयोश्च मालविकाबकुलावलिकयोरुपायस्य गतिः सम्भवः स्यात् ।

कथं भविष्यति नास्तीत्यर्थः । यत् यस्मात्, सारभाण्डगृहे व्यापृता तद्रक्षकतया नियुक्ता माधविका तदाख्या कापि दासी देव्या धारिण्या सन्दिष्टा आज्ञप्ता । अङ्गुलीयकमुद्राम् अङ्गुलीयकगतनामादिलिपिविशेषम् । न मोक्तव्या न स्वतन्त्रतां प्रापणीया।

निःश्वस्य प्रतीकाराभावचिन्ताकृतां श्वासक्रियामायम्येत्यर्थः । सपरामर्शम् किञ्चिदनुध्याय ।

अत्र मालविकाबकुलावलिकयोरुद्धारविषये ।

क इव कीदृश उपायोऽस्ति ? ( एतेन राज्ञो व्यग्रता तया च तद्गता प्रीतिः प्रत्यायिता ) ।

---

अब कुछ उपाय है ?

विदूषक—होगा कैसे ? धारिणीने सारभाण्डगृहरक्षिका माधविकाको आदेश दिया है कि 'हमारी' मुहर 'देखे विना मालविका और बकुलावलिकाको मुक्त मत करना' ।

राजा—( चिन्तासे सांस लेकर ) सखे, अब क्या करना होगा ?

विदूषक—( सोचकर ) है इसका उपाय ।

राजा—कौनसा ?

विदूषक—( चारो ओर देखकर ) कोई छिपा हुआ सुन लेगा । तुम्हारे कानमें कहता हूँ ( कानसे मुंह मिलाकर ) यही तो । ( कहता है )

कहेमि। ( इत्युपश्लिष्य कर्णे। ) एव्वं विअ। ( इत्यावेदयति। ) [ कोऽप्यदृष्टः श्रोष्यति। कर्णो ते कथयामि। एवमिव। ]

राजा—( सहर्षम्। ) सुष्ठु। प्रयुज्यतां सिद्धये।

प्रतीहारी—देव, पवादसयणीए देवी णिसण्णा रत्तचन्दणधारिणा परिअणहत्थगदेण चलणेण भअवदीए कहाहिं विणोदिज्जमाणा चिट्ठदि। [ देव, प्रवातशयने देवी निषण्णा रक्तचन्दनधारिणा परिजनहस्तगतेन चरणेन भगवत्या कथाभिर्विनोद्यमाना तिष्ठति। ]

राजा—तस्मादस्मत्प्रवेशयोग्योऽयमवसरः।

---

अदृष्टः अस्मद्दृष्टिविषयमनवतरन् ( एतेन मन्त्रस्य गोप्तुमौचित्यमुक्तम् ) उपश्लिष्य आसन्नतमो भूत्वा। एवमिव ईदृशः। अत्र राज्ञः कर्णे विदूषकोक्त उपाये नियमेन मालविकाप्राप्तिहेतुत्वान्नियताप्तिर्नाम चतुर्थावस्था सूचिता। इतः पूर्वं प्रकरीस्थानोक्तबीजस्यानया नियताप्त्या समन्वयादवमर्शो नाम चतुर्थसन्धिः प्रतिपादित इति ध्येयम्।

सुष्ठु साधु समुद्भावितमिति शेषः। सिद्धये तत्समागमरूपाभीष्टार्थनिष्पत्तये प्रयुज्यताम् उपक्रम्यताम्, स उपाय इति शेषः।

प्रकृष्टः समधिको वातो वायुर्यत्र तादृशे शयने शय्यायाम्। शयनस्य प्रवातता चोन्मुक्तगवाक्षसमीपस्थत्वेन प्रासादोर्ध्वपृष्ठगतत्वेनान्येन वा केनाप्युपायेन सम्पाद्या। निषण्णा शयिता। रक्तचन्दनधारिणा लिप्तरक्तचन्दनेन परिजनः सेवाधिकृतदासीजनस्तद्धस्तगतेन तत्करलालितेन ( उपलक्षिता धारिणी देवी ) भगवत्या कौशिक्या नाम परिव्राजिकया कथाभिः उपाख्यानैः विनोद्यमाना आमोद्यमाना तिष्ठति वर्त्तते। वेदनया पीडिता हि परिजनैरुपचर्यन्ते हितचिन्तकैश्च श्रेष्ठजनैः वेदनायाः सह्यतायै नानाविधोपाख्यानश्रावणैर्विनोद्यन्त इति लोकयात्रा।

तस्मात् देव्याः सरुजचरणत्वात् स्नेहिजनैस्तत्समदुःखताप्रकाशनार्थं तत्समीपोपसरणस्यौचित्यात्। दुःखस्य स्निग्धजनसंविभक्तत्वे सह्यत्वादित्थमुक्तम्।

---

राजा—( सहर्ष ) ठीक, कार्यसिद्धिके लिये इसको काममें लाओ।

प्रतीहारी—( प्रवेश करके ) देवी खुली हवामें खाटपर पड़ी हैं एक दासी रक्तचन्दनका लेप लिये उनका चरण पकड़कर बैठी है और परिव्राजिका जी उन्हें कहानियोंमें बहला रही हैं।

राजा—तब तो हमारे जानेके योग्य अवसर है।

विदूषकः—भो गच्छदु भवं । अहं वि देविं पेक्खिदुं अरित्तपाणी भविस्सं । [ भो गच्छतु भवान् । अहमपि देवीं द्रष्टुमरिक्तपाणिर्भविष्यामि । ]

राजा—जयसेनायास्तावदस्मद्रहस्यं विदितं कुरु ।

विदूषकः—तह । ( इति कर्णे । ) एव्वं विअ होदि । ( इत्यावेद्य निष्क्रान्तः । ) [ तथा । एवमिव भवति । ]

राजा—जयसेने, प्रवातशयनमार्गमादेशय ।

प्रतीहारी—इदो इदो देवो । [ इत इतो देवः । ]

(ततः प्रविशति शयनस्था देवी परिव्राजिका विभवतश्च परिवारः । )

देवी—भअवदि, रमणिज्जं कहावत्थु । तदो तदो । [ भगवति, रमणीयं कथावस्तु । ततस्ततः । ]

---

अरिक्तपाणिः उपहारसहितहस्तः । राजादिदर्शनस्य शून्यकरेण कर्त्तव्यताया आचारबहिर्भूतत्वात् ।

अस्मद्रहस्यम् अस्माकमिमं गोपनीयं वृत्तान्तम् । विदितं कुरु ज्ञापय ।

एवमिव इत्थम्, भवति भविष्यति, वर्त्तमानसामीप्ये लट् । किमपि कार्यं साधयितुं सर्पदंशनमभिनेष्यामि तत्र त्वया मदादेशमात्रमनुष्ठेयं न तु रहस्यं कस्मैचिदपि प्रकाशनीयमिति रहस्यमावेदितं जयसेनाया इति बोध्यम् ।

प्रवातशयनस्य धारिण्यध्युषितस्थानविशेषस्य मार्गम् पन्थानम् । राजधानीगतसकलप्रासादसौधादिकस्य विविधकार्यनिविष्टमतिना राज्ञा स्मर्त्तुमशक्यतयेत्थमादेशः । एतेन राज्ञो विभूतिबाहुल्यं व्यञ्जितम् ।

रमणीयम् मनोरमम् ।

---

विदूषक—आप जाइए, मैंभी देवीके दर्शनार्थ कुछ ले लेता हूँ ।

राजा—जयसेनाको अपना भेद बता दो ।

विदूषक—अच्छी बात, ( कानमें ) यही तो है ।

राजा—हवाई महलका रास्ता बताओ जयसेने ।

प्रतीहारी—इधरसे ।

( खाटपर पडी देवी, परिव्राजिका और कुछ परिजनका प्रवेश )

देवी—सरकार, बडी अच्छी कथा है, इसके आगे ?

**परिव्राजिका**—( सदृष्टिक्षेपम् । ) देवि, अतःपरं पुनः कथयिष्यामि, अत्र भगवान्विदिशेश्वरः संप्राप्तः ।

**देवी**—अम्हो भट्टा । ( इत्युत्थातुमिच्छति । ) [ अहो भर्ता । ]

**राजा**—अलमलमुपचारयन्त्रणया ।

अनुचितनूपुरविरहं नार्हसि तपनीयपीठिकालम्बि ।
चरणं रुजापरीतं कलभाषिणि मां च पीडयितुम् ॥ ३ ॥

---

पुनः कथयिष्यामि समयान्तरे श्रावयिष्यामि । विदिशेश्वरः विदिशा नाम दशार्णदेशराजधानी तस्याः पतिः शास्ता । राजन्युपस्थिते कथाया धृष्टताद्योतकत्वमिति सम्प्रति तां न प्रवर्त्तयिष्यामीति भावः ।

अहो इति निपातो विस्मयार्थः ।

उपचारयन्त्रणया मदीयाभ्यर्थनार्थमुत्थानादिकष्टेन । उपचारो हि सामान्यतः स्नेहिजने कैतवम्, 'उपचारः कर्त्तव्यो यावदनुत्पन्नसौहृदाः पुरुषाः । उत्पन्नसौहृदानामुपचारः कैतवं भवति' ॥ इति स्मरणात् । विशेषतश्चास्यां वेदनायाः स्थितौ । अतो वृथा तवोत्थानादिव्यापार इति भावः ॥

अनुचितेति । कलं मधुरं भाषितुं शीलमस्यास्तत्संबुद्धौ कलभाषिणि मधुरवचने, अनुचितः अयोग्यो नूपुरस्य चरणालङ्कारविशेषस्य विरहो विप्रयोगो यस्मिन् तादृशम् सदा नूपुरमुखरम्, तपनीयं सुवर्णं तस्य तन्निर्मिता पीठिका क्षुद्रपीठस्तदालम्बि तदाश्रितम् ( अत एव कियतांशेनोपशमितपीडम् ) रुजा परीतम् उपजातोपतापम् चरणम् आत्मनः पादम् मां च पीडयितुं व्यथयितुं नार्हसि न युज्यसे । मदभ्यर्थनार्थं त्वयोत्तिष्ठन्त्यां व्यापारवशात्सपदि चरणे तव पीडा वर्धेत तया च ममापि मनसि वेदनोदियादतो वृथा तथाकरणमिति भावः । अनुचितनूपुरविरहमिति राज्ञ्या विलासप्रियता, तपनीयपीठिकालम्बित्वेन समृद्ध्यतिशयः क्षणिकविश्रान्तिश्च, कलभाषिणीत्युपचारस्य वचसैव सम्पादयितुमौचित्यं जातत्वं चेत्याद्यर्था व्यज्यन्ते ।

---

**परिव्राजिका**—( नजर दौड़ाकर ) शेष दूसरे समयमें कहूँगी, विदिशानाथ आरहे हैं ।

**देवी**—क्या ! महाराज !! ( इतना कहकर उठना चाहती है )

**राजा**—स्वागत के लिये तकलीफ करनेकी क्या आवश्यकता ? ओ मधुर भाषिणि यही तो अनुचित हो रहा है कि तुम्हारे यह चरण नूपुर से रहित होकर इस क्षुद्र,

धारिणी—जेदु जेदु अज्जउत्तो । [ जयतु जयत्वार्यपुत्रः । ]

परिव्राजिका—विजयतां देवः ।

राजा—( परिव्राजिकां प्रणम्योपविश्य । ) देवि, अपि सह्या वेदना ।

धारिणी—अज्ज अत्थि मे विसेसो । [ अद्यास्ति मे विशेषः । ]

( ततः प्रविशति यज्ञोपवीतबद्धाङ्गुष्ठः संभ्रान्तो विदूषकः । )

विदूषकः—परित्ताअदु परित्ताअदु भवं । सप्पेणम्हि दिट्ठो । [ परित्रायतां परित्रायतां भवान् । सर्पेणास्मि दष्टः । ]

( सर्वे विषण्णाः । )

राजा—कष्टं कष्टम् । क भवान्परिभ्रान्तः ।

---

'तपनीयं शातकुम्भम्' इत्यमरः । अत्र चरणमित्यस्य मामित्यस्य चैकत्र पीडनक्रियायां कर्मत्वेनान्वयात् तुल्ययोगिताऽलङ्कारः ॥ ३ ॥

विशेषः पीडोपशमस्य प्रकटो विशेषः । एतेनांशिकी स्फुटाशान्तिरुक्ता । यज्ञोपवीतेन त्रिवर्णपरिधेययज्ञसूत्रेण बद्धाऽङ्गुष्ठा करगतप्रधानाङ्गुलिर्येन यस्य वा तादृशः । तद्बन्धनं च विषप्रसारनिवृत्तये । संभ्रान्तः भीतः । अत्र कल्पनाया गम्यमानत्वाच्चलनं नाम सन्ध्यङ्गमुक्तं भवति ॥

परित्रायताम् रक्ष्यताम्, अयं जन इति शेषः । द्विरुक्तिर्भयाधिक्यद्योतनाय । परिभ्रान्तः गतः, ( येनेदृगवस्थो जातोऽसि )

---

स्वर्ण पीठपर पडे हैं, अब इस उठनेकी चेष्टा द्वारा इन चरणोंके साथ मुझे भी मत सताओ ॥ ३ ॥

धारिणी—आर्यपुत्रकी जय हो ।

परिजन—जय हो महाराजकी ।

राजा—( परिव्राजिकाको प्रणाम करके बैठकर ) देवि, विशेष कष्ट तो नहीं है ?

देवी—आज कुछ अन्तर है ।

( इसके बाद यज्ञोपवीतसे अंगूठे को बाँधे भयभीत विदूषकका प्रवेश )

विदूषक—महाराज, रक्षाकीजिये, रक्षा कीजिये । हमको सांपने काट लिया है ।

( सभी दुःखी हो जाते हैं )

राजा—हाय, तुम किधर घूमने चलेगये ?

विदूषकः—देविं देक्खिस्सं त्ति आआरपुप्फगहणकारणादो पमदवणं गदोम्हि । [ देवीं द्रक्ष्यामीत्याचारपुष्पग्रहणकारणात्प्रमदवनं गतोऽस्मि । ]

देवी—हद्धी हद्धी । अहं एव्व बह्मणस्स जीविदसंसअणिमित्तं जादम्हि। [ हा धिक् हा धिक् । अहमेव ब्राह्मणस्य जीवितसंशयनिमित्तं जातास्मि ।

विदूषकः—तहिं असोअत्थवअकालणादो पसारिदो दक्खिणहत्थो । तदो कोडरणिग्गदेण सप्परूवेण कालेण दट्ठोम्हि । णं एदाणि दुवे दंसणपदाणि । ( इति दंशं दर्शयति । ) [ तस्मिन्नशोकस्तबककारणात्प्रसारितो दक्षिणहस्तः । ततः कोटरनिर्गतेन सर्परूपेण कालेन दष्टोऽस्मि । नन्वेते द्वे दंशनपदे । ]

परिव्राजिका—तेन हि दंशच्छेदः पूर्वकर्मेति श्रूयते । स तावदस्य क्रियताम् ।

---

आचारपुष्पग्रहणकारणात् देव्या उपायनीकर्त्तुं पुष्पग्रहणार्थमित्यर्थः । जीवितसंशयः प्राणिष्यति न वेति सन्देहः, तत्र निमित्तम् उद्देश्यभूता । मदुपहारकुसुमाहरणार्थं गतोऽयमहिना दष्टो म्रियते चेदेतत्पापं ममैव स्यादिति राज्याः खेदाधिक्ये कारणम् । 'अहमेव निमित्तं जाता' इति धारिण्युक्तौ निमित्तपदस्य विधेयवाचकतया प्राधान्येऽपि 'उद्देश्यविधेययोरुद्देश्यवचनत्वमाख्यातस्य' इति वचनात् उद्देश्यस्याहमित्यस्य स्त्रीत्वात् जातेत्यस्यापि स्त्रीत्वमिति हरिदासः ॥

अशोकस्तवककारणात् अशोकपुष्पगुच्छग्रहणाय हेतवे । दंशनपदे दंशनस्थाने सर्पः खलु प्रधानदन्तयुगलेन यत् स्थानद्वयं दष्टवाँस्तत्स्थानद्वयमित्यर्थः ।

दशत्यस्मिन्निति दंशः दशनाधारीभूताङ्गविशेषः, तस्य च्छेदः कर्त्तनम् पूर्वकर्म सर्पदंशनचिकित्सायाः प्रथमं कर्त्तव्यम् , श्रूयते विषवैद्यपरम्परातः श्रूयते, तत्र वचनं प्रमाणयति—

---

विदूषक—देवीके दर्शन करूंगा, इस हेतु कुछ उपहार पुष्प लेने प्रमदवन चला गया था।

धारिणी—हाधिक् ! हाधिक् ! मैं ही इस ब्राह्मणकी मौतका कारण हुई ।

विदूषक—वहीं अशोकस्तवक लेनेके लिये हाथ फैलानेपर बिलसे निकलकर कालरूप सांपने मुझे काट लिया । महाराज, यही दोनों दाढ़ हैं ।

परिव्राजिका—दंशवाले स्थानका छेदन पहला काम कहागया है, यही इसके लिये भी करना चाहिये ।

छेदो दंशस्य दाहो वा क्षतेर्वा रक्तमोक्षणम् ।
एतानि दष्टमात्राणामादूष्याः प्रतिपत्तयः ॥ ४ ॥

राजा—संप्रति विषवैद्यानां कर्म । जयसेने, ध्रुवसिद्धिः क्षिप्रमानीयताम् ।

प्रतीहारी—जं देवो आणवेदि । (इति निष्क्रान्ता ।) [ यद्देव आज्ञापयति । ]

विदूषकः—अहो, पावेण मिच्चुणा गहीदोम्हि । [ अहो, पापेन मृत्युना गृहीतोऽस्मि । ]

---

छेदो दंशस्येति । दशत्यस्मिन्निति दंशः दंशनाश्रयीभूतमङ्गं तस्य च्छेदः कर्त्तनम् अथ वा दाहः अथ वा क्षतेः क्षतस्थानात् रक्तमोक्षणम् भेदादिना शोणितस्रावणम् एतानि छेददाहरक्तमोक्षणानि दष्टमात्राणाम् सद्य एव सर्पदंष्टानाम् अदूष्याः प्रशंसनीयाः प्रतिपत्तय उपायाः । क्वचित् आयुष्याः प्रतिपत्तय इति पाठस्तत्रायुषे हिता आयुष्या इत्यर्थः करणीयः । त्रिष्वप्येषूपायेषु असंशयफलदातृतया छेदस्य प्राथम्यम् , अत एव पूर्वकर्त्तव्यत्वञ्च । अन्यत्सुगमम् अत्र सुश्रुतः—

"सर्वैरेवादितः सर्पैः शाखादष्टस्य देहिनः । दंशस्योपरि बध्नीयादरिष्टाश्चतुरङ्गुले ॥ दहेद्दंशमथोत्कृत्य यत्र बन्धो न जायते । आचूषणच्छेददाहाः सर्वत्रैव तु पूजिताः । समन्ततः सिरा विध्येद्दंशात्तु कुशलो भिषक् । शाखाग्रे वा ललाटे वा व्यध्यास्ताप्रसृते विषे ॥ रक्ते निर्ह्रियमाणे तु कृत्स्नं निर्ह्रियते विषम् । तस्माद्विस्रावयेद्रक्तं सा ह्यस्य परमा क्रिया" ॥

सम्प्रति गौतमे ब्राह्मणे विपद्यमाने विषवैद्यानाम् विषदष्टचिकित्साविशेषज्ञानाम् कर्म कार्यम् प्रयोजनमित्यर्थः [ अत्रेदमवगन्तव्यम्—प्रायेण प्राणसंशये समुपस्थितेऽङ्गच्छेदं वरं मन्यन्ते, तेन परिव्राजिकया तथोक्तम् , तद्रहस्यज्ञस्तु राजा विदूषकाङ्गभङ्गमनिच्छुरन्यां पद्धतिमादिशति, अन्यथा तु परिव्राजिकोक्तं न निषेधेदिति ।

पापेन अधमेन ।

---

दंशस्थानका छेदन, दाह और रक्तमोक्षण, यह सभी उपचार सर्प दष्ट लोगोंके जीवनके उपाय मानेगये हैं ॥ ४ ॥

राजा—इस समय विषवैद्यकी जरूरत है, जयसेने, शीघ्र ध्रुवसिद्धिको बुलाओ ।

प्रतीहारी—जो आज्ञा ( ऐसा कहकर जाती है )

विदूषक—हाय, पापी मृत्युने मुझे पकड़ लिया ।

**राजा**—मा कातरो भूः । अविषोऽपि कदाचिद्दंशो भवेत् ।

**विदूषकः**—कहं ण भाइस्सं । सिमसिमाअन्ति मे अङ्गाइं । ( इति विषवेगं रूपयति । ) [ कथं न भेष्यामि । सिमसिमायन्ति मेऽङ्गानि । ]

**देवी**—हा, दंसिदं असुहं विआरेण । अवलम्बथ बम्हणं । [ हा, दर्शितमशुभं विकारेण । अवलम्बध्वं ब्राह्मणम् । ]

( परिव्राजिका ससंभ्रममवलम्बते । )

**विदूषकः**—( राजानं विलोक्य । ) भोः, भवदो बाल्लादो वि पिअवअ-

---

अविषोऽपि विषशून्योऽपि, निर्विषसर्पदष्टत्वादित्थं सम्भावितम् । तथा चोक्तं । सुश्रुते—निर्विषा वैकरञ्जश्च त्रिविधास्ते पुनः स्मृताः ।
निर्विषा द्वादश ज्ञेया वैकरञ्जास्त्रयस्तथा ॥

सिमसिमायन्ते सिमसिमं कुर्वन्ति, एतेन कम्पसन्तापौ लक्षितौ । तौ च विषवेगवशाद् भवतः, तथा चोक्तं वसन्तराजीये—

'वैवर्ण्यं वेपथुर्दाहः फेनः स्कन्धस्य भञ्जनम् ।
दुःखं जाड्यं मृतिश्चेति विषवेगाः स्युरष्टधा' ॥

सुश्रुते तु—"सर्वेषां सर्पाणां विषस्य सप्त वेगा भवन्ति—
धात्वन्तरेषु याः सप्त कलाः सम्परिकीर्त्तिताः ।
तास्वेकैकामतिक्रम्य वेगं प्रकुरुते विषम् ॥
येनान्तरेण तु कलां कालकल्पं भिनत्ति हि ।
समीरणेनोह्यमानं तत्तु वेगान्तरं स्मृतम्" ॥

विकारेण विषवेगजनितवातादिवैषम्येण, अशुभम् मृत्युचिह्नतयाऽमङ्गलम् कम्पादिकम्, दर्शितम् प्रकटीकृतम् ।

---

**राजा**—घबड़ाओ मत, सांपका काटना कभी निर्विषभी हो सकता है ।

**विदूषक**—कैसे न घबड़ाऊं ? । हमारी देह झिनझिना रही है ।

**( इतना कहकर विषवेगका अभिनय करता है )**

**धारिणी**—हाय, विकार अमङ्गलकी सूचना देरहे हैं । थामो इस ब्राह्मणको ।

**( परिव्राजिका झट पकड़ लेती है )**

**विदूषक**—( राजाकी ओर ताक कर ) लड़कपनसे मैं आपकी सेवामें रहाहूँ । इस बातको ध्यानमें रखकर मेरी अपुत्रा जननीकी खबर लेते रहना ।

स्सोम्हि । तं विआरिअ अपुत्ताए मे जणणीए जोगक्खेमं वहेहि । [ भोः, भवतो बाल्यादपि प्रियवयस्योऽस्मि । तं विचार्यापुत्राया मे जनन्या योगक्षेमं वह । ]

राजा—मा भैषीर्गौतम, स्थिरो भव । अचिरात्त्वां वैद्यश्चिकित्सिष्यति।

( प्रविश्य । )

जयसेना—देव, आणाविदो धुवसिद्धी विण्णावेदि इह एव्व आणीअदु सो गोदमो त्ति । [ देव, आज्ञापितो ध्रुवसिद्धिर्विज्ञापयति इहैवानीयतां स गौतम इति । ]

राजा—तेन हि प्रतिगृहीतमेनं तत्रभवतः सकाशं प्रापय ।

जयसेना—तहा । [ तथा । ]

विदूषकः—( देवीं विलोक्य । ) भोदि, जीवेअं वा ण वा । जं मए

---

बाल्यात् बाल्यकालात् प्रभृतीत्यर्थः । प्रियवयस्यः प्रियसुहृत् ।

तम् प्रियवयस्यभावम्, विचार्य मनसिकृत्य, अपुत्रायाः–( मयि विपन्ने पुत्रान्तराभावाच्च ) पुत्ररहितायाः, जनन्याः मातुः, अलब्धलाभो योगः, लब्धस्य रक्षणं क्षेमम् योगसहितं क्षेमम् योगक्षेमम्, शाकपार्थिवत्वान्मध्यमपदलोपी समासः वह धारय । सर्वतस्तत्त्वाऽवधानं विधेहीत्यर्थः ।

स्थिरः प्रकृतिस्थः, वैद्यः भिषक् चिकित्सिष्यति चिकित्सया विगतविषम् विधास्यति । अत्र चिकित्सिष्यतीत्येतावतैव तस्य कर्मणो वैद्यकार्यत्वे लब्धे पुनर्वैद्य-पदोपादानं तस्यार्थान्तरसङ्क्रमितत्वेनावन्ध्यचिकित्सत्वं व्यञ्जयति ।

आज्ञापितः भवदादेशयुक्तः, इहैव मदध्युषितदेशमेव ।

प्रतिगृहीतम् अवलम्ब्यमानम्, ( स्वयं गन्तुमसमर्थतया तथोक्तिः ) तत्रभ-वतः समधिकादरणीयस्य ध्रुवसिद्धेरित्यर्थः । सकाशं प्रापय समीपं नय । तथा यथा भवदादेशमेवानुतिष्ठामीत्यथः ।

---

राजा—गौतम, डरोमत, धीरजधरो, चिकित्सक तुम्हें शीघ्र चंगाकर देंगे ।

( जयसेना आकर )

जयसेना—आपका आदेश सुनकर ध्रुवसिद्धिने कहा कि गौतमको यहीं ले आवें।

राजा—तब इसे अवलम्बदेकर ध्रुवसिद्धिके समीप लेजाओ ।

विदूषक—( देवीकी ओर देखकर ) बच सकूँगा या नहीं यह सन्दिग्ध है । यदि

अत्तभवन्तं सेवमाणेण ते अवरद्धं तं मरिसेहि। [ भवति, जीवेयं वा न वा। यन्मयात्रभवन्तं सेवमानेन तेऽपराद्धं तन्मृष्यस्व । ]

देवी—दीहाऊ होहि। [ दीर्घायुर्भव । ]

( निष्क्रान्तो विदूषकः प्रतिहारी च । )

राजा—प्रकृतिभीरुस्तपस्वी ध्रुवसिद्धिमपि यथार्थनामानं सिद्धिमन्तं न मन्यते।

( प्रविश्य । )

जयसेना—जेदु जेदु भट्टा। धुवसिद्धो विण्णावेदि उदकुम्भविहाणेण सप्पमुद्दिअं किंपि कप्पिदव्वं। तं अण्णेसीअदु त्ति । [ जयतु जयतु भर्ता । ध्रुवसिद्धिर्विज्ञापयति उदकुम्भविधानेन सर्पमुद्रितं किमपि कल्पयितव्यम् । तदन्विष्यतामिति । ]

---

अत्रभवन्तम् राजानम्, सेवमानेन शुश्रूषमाणेन, ते अपराद्धम् तवानिष्टमाचरितम्, मृष्यस्व सहस्व क्षमस्वेति भावः।

प्रकृतिभीरुः स्वभावतो भयशीलः, तपस्वी शोच्यो गौतमः। ध्रुवसिद्धिम् अवन्ध्यचिकित्सतयान्वर्थनामानं वैद्यमुख्यम् अपि सिद्धिमन्तं न मन्यते व्यर्थचिकित्समुत्प्रेक्षते ( यदेवं कातरभावमवलम्ब्य विषादमनुभवतीत्यर्थः )।

उदकुम्भविधानेन विषवेगोपशमनार्थं क्रियमाणेन प्रकारेण । सर्पमुद्रितम् सर्पचिह्नसमायुक्तम्, किमपिद्रव्यम् । तदन्विष्यतां सर्पमुद्रालाञ्छितं किमपि द्रव्यमिति ध्रुवसिद्धिर्विज्ञापयतीत्याशयः ।

---

राजाकी सेवा करनेके कारण आपकेप्रति कुछ अपराध किया गया होतो मुझे क्षमा करना।

धारिणी—दीर्घायु हो। ( प्रतीहारी और विदूषकका प्रस्थान )

राजा—स्वभावभीरु गरीब ब्राह्मण ध्रुवसिद्धिकी चिकित्सामें भी अविश्वास करताहै।

( जयसेनाका प्रवेश )

जयसेना—जयहो महाराजकी, ध्रुवसिद्धिने कहा है कि उदकुम्भ विधानमें सर्पमुद्राकी आवश्यकता होगी, अतः सर्पमुद्राका अन्वेषण करवाया जाय।

धारिणी—इदं सप्पमुद्दिअं अङ्गुलीअअं। पच्छा मम हत्थे देहि णं। ( इत्यङ्गुलीयकं ददाति। ) [ इदं सर्पमुद्रितमङ्गुलीयकम्। पश्चान्मम हस्ते देह्यि तत्। ]

( प्रतिहारी गृहीत्वा स्थिता। )

राजा—जयसेने, कर्मसिद्धावाशु प्रतिपत्तिमानय।

प्रतीहारी—जं देवो आणवेदि। ( इति निष्क्रान्ता ) [यद्देव आज्ञापयति।]

परिव्राजिका—यथा मे हृदयमाचष्टे तथा निर्विषो गौतमः।

राजा—भूयादेवम्।

( प्रविश्य। )

जयसेना—जेदु देवो भट्टा। णिवुत्तविसवेगो गोदमो मुहुत्तेण पकि-

---

पश्चात् प्रयोजनसिद्धौ। मम हस्ते देहि मह्यमर्पय। एतेन देव्याः सावधानता व्यक्ता।

कर्मसिद्धौ गौतमस्य निर्विषत्वे सम्पन्ने। प्रतिपत्तिम् प्रवृत्तिम्, समाचारमित्यर्थः। आनय प्रापय ( श्रावय ) अथवा मुद्रायां लभ्यमानायां तां प्रदर्श्य मालविकाबकुलावलिकयोर्बन्धनान्मोचितयोः समाचारं श्रावयेत्यर्थः। 'प्रतिपत्तिः प्रवृत्तौ च' इति मेदिनी।

आचष्टे कथयति अनुमया बोधयतीति भावः। तथा तेन मन्य इति शेषः। निर्विषः निवृत्तविषवेगः। गौतमः विदूषकः।

भूयादिति लिङ् प्रार्थनायामाशिषि। एवम् अपगतविषवेगः।

---

धारिणी—यह है सर्पमुद्रायुक्त अंगूठी। पीछे मुझे लौटा देना।

( ऐसा कहकर अंगूठी देती है )

( प्रतीहारी अंगूठी लेकर जाती है )

राजा—कार्यसिद्धि होजाय तो शीघ्र खबर देना।

जयसेना—जो आज्ञा ( यह कहकर जाती है )

परिव्राजिका—हमारा हृदय कहता है कि गौतम निर्विष है।

राजा—ऐसाही हो। ( जयसेना का प्रवेश )

जयसेना—जयहो महाराजकी। गौतमका विषवेग उतर गया और वह शीघ्रही प्रकृतिस्थ होगये हैं।

दिट्ठो संवुत्तो । [ जयतु देवो भर्ता । निवृत्तविषवेगो गौतमो मुहूर्तेन प्रकृतिस्थः संवृत्तः । ]

धारिणी—दिट्ठिआ वअणीआदो मुत्तम्हि । [ दिष्ट्या वचनीयान्मुक्तास्मि । ]

प्रतीहारी—एसो उण वाहतओ अमच्चो विण्णवेदि । राअकज्जं बहु मन्तिदव्वं दंसणेण अणुग्गहं इच्छामि त्ति । [ एष पुनर्वाहतकोऽमात्यो विज्ञापयति । राजकार्यं बहु मन्त्रयितव्यं दर्शनेनानुग्रहमिच्छामीति । ]

धारिणी—गच्छदु अज्जउत्तो कज्जसिद्धीए । [ गच्छत्वार्यपुत्रः कार्यसिद्धये । ]

---

निवृत्तविषवेगः अपगतविषप्रकोपः । मुहूर्त्तेन अत्यल्पेन कालेन । प्रकृतिस्थः स्वस्थः ।

दिष्ट्या भाग्येन, वचनीयात् लोकापवादात् , मुक्ता विरहिता, यद्यद्य सर्पदंशेन विदूषको व्यपत्स्यत जनापवादममुं 'देव्या दर्शनार्थमुपहारकुसुमं चिन्वन् ब्राह्मणो गौतमो मृतः' इति मया दुर्वारोऽजास्यतेति ।

विज्ञापयति निवेदयति । राजकार्यम् राज्यावेक्षणसम्बन्धिकृत्यम् , मन्त्रयितव्यं विचारणीयं विद्यत इति शेषः । दर्शनेनानुग्रहमिच्छामि दर्शनमिच्छामीत्यर्थः । दर्शनेनानुग्रहमित्यत्र प्रकृत्यादित्वात् तृतीया 'प्रकृत्यादिभ्य उपसङ्ख्यानम्' इति वार्त्तिकेन । सा चाभेदार्था, तथा चोक्तमभियुक्तैः—

'प्रकृत्यादिगणाज्जाता तृतीया तु तदात्मताम् ।
अवच्छेदकताबुद्धिं प्रकारत्वादि शंसति' ॥ इति ।

तदात्मता अभेदः । तथा च यथा धान्येन धनवानित्यत्र धान्याभिन्नधनवानित्यर्थस्तथात्रापि दर्शनाभिन्नमनुग्रहमिच्छामीति दिक् ।

कार्यसिद्धये राजकार्यसम्पादनाय । एतेन राजकार्यस्य कार्यान्तरापेक्षया प्रथमसम्पाद्यतानिवेदनेन कर्त्तव्यजागरूकता देव्या व्यञ्जिता ।

---

धारिणी—भाग्यवश लोकापवादसे मुक्तहुई ।

प्रतीहारी—महामात्य वाहतकने पुनः सूचना दी है कि बहुतसे राजकार्य विचारणीय हैं, महाराजके दर्शनकी प्रार्थना है ।

धारिणी—महाराज राजकार्य देखने जावें ।

राजा—देवि, आतपाक्रान्तोऽयमुद्देशः। शीतक्रिया चास्या रुजः प्रशस्ता। तदन्यत्र नीयतां शयनम्।

देवी—बालिगाओ, अज्जउत्तवअणं अणुचिट्ठह। [ बालिकाः, आर्यपुत्रवचनमनुतिष्ठत। ]

परिजनः—तह। [ तथा। ]

( निष्क्रान्ता देवी परिव्राजिका परिजनश्च। )

राजा—जयसेने, मां गूढेन पथा प्रमदवनं प्रापय।

जयसेना—इदो इदो देवो। [ इत इतो देवः। ]

राजा—जयसेने, ननु समाप्तकरणीयो गौतमः।

---

अयमुद्देशः भवत्याऽधिष्ठीयमानोऽयं भागः गृहस्येति शेषः, आतपाक्रान्तः रविकिरणवान्, उष्ण इत्याशयः। शीतक्रिया शिशिर उपचारः, रुजः पीडायाः, प्रशस्ता उत्तमा। अन्यत्र वारितरविकिरणपाते, प्रच्छायशीतले। शयनीयं शय्या। अनुतिष्ठत कुरुत, आर्यपुत्रवचनमनुरुध्य मदीयं शयनीयमन्यत्र नयतेत्याशयः। तथा शय्यामन्यत्र नयामः।

गूढेन गुप्तेन, पथा मार्गेण। एतेन राज्ञोऽन्यदृश्यतेच्छाविरहनिवेदनेन शालीनतोक्ता।

समाप्तकरणीयः कृतकार्यः, मोचितमालविकाबकुलावलिक इति भावः। नन्विति प्रश्ने। अथ किम् विहिततदुद्धारत्वे गौतमस्य कीदृशः प्रश्नः, तत्कार्यस्य सम्पन्नत्वादिति भावः।

---

राजा—देवि, इधर धूप आरही है और इस रोगमें शीतोपचार अपेक्षित है, अतः शय्याका स्थान बदल दिया जाय।

धारिणी—परिचारिका गण, महाराजकी आज्ञा करो।

परिचारिकागण—अच्छी बात।

( देवी परिव्राजिका और परिजन वर्गका प्रस्थान )

राजा—जयसेने, मुझे गुप्त मार्गसे प्रमदवन ले चलो।

जयसेना—महाराज, इधरसे।

राजा—जयसेने, गौतमने अपना कार्य किया?

जयसेना—अह इं। [ अथ किम्। ]

राजा—इष्टाधिगमनिमित्तं प्रयोगमेकान्तसाध्यमपि मत्वा।
संदिग्धमेव सिद्धयै कातरमाशङ्कते हृदयम्॥ ५॥

( प्रविश्य। )

विदूषकः—वड्ढदु भवं। सिद्धाणि दे मङ्गलकम्माणि। [वर्धतां भवान्। सिद्धानि ते मङ्गलकर्माणि। ]

राजा—जयसेने, त्वमपि स्वं नियोगमशून्यं कुरु।

---

प्रश्नौचित्यमुपपादयति–इष्टाधिगमेति। इष्टाधिगमस्य अभिलष्यमाणपदार्थप्राप्तेः निमित्तं कारणीभूतमेकान्तसाध्यमङ्गीभूतसाधनीयम् ( एकान्तशब्दोऽवयवार्थे शब्दशास्त्रे प्रसिद्धः, साध्यस्यैकान्तत्वं प्रयोगाङ्गभावस्तेन प्रयोगाव्यभिचारिताऽत्र विवक्षिता ) निश्चयेन कार्यसाधकमित्यर्थः, प्रयोगमुपायम् मत्वा ज्ञात्वा अपि सिद्धौ लभ्यार्थसाधने संदिग्धमेव। एतेनोपायेन कार्यं सेत्स्यति न वेति संशयशीलमेव अत एव कातरं दुर्बलम् चेतः आशङ्कते कार्यसिद्धिं प्रति संशेते। अयमर्थः—अवश्यफलदमप्युपायं प्रयुज्य तत्साफल्ये संशय्य च कातरं हृदयं यावत् कार्यसिद्धि शङ्कामाचरत्येव, तेन यद्यपि मालविकाप्राप्तिविषये विदूषकोद्भावितोऽयमुपायोऽवश्यमेव तत्कार्यसाधकस्तथापि तत्प्राप्तिसिद्धौ तस्योपायस्य साफल्यं प्रति संशय्य कातरभावेन हृदयमाशङ्कत इति। एतेन राज्ञ उत्कण्ठातिशयो व्यञ्जितः। अत्र सामान्यादप्रस्तुतात् प्रस्तुतस्य विशेषस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः। आर्या जातिः॥ ५॥

सिद्धानि निष्पन्नानि, मङ्गलकर्माणि अभिलष्यमाणा अर्थाः। मालविकाबकुलावलिकयोरुद्धारो जात इति भावः।

नियोगं नियुक्तिम् ( अन्तःपुरद्वाररक्षारूपं कार्यं यदुद्दिश्य तव नियुक्तिः कृता ), अशून्यं सार्थकम्। इदानीं विदूषकस्य मिलितत्वेन तेनैव कार्यचालनादित्थमादेशः।

---

जयसेना—और क्या?

राजा—अभिलषित वस्तुपानेके लिये अत्यन्त उपयुक्त उपाय करके भी कार्यसिद्धिके विषयमें लोगोंका हृदय साशङ्कही रहा करता है॥ ५॥

विदूषक—( प्रवेश करके ) जयहो आपकी। आपके मङ्गलकार्य सिद्ध होगये।

राजा—जयसेने, तुम अपना कार्य करो।

जयसेना—जं देवो आणवेदि । ( इति निष्क्रान्ता । ) [ यद्देव आज्ञापयति । ]

राजा—गौतम, क्षुद्रा माधविका । न खलु किंचिद्विचारितमनया ।

विदूषकः—देवीए अङ्गुलीअअमुद्दिअं देक्खिअ कहं विआरेदि ।
[ देव्या अङ्गुलीयकमुद्रां दृष्ट्वा कथं विचारयति । ]

राजा—न खलु मुद्रामधिकृत्य ब्रवीमि । एतयोर्द्वयोः किंनिमित्तो मोक्षः । किं वा देव्याः परिजनमतिक्रम्य भवान्संदिष्ट इत्येवमनया प्रष्टव्यम् ।

विदूषकः—ण पुच्छिदोम्हि । पुणो मन्दस्स मे तस्सिं पच्चुप्पण्णा मदी ।
[ ननु पृष्टोऽस्मि । पुनर्मन्दस्य मे तस्मिन्प्रत्युत्पन्ना मतिः । ]

---

माधविका सारभाण्डगृहरक्षाऽधिकृता काचन देव्याः परिचारिका । क्षुद्रा अविवेका । ( येन ) अनया माधविकया । न विचारितम् त्वया मुद्राप्रदर्शनपूर्वकं मालविकाबकुलावलिकयोर्मोचने प्रार्थ्यमाने न संशयितमिति प्रकामबुद्धिदारिद्र्यं तस्याः क्षुद्रत्वं बोध्यमित्याशयः ।

कथं विचारयति विचारावसरस्यालाभादिति भावः ।

परिजनम् समीपवासिदासीजनम्, अतिक्रम्य परित्यज्य । भवान् आदरणीयः पत्युः सखा ब्राह्मणो मदीयप्रियकरत्वेन सन्दिह्यमानश्च । सन्दिष्टः मोचनकर्मण्यादिष्टः । तया माधविकया । प्रष्टव्यम् प्रष्टुं प्राप्तकालम् उचितमासीदिति यावत्, प्राप्तकाले कृत्यप्रत्ययः प्रष्टव्यमित्यत्र ।

ननु निश्चयेन पृष्टः अनुयुक्तः, निश्चयेन पृष्टवती माधविकाऽतोऽसौ न निन्दापात्रमिति भावः । ननु तया तथा पृष्टे भवतः कार्यसिद्धिर्नाभविष्यत् तदुत्तरस्य पूर्वतश्चिन्तितत्वाभावेनास्फूर्तेरत आह—प्रत्युत्पन्नेति । अवसरप्ररूढा प्रत्युत्पन्ना । मन्दस्यापि मम तस्मिन्समये स्फूर्त्तिः सद्यः समयोचितोत्तरप्रदाने साहायकमाचरितवतीति भावः ।

---

जयसेना—जो आज्ञा । ( ऐसा कहकर प्रस्थान )

राजा—गौतम, क्या मूढ़ा माधविकाने कुछ नहीं विचारा ।

विदूषक—देवी की मुहर देखकर क्या विचारती ?

राजा—मैं मुहरके विषयमें कुछ नहीं कहता । इन दोनोंको क्यों छोड़ा जारहाहै ? अपने परिजनको नहीं भेजकर देवीने तुम्हें क्यों भेजा ? यहभीतो उसे पूछ लेना था ।

विदूषक—पूछातो थाही । लेकिन मन्दभी हूँ पर उतनेभर लायक बुद्धि है ।

राजा—कथ्यताम् ।

विदूषकः—भणिदं मए । देव्वचिन्तएहिं विण्णाविदो राआ । सोवसग्गं वो णक्खत्तं । ता अवस्सं सव्वबन्धमोक्खो करीअदु त्ति । [ भणितं मया । दैवचिन्तकैर्विज्ञापितो राजा । सोपसर्गं वो नक्षत्रम् । तदवश्यं सर्वबन्धनमोक्षः क्रियतामिति । ]

राजा—( सहर्षम् । ) ततस्ततः ।

विदूषकः—त सुणिअ देवीए इरावदीए चित्तं रक्खन्तीए राआ किल मोएदि त्ति अहं संदिट्ठो त्ति । तदो जुज्जदि त्ति ताए एव्वं संपादिदो अत्थो । [ तच्छ्रुत्वा देव्या इरावत्याश्चित्तं रक्षन्त्या राजा किल मोचयतीत्यहं संदिष्ट इति ।

---

कथ्यताम् प्रत्युत्पन्नया मत्या किमुत्तर कल्पितमित्युच्यताम् ।

भणिता उक्ता सा माधविकेति शेषः । दैवचिन्तकैः दैवज्ञैः, वः युष्माकम् नक्षत्रम् जन्मकालिकताराः, सोपसर्गम् पापग्रहोपद्रवविशिष्टम्, तथात्वे च देहधनयोरन्येषां च चिन्तितार्थानां विपत्तिः सम्भविनीति भावः । तत् तस्मात्कारणात्, सर्वेषाम् अखिलानाम् ( बद्धानाम् ) बन्धमोक्षः बन्धनान्मोचनम्, क्रियताम् विधीयताम् । पूर्वोक्तस्य भणितेत्यस्यैतद्वाक्यार्थः कर्म । सर्वबन्धमोक्षणादेशेन तत्पापग्रहोपद्रवः शाम्येतेति प्रसङ्गार्थः ।

'उपसर्गः स्मृतो रोगभेदोपप्लवयोरपि' इति विश्वकोषः ।

पापग्रहेण जन्मतारोपद्रवे दोषमाह—

'ईहादेहार्थहानिः स्याज्जन्मर्क्ष उपतापिते ।'

बन्धमोक्षेण शान्तिमाह शान्तिपर्वणि—

'बन्धमोक्षे सर्वशान्तिर्नृपाणामुपजायते' इति ।

देव्या धारिण्या, इरावतीचित्तम् इरावतीहृदयं रक्षन्त्या तन्मनःप्रतिकूलमर्थमनाचरन्त्येति भावः । मोचयति बन्धनात् परित्यजति । अहम् विदूषकः सन्दिष्टः

---

राजा—बताओ ।

विदूषक—मैंने कह दिया कि ज्यौतिषियोंने राजाके ग्रह खराब बताए हैं, अतः सभी बन्दी मुक्त किये जाते हैं इसीसे उसकी शान्ति होगी ।

राजा—( हर्षसे ) तब ।

विदूषक—ऐसा सुनकर देवीने इरावतीका दिल रखनेके लिये अपने परिजनको

ततो युज्यत इति तथैवं संपादितोऽर्थः । ]

राजा—( विदूषकं परिष्वज्य । ) सखे, प्रियोऽहं खलु तव ।

नहि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।
कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते ॥ ६ ॥

विदूषकः—तुवरदु भवं । समुद्दघरए सहीसहिदं मालविअं ठाविअ

---

मोचयितुमङ्गुलीयकमुद्राप्रदर्शनार्थमादिष्टः । प्रमदवने मालविकया सह राज्ञः प्रेमालापमवलोक्य नितान्तकोपनया देव्येरावत्याऽनुरुध्यमाना धारिणी देवी मालविकाबकुलावलिकयोः सारभाण्डगृहे बन्धनमादिष्टवतीदानीं तदनुज्ञामन्तरेण तयोर्मोचने धारिण्याऽऽदिष्टे तस्या मनोमालिन्यं स्यात् , दैवज्ञादेशानुरोधिराजकर्तृकमोचने तु तन्न सम्भवति । किञ्च धारिणीपरिचारिकाभिरन्यतमयास्मिन्नर्थे साध्यमाने देव्या धारिण्या अभिप्रायोऽपि मोचनपक्षपातितयोत्प्रेक्ष्येत, अत एव राजोपद्रवनिवर्तककर्मणि राजाज्ञया प्रवृत्तो विदूषक एवात्र सन्दिष्टो धारिण्येति माधविकां प्रति वञ्चनवचनं बोध्यम् । युज्यते युक्तियुक्तो भवदुक्तोऽर्थः, ( इति मन्यमानया ) तया माधविकया अर्थः मालविकाबकुलावलिकयोर्मोचनरूपः सम्पादितः अनुष्ठितः ।

परिष्वज्य प्रसादातिशयादालिङ्ग्य ।

नहि बुद्धिगुणेनेति । सुहृदां प्रियमित्राणाम् बुद्धिगुणेनैव केवलेन मतिवैभवेनैव अर्थदर्शनम् कार्यसिद्धिरूपप्रयोजनसाक्षात्कारः न भवतीति शेषः, किन्तु स्नेहेनापि प्रेम्णाऽपि सूक्ष्मः दुर्बोधः साधारणजनैरज्ञेयः ( अतिकठिनः ) कार्यसिद्धिपथः प्रयोजनसाधनोपायः उपलभ्यते उद्भाव्यते । बुद्धिवैभवस्नेहाभ्यां मिलिताभ्यामेव लोकः सुहृत्कार्यं साधयति न केवलेन मतिविभवेन, स्नेहं विना तादृशाचौरभावादनवधानतादिसम्भवात् । अतस्त्वया मम महदिदं कार्यं साधयता सिद्धीकृतं निजस्य मत्प्रियत्वमिति भावः । अत्र सामान्यादप्रस्तुतात् प्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः॥६॥

---

न भेजकर मुझे भेजा है, जिससे इरावती यह समझे कि राजाही मुक्त कर रहे हैं ।

राजा—( विदूषकसे लिपटकर ) सखे, तुम मुझे प्यार करते हो ।

केवल बुद्धिबलसे मित्रका काम नहीं सिद्ध किया जासकता है, प्रणय के द्वाराही सूक्ष्म मार्ग देखा जाता है ॥ ६ ॥

विदूषक—आप शीघ्रता करें, समुद्र गृहमें सखी समेत मालविकाको बैठाकर मैं आपकी खोजमें निकला था ।

भवन्तं पच्चुग्गदोम्हि। [ त्वरतां भवान्। समुद्रगृहे सखीसहितां मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि। ]

राजा—अहमेनां संभावयामि। गच्छाग्रतः।

विदूषकः—एदु भवं ( परिक्रम्य। ) एदं समुद्दघरं। [ एतु भवान्। इदं समुद्रगृहम्। ]

राजा—( साशङ्कम्। ) वयस्य, एषा कुसुमावचयव्यग्रहस्ता सख्यास्ते परिचारिका चन्द्रिका संनिकृष्टमागच्छति। इतस्तावदावां भित्तिगूढौ भवावः।

विदूषकः—अहो, कुम्भीलएहिं कामुएहिं च परिहरणीआ क्खु चन्दिआ। [ अहो, कुम्भीलकैः कामुकैश्च परिहरणीया खलु चन्द्रिका। ]

---

त्वरताम् शीघ्रतां करोतु, समुद्रगृहके समुद्रनामके गृहविशेषे, तादृगाख्याकारणन्तु समुद्रवत् प्रवेष्टुमसौकर्यवत्त्वात्, शीतलत्वात्, आयतत्वात्, कुतोप्यन्यतो वा हेतोः समुद्रसादृश्यप्रतिभानमेव। सखीसहिताम् मालविकाम् बकुलावलिकाद्वितीयान्तामित्यर्थः। प्रत्युद्गतोऽस्मि समागतोऽस्मि।

सम्भावयामि दर्शनेन सम्मानयामि, एतेनोत्कण्ठा व्यञ्जिता।

परिक्रम्य कतिचन चरणन्यासान् विधाय। एतेन तस्य स्थानस्य समीपवर्त्तितोक्ता।

एषा पुरो दृश्यमाना, कुसुमानां पुष्पाणाम् अवचये सङ्ग्रहणे व्यग्रौ सव्यापारौ हस्तौ करौ यस्यास्तादृशी पुष्पाण्यवचिन्वतीत्यर्थः। ते तव सख्याः इरावत्याः परिचारिका दासी चन्द्रिका तदभिधाना, सन्निकृष्टम् आवयोः समीपम्। इतः अस्यां दिशि, तावत् यावदियमपसरति तावत्। भित्तिः कुड्यम्, तत्र गूढौ प्रच्छन्नौ। कुड्यप्रच्छन्नदेहतयाऽदृश्यावित्यर्थः।

कुम्भीलकैः चौरैः, कामुकैः परस्त्रीरसिकैः सामान्यवनिताऽऽसक्तैर्वा, चन्द्रिका

---

राजा—मैं अभी चलकर उसका आदर करता हूँ। आगे चलो।

विदूषक—आइए आइए महाराज, ( कुछ चलकर ) यही समुद्र गृह है।

राजा—( साशङ्क ) सखे, तुम्हारी सखी इरावतीकी दासी यह चन्द्रिका फूल चुनती हुई समीप आरही है, आओ, हम दोनों इधर दीवारकी ओटमें छिपजांय।

विदूषक—चोरको और कामुकको तो चन्द्रिकासे बचनाही चाहिए।

( उभौ यथासमर्थितं कुरुतः । )

राजा—गौतम, कथं नु ते सखी मां प्रतिपालयति । एहि । एनां गवाक्षमाश्रित्य विलोकयामि ।

विदूषकः—तह । [ तथा । ]

( उभौ विलोकयन्तौ तिष्ठतः । )

( ततः प्रविशति मालविका बकुलावलिका च । )

बकुलावलिका—सहि, पणम भट्टारं । [ सखि, प्रणम भर्तारम् । ]

---

परिहरणीया वर्जनीया । चन्द्रिकायां समवहितायां तेषामुद्देश्यस्यैवासिद्धेरित्थं परिहासः । एतेन राज्ञो गुप्तप्रणयिताऽनिजता चिन्तोक्ता । अत्राप्रस्तुतात् कामुकसामान्यात् प्रस्तुतराजरूपविशेषकामुकप्रतीतेरप्रस्तुतप्रशंसा, तथाऽप्रस्तुतप्रस्तुतयोः कुम्भीलककामुकयोरेकत्र चन्द्रिकाऽपहरणक्रियायामन्वयेन दीपकम्, किञ्च चन्द्रमयूखपरिचारिकयोर्भेदेऽपि चन्द्रिकाशब्दगतश्लेषेणाभेदाध्यवसायादतिशयोक्तिस्तदेतेषामङ्गाङ्गिभावेन सङ्करः ।

यथासमर्थितम् अवधारितपूर्वम्, कुड्यान्तराले स्वप्रच्छादनमित्यर्थः ।

ते तव सखी मालविका, मां प्रतिपालयति प्रतीक्षते, एनाम् मालविकाम् अवलोकयामि, ( मयि समक्षमागते सा त्रपेत, तथा च सति तस्या अकृत्रिमावस्थानसमेधितं सौन्दर्यं द्रष्टुं नावसरं लभेय, तत्कियन्तं कालमेनां गवाक्षविवरार्पितया दृष्ट्या विलोकयामीति राज्ञोऽभिप्रायः ) ।

तथा यथाभवदुक्तमेव भवत्वित्यर्थः ।

भर्त्तारम् राजानम् ।

---

[ दोनों छिप जाते हैं ]

राजा—गौतम, तुम्हारी सखी मालविका हमारी प्रतीक्षा कैसे करती है ? आओ, खिड़कीसे उसे देखें ।

विदूषक—बहुत अच्छा । ( दोनों देखते हैं )

[ मालविका और बकुलावलिकाका प्रवेश ]

बकुलावलिका—सखि, महाराजको प्रणामकर ।

मालविका--णमो दे, जो पासदो पिठ्ठदो पेक्खीअदि। [ नमस्ते, यः पार्श्वतः पृष्ठतश्च प्रेक्ष्यते । ]

राजा--शङ्के मे प्रतिकृतिं निर्दिशति ।

मालविका--( सहर्षं द्वारमवलोक्य । ) सहि, मं विप्पलम्भेसि । [ सखि, मां विप्रलम्भयसि । ]

राजा--हर्षविषादाभ्यामत्रभवत्याः प्रीतोऽस्मि ।

सूर्योदये भवति या सूर्यास्तमये च पुण्डरीकस्य ।
वदनेन सुवदनायास्ते समवस्थे क्षणादूढे ॥ ७ ॥

---

पार्श्वतः वामदक्षिणभागयोः पृष्ठतः पश्चाद्देशे, प्रेक्ष्यते दृश्यते। एतेन तस्या राजगतचित्तता व्यक्ता, भवन्ति च तस्यां स्थितौ तादृशा व्याहाराः, यथा—पृष्ठतश्च पुरतश्च दृश्यते पात्रतां न पुनरेति चक्षुषः।………कोऽयमालिवनमालिनः क्रमः॥

प्रतिकृतिम् चित्रम्, निर्दिशति लक्ष्यीकृत्य प्रणमतीति भावः। एतेन तत्र गृहे प्रतिभित्ति राज्ञश्चित्रमासीदिति व्यज्यते ।

विप्रलम्भयसि प्रतारयसि। राजन्यनुपस्थितेऽपि तत्प्रणामादेशोऽत्र वञ्चना, अत्रभवत्याः माननीयायाः मालविकाया इत्यर्थः।

हर्षविषादाभ्याम् आनन्दपरितापाभ्यां भावविशेषाभ्याम् प्रीतः प्रसन्नः। अत्र-राजदर्शनलाभाशया हर्षस्तदभावेन च विषाद इत्युन्नेयम्।

सूर्योदये भवतीति। पुण्डरीकस्य कमलस्य सूर्योदये सूर्यकर्तृकप्राचीदिगवस्थितस्थानविशेषप्राप्तौ या विकासरूपा प्रभोद्भेदुराऽवस्था सूर्यास्तमये सूर्यस्यास्तकाले च मुद्रणरूपावस्था ते विकासमुद्रणात्मके समवस्थे दशे सुवदनायाः सुमुख्याः मालविकायाः वदनेन मुखेन क्षणात् एकस्मादेव मुहूर्तात् ऊढे अधिगते। अयमर्थः--

---

मालविका—तुमको नमस्कार-जिसे अपने आगे और पीछे देखा करती हूँ।

राजा—मालूम पड़ता है हमारे चित्रको कहरही है।

मालविका—( सानन्द दरवाजेकी ओर देखकर ) सखि, तुमने हमें धोखा दिया।

राजा—प्रिया मालविकाके इस हर्ष और विषादसे बड़ी खुशी हुई। सूर्योदय और सूर्यास्तके समयमें कमलकी जो दो अवस्थाएं होती हैं, इस सुमुखी मालविकाके मुखने एकही क्षणमें उन दोनों अवस्थाओंको धारण कर लिया॥ ७॥

बकुलावलिका—णं एसो चित्तगदो भट्टा। [ नन्वेष चित्रगतो भर्ता। ]

उभे—( प्रणिपत्य। ) जेदु भट्टा। [ जयतु भर्ता। ]

मालविका—हला, तदा संभमदिट्ठे भट्टिणो रूवे जहा ण वितिण्हम्हि, तहा अज्जवि मए भाविदो अवितिण्हदंसणो भट्टा। [ सखि, तदा संभ्रमदृष्टे भर्तू रूपे यथा न वितृष्णास्मि, तथाद्यापि मया भावितोऽवितृष्णदर्शनो भर्ता। ]

विदूषकः—सुदं भवदा। तत्तहोदी चित्तं जहा दिट्ठो तहा दिट्ठो भवं त्ति मन्तेदि। मुद्धा दाणिं मञ्जूसा विअ रअणभण्डअं जोव्वणगव्वं वहेसि।

---

यथा कमलं प्रातर्विकसति सायञ्च सङ्कोचमञ्चति, तद्विकाससङ्कोचयोः स्वप्रियसूर्यदर्शनादर्शनायत्तत्वात्तथैवास्या मालविकाया मुखमपि युगपदेव मद्दर्शनाशया प्रसन्नं मद्दर्शनाभावेन च विषण्णमभूदिति। तदेतस्या वदने युगपदवस्थाद्वयावाप्तिरूपविशेषोपलम्भापादितमाधुरीदर्शनेन स्मीतोऽस्मीति। अत्र कमलावस्थाया वदनेन वहनस्यासम्भवात् पुण्डरीकसमवस्थे इव समवस्थे वदनेनोढे इति सादृश्याक्षेपात् असम्भवद्वस्तुसम्बन्धनिबन्धना निदर्शनाऽलङ्कारः। द्विःसूर्यपदोपादानात् कथितपदता तु परत्र सर्वनाम्ना निर्दिश्य पाठभेदेन परिहरणीया। आर्या वृत्तम् ॥ ७ ॥

नन्विति मालविकासम्बोधने, चित्रगतः आलेख्यलिखितः, भर्त्ता राजा अतस्त्वां विप्रलम्भयामीति वृथा सम्भावना त्वया न कार्येति भावः।

तदा प्रमदवनगताशोकतरुतले प्रथमदर्शने सम्भ्रमेण भावावेशकृतया त्वरया दृष्टे आलोकिते, भर्त्तुः राज्ञः, रूपे सौन्दर्ये, वितृष्णा शान्ताकाङ्क्षा नास्मीत्यन्वयः। अद्यापि चित्रसन्निवापितराजावलोकनावसरेऽपि अवितृष्णदर्शनः अनिराकाङ्क्षदर्शनः भावितः तर्कितः। अयमर्थः—प्रथमसाक्षात्कारे सम्भ्रमवशादसमाहितदृशा निपीतराजरामणीयकाया मम दर्शनतृषा नाशाम्यत्, परमधुनाऽऽलेख्यगतस्याप्यस्य स्थिरतया दर्शने जातेऽपि सैव सतृष्णतेति विचित्रमेतदीयं सौन्दर्यमिति। एतेन मालविकायाः सानुरागता व्यञ्जिता।

---

बकुलावलिका—अरी, यही न इस चित्रमें महाराज हैं।

दोनों—( प्रणाम करके ) जयहो महाराज की।

मालविका—सखि, उस समय शीघ्रता वश महाराजके सौन्दर्यको जीभर कर नहीं देख सकी, आज भी मुझे वैसाही लगरहा है, महाराजके दर्शनकी प्यास मिटतीही नहीं।

[ श्रुतं भवता। तत्रभवती चित्रे यथा दृष्टस्तथा दृष्टो भवानिति मन्त्रयति। मुधेदानीं मञ्जूषेव रत्नभाण्डं यौवनगर्वं वहसि। ]

राजा—सखे, कुतूहलवानपि निसर्गशालीनः स्त्रीजनः। पश्य—

कार्त्स्न्येन निर्वर्णयितुं च रूपमिच्छन्ति तत्पूर्वसमागमानाम्।
न च प्रियेष्वायतलोचनानां समग्रवृत्तीनि विलोचनानि ॥ ८ ॥

---

श्रुतम् आकर्णितम्, मालविकोक्तमिति कर्म। यथा येन प्रकारेण ( सस्नेहमानसेन ) अत्रभवती मालविका। तथा तेन प्रकारेण ( तत्तुल्येनैवानुरागेण ) दृष्टो ननु किम्? नावलोकितः किम्? यया दृशा त्वमपश्यस्तां तयैव दृशा (सानुरागया सञ्जातकामविकारया च ) सा त्वामपि दृष्टवतीति तुल्यानुरागता युवयोस्तदत्रान्यचित्तता न सम्भाव्यत इति भावः। सम्प्रति तुल्यानुरागतां द्रढयित्वा करणीयमुपदिशन्निवाह—मुधेति। इदानीम् मालविकाया अपि त्वद्गतचित्ततायां निश्चये वृत्ते मञ्जूषा रत्नभाण्डम् ( रत्नगर्वमिव ) त्वम् यौवनगर्वम् युवभावावलेपम् वृथा व्यर्थं वहसि धारयसि। मञ्जूषा यथा रत्नानि दधानापि तत्कृतेन गुणेन दोषेण वा-णुमात्रमपि न सम्बध्यते तथा त्वमपि यौवने वर्त्तमानः स्वयं कामार्त्तः कामार्त्तामपि तां न सम्भावयन् वृथयसि यौवनमिति भावः। एतेनास्याः संभोगाय त्वाप्रियस्वेत्यनुरुध्यते।

कुतूहलवान् उत्कण्ठायुक्तोऽपि स्त्रीजनः वनिताजातिः निसर्गशालीनः स्वभावतो लज्जाशीलः, एतेन मालविकाया उत्कण्ठितत्वमनुमायापि हठान् मयि प्रवर्त्तमानेऽतिशालीनमतिः सा त्रपेत मदुद्यमश्च व्याहन्येतेतिभावः। स्वोक्तार्थं द्रढयितुमाह—पश्येति। अग्रगतपद्यवाक्यार्थः कर्म।

कार्त्स्न्येनेति। तत्पूर्वसमागमानाम् स एव पूर्वः प्रथमोऽपूर्वः समागमो मिलनं येषां तेषां प्रथमतो दृष्टानाम् ( प्रियतमनायकानाम् ) रूपं सौन्दर्यम् कार्त्स्न्येन कृत्स्नभावेन सर्वप्रकारेण निर्वर्णयितु द्रष्टुमिच्छन्ति कामयन्ते, ( किन्तु ) आयतलोचनानां

---

विदूषक—महाराज, सुना आपने? मालविकाको आपने जिस दृष्टिसे देखा, क्या आपको उसने उसी दृष्टिसे नहीं देखा? 'पिटारी' जिस तरह रत्नगर्व धारणकरे उसी तरह आप व्यर्थ जवानीका गर्व रखते हैं।

राजा—सखे, उत्कण्ठित होनेपर भी स्त्रियां बड़ी लज्जाशील हुआ करती हैं।

विशाललोचना ललनाएं अपने प्रियतमका वह सम्पूर्ण रूप देखना चाहतीतो हैं, जिसे अंशतः देखे रहती हैं, किन्तु समस्त दृष्टि डाल नहीं पाती हैं ॥ ८ ॥

मालविका—हला, का एसा पासपरिउत्तमुहेण भट्टिणा सिणिद्धाए दिट्ठीए णिज्झाईअदि । [ सखि, कैषा पार्श्वपरिवृत्तमुखेन भर्त्रा मे स्निग्धया दृष्ट्या निध्यायते । ]

बकुलावलिका—णं इअं पासगदा इरावदी । [ नन्वियं पार्श्वगतेरावती । ]

मालविका—सहि, अदक्खिणो विअ भट्टा मे पडिभादि । जो सव्वं देवीजणं उज्झिअ एक्काए मुहे बद्धलक्खो । [ सखि, अदक्षिण इव भर्ता मे प्रतिभाति । यः सर्वं देवीजनमुज्झित्वैकस्या मुखे बद्धलक्ष्यः । ]

बकुलावलिका—( आत्मगतम् । ) चित्तगदं भट्टारअं परमत्थदो संकप्पिअ असूअदि । होदु । कीडिस्सं दाव एदाए । ( प्रकाशम् । ) हला,

---

विशालनेत्राणां वनितानाम् नेत्राणि नयनानि च प्रियेषु स्वप्रियतमविषये समग्रवृत्तीनि समग्रभावेन निपतनशीलानि न ( भवन्ति ) कोणमात्रार्पणात् । ललनाजनो हि प्रियरूपमाधुरीपिपासुरपि शालीनतया नेत्रत्रिभागमेव तत्रार्पयतीति भावः । अत एव चेयं मद्रूपविषये स्वस्या अवितृष्णतामुक्तवती । अत्राप्रस्तुतात् स्त्रीसामान्यात् विशेषरूपाया मालविकायाः प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः । उपजातिश्छन्दः, तल्लक्षणन्तु 'स्यादिन्द्रवज्रा यदि तौ जगौ गः', 'उपेन्द्रवज्रा जतजास्ततो गौ' । 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' ॥ इति ॥ ८ ॥

पार्श्वपरिवर्त्तितवदनेन पार्श्वदेशवक्रीकृतग्रीवतया विवृत्तवदनेन । स्निग्धया स्नेहसनाथया, निध्यायते सानुरागमालोक्यते । एतेन तस्याः स्त्रीस्वभावसुलभ ईर्ष्याभाव उक्तः । 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः ।

पार्श्वगता एकभागावस्थिता ।

अदक्षिणः शठः, देवीजनम् स्त्रीवर्गम् , उज्झित्वा विसृज्य । अत्र राज्ञो भार्यान्तरत्यागपूर्वकमेकत्र बद्धलक्ष्यतया तत्र शठत्वशङ्का, शठनायकलक्षणं यथा दर्पणे— 'शठोऽयमेकत्र बद्धभावो यः । दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति' ॥ इति ।

---

मालविका—इधरघूमकर महाराज प्रेमभरी चितवनसे किसे निहार रहे हैं ?

बकुलावलिका—वह राजाकी पार्श्ववर्त्तिनी इरावती है ।

मालविका—राजा मुझे समदृष्टि नायक नहीं मालूम पड़ रहे हैं, क्योंकि वह सभी रानियों को छोड़कर एक स्त्रीपर ललचायी आखों से देख रहे हैं ।

बकुलावलिका—( स्वगत ) चित्रित महाराजको वास्तविक मानकर वह ईर्ष्या

**भट्टिणो वल्लहा एसा।** [ चित्रगतं भर्तारं परमार्थतः संकल्प्यासूयति । भवतु क्रीडिष्यामि तावदेतया । सखि, भर्तुर्वल्लभैषा । ]

मालविका—तदो किं दाणिं अत्ताणं आआसइस्सं। ( इति सासूयं परावर्तते । ) [ ततः किमिदानीमात्मानमायासयिष्यामि । ]

राजा—सखे, पश्य ।

भ्रूभङ्गभिन्नतिलकं स्फुरिताधरोष्ठं
सासूयमाननमितः परिवर्तयन्त्या ।

---

चित्रगतम् आलिखितमूर्त्तिम्, परमार्थतः सत्यभावेन, सङ्कल्प्य उत्प्रेक्ष्य, असूयति असूयाख्यं भावमाविष्करोति । एतेन बकुलावलिकाया वचनेन मालविकाया मुग्धतासहचारी स्नेहनिर्भरभाव उक्तः । क्रीडिष्यामि विनोदमाचरिष्यामि, एतया मालविकया । मालविका चित्रगतस्यापि राज्ञो नारीविशेषासक्तिमुत्प्रेक्ष्य यदसूयति तदाधारेण पुनरर्थान्तरमवतार्य वाकोवाक्यप्रसङ्गेनानन्दमनुभविष्यामीति बकुलावलिकाशयः, हलेति सखीसम्बोधने । भर्त्तुः-राज्ञः, वल्लभा परिग्रहान्तरापेक्षया प्रिया, एषा यामुद्दिश्य विवृत्तवदनो भर्त्ता सा ।

ततः तदा, किम् किमर्थम्, आत्मानम् स्वाम्, आयासयिष्यामि राज्ञे स्वसमर्पणश्रमेण कदर्थयिष्यामि । अयमर्थः—मया मालविकया राज्ञोऽनेकमहिलासु समरागत्वरूपं दाक्षिण्यमाकर्णितमाशंसितञ्चात एवात्मात्र कण्टकमये प्रेमपथ इयतीमतिभूमिमानीतोऽधुना तस्यैकत्राललनाजने समधिकानुरागवत्ताया निश्चये जाते तस्मै स्वसमर्पणं परिणामदुरन्तमुत्प्रेक्ष्य इति वृथा तथाप्रयासेनेति । सासूयम् असूयाख्येन भावेन सह परावर्त्तते चित्रदर्शनान्निवर्त्तितलोचना जायत इति भावः ।

भ्रूभङ्गभिन्नेति । अनया पुरो वर्त्तमानया मालविकया नाम तव सख्या भ्रुवोः भङ्गेन कौटिल्येन ( कोपव्यञ्जकचेष्टाविशेषेण ) भिन्नम् मिलितम् तिलकम् ललाट-

---

**कर रही है। अच्छा, जरा इससे मजाक करूं। ( प्रकाश ) अरे, यही तो महाराज की चितचाही है ।**

**मालविका—यदि यही बात है तो व्यर्थ क्यों हैरान होऊं। ( ऐसा कहकर मुंह घुमाकर बैठ जाती है )**

**राजा—सखे, देखो देखो, ।**

**जिसमें भौहें टेढ़ी करनेसे तिलक वट जाता है, और अधर कांप रहे हैं, ऐसे**

कान्तापराधकुपितेष्वनया विनेतुः
संदर्शितेव ललिताभिनयस्य शिक्षा ॥ ९ ॥

विदूषकः—अणुणअसज्जो दाणिं होहि । [ अनुनयसज्ज इदानीं भव । ]

मालविका—अज्जगोदमो एत्थ एव ससेवदि णं । ( पुनः स्थानान्तराभिमुखी भवितुमिच्छति । ) [ आर्यगौतमोऽत्रैव संसेवत एनाम् । ]

---

तटविन्यस्तचित्रकम् यत्र तादृशम्, अथ च स्फुरितः स्पन्दशाली अधरोष्ठः निम्नवर्ती रदनच्छदो यत्र तादृशम्, आननम् मुखम् इतः चित्रप्रदेशात् सासूयम् ईर्ष्यया परिवर्त्तयन्त्या अपसारयन्त्या कान्तस्य पत्युः अपराधेन परस्त्रीसङ्गमादिना प्रणयापराधेन ( हेतुना ) कुपितेषु ( करिष्यमाणतयोपदिष्टेषु ) कोपेषु विषयभूतेषु विनेतुः शिक्षयितुराचार्यगणदासस्य ललिताभिनयस्य मनोहराया भ्रूसङ्कोचनाधरस्पन्दनादिचेष्टायाः शिक्षा उपदेशः सन्दर्शिता प्रकटीकृता इव । चित्रगतस्य मम नायिकाविशेषानुरागवत्तां निश्चयभावेनावगम्येर्ष्यया कलुषितान्तःकरणेयं मालविका यदन्यतो दृष्टिं क्षिपति स्पन्दमानाधरा चास्ति, तेन तस्याः शिक्षकस्य तस्यै ललिताभिनयशिक्षासाफल्यमुपगतत्वेन प्रमाप्यत इति भावः । उत्प्रेक्षाऽलङ्कारः । कुपितेष्विति भावे क्तः । ललिताभिनयस्येति कर्मणि षष्ठी । वसन्ततिलकं वृत्तम्—उक्तं वसन्ततिलकं तभजा जगौ गः' इति च तल्लक्षणम् ॥ ९ ॥

अनुनयः कोपशमनो व्यापारः, तत्र सज्जः सन्नद्धः । एतां कामयमानस्य पुनरेनया काम्यमानस्य च तवावश्यमनया विवाहो जायेत यदीयं कोपं जह्यादतस्तच्छमनं कमप्युपायं कर्त्तुं तत्परो भवेति भावः । तदुपायाश्च दर्पण उक्ताः ।

"मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः ।
साम भेदोऽथ दानञ्च नत्युपेक्षे रसान्तरम् ।
तद्भङ्गाय पतिः कुर्यात् षडुपायानिति क्रमात्" ॥

आर्यगौतमः मान्यो विदूषकः । एनाम् इरावतीम् सेवते चाटुवाक्यैः प्रसादयति।

---

मुख मण्डलको ईर्ष्यासे चित्रकी ओरसे हटाकर इस मालविकाने मानो यह दिखा दिया है कान्तके अपराधी होने पर किस तरह का भाव अभिनीत किया जाता है—इस विषयमें उसे क्या शिक्षा दी गई है ॥ ९ ॥

विदूषक—अब मनानेकी तैयारी करो ।

मालविका—आर्य गौतम भी इसीकी सेवामें हैं । ( ऐसा कह कर फिर दूसरी ओर मुंह करना चाहती है )

बकुलावलिका—( मालविकां रुद्ध्वा । ) ण क्खु कुविदा दाणिं तुमं । [ न खलु कुपितेदानीं त्वम् । ]

मालविका—जइ चिरं कुविदं जेव्व मं मन्तेसि, एस पच्चाणीअदु कोवो । [ यदि चिरं कुपितामेव मां मन्त्रयसि, एष प्रत्यानीयतां कोपः । ]

राजा—( उपेत्य । )

कुप्यसि कुवलयनयने चित्रार्पितचेष्टया किमेतन्मे ।
ननु तव साक्षाद्यमहमनन्यसाधारणो दासः ॥ १० ॥

---

एतेन विदूषकस्यापि तदनुवर्त्तितया तस्याः प्राधान्यं तेन च प्रकोपकारणोपन्यासः कृतः ।

कुपिता सकोपा, एतेन त्वदीयमितः पलायनं सर्वथाऽनुचितं तेन राज्ञस्तिरस्कारप्रतीतेरतस्तथा मा कृथा इति ध्वन्यते ।

मन्त्रयसि सम्भावयसि प्रत्यानीयताम् उपशम्यताम् यदिमां कुपितामुत्प्रेक्षसे तदा तत्कोपोपशमोपायं कुर्विति भावः, स चोपायो राजवल्लभाभावसम्पादनस्वरूपो बोध्यः, एतेनाभिलाषातिशयो व्यज्यते ।

उपेत्य मालविकायाः समीपमासाद्य ।

कुप्यसीति । हे कुवलयनयने इन्दीवरलोचने, मे मम चित्रार्पितचेष्टया आलेख्यलिखितेनेरावतीविषयकाधिकानुरागवत्त्वेन किं कथम् एतत् कुप्यसि कोपं प्रकाशयसि ? चित्रगतचेष्टादर्शनजन्मा तवायं मयि कोपो नोचित इत्यर्थः । ननु प्रियतमस्यान्यासक्तिर्मम तुदतीत्यत्राह—नन्विति । साक्षात् प्रत्यक्षभूतः अयमहम् तव अनन्यसाधारणः वनितान्तरानवाप्यः दासः सेवकः । अयमाशयः—चित्रगता मम मूर्त्तिरिरावत्यामनुरागं वहति न तु साक्षादहम् , तव तु साक्षादहं दासः समुपस्थितोऽस्मीति वृथा तव मयि शठत्वशङ्का तदुत्थश्च कोप इति । कुवलयनयन इति लुप्तोपमा । एतदिति कोपक्रियाविशेषणम् । आर्या वृत्तम् ॥ १० ॥

---

बकुलावलिका—( मालविकाको रोककर ) नहीं नहीं, अब तुम नाराज हो गई ।

मालविका—यदि तुम मुझे बहुत क्रुद्ध समझ रही हो तो मेरे क्रोधको दूरतो करो ।

राजा—( समीप आकर ) हे कुवलयनयने ! हमारे चित्रगत व्यवहारसे क्यों क्रुद्ध होती हो ? मैं सदेह तुम्हारी सेवामें उपस्थित हूँ ॥ १० ॥

बकुलावलिका—जेदु जेदु भट्टा । [ जयतु जयतु भर्ता । ]

मालविका—( आत्मगतम् । ) कहं चित्तगदो भट्टा मए असूइदो । ( प्रकाशं सप्रणयवदनमञ्जलिं करोति । ) [ कथं चित्रगतो भर्ता मयासूयितः । ]

( राजा मदनकातर्यं रूपयति । )

विदूषकः—किं भवं उदासीणो विअ दीसइ । [ किं भवानुदासीन इव दृश्यते । ]

राजा—अविश्वसनीयत्वात्सख्यास्तव ।

विदूषकः—अत्तहोदीए अअं कहं तुह अविस्सासो । [ अत्रभवत्यामयं कथं तवाविश्वासः । ]

---

कथम् केन कारणेन, असूयितः दोषित्वेन सम्भाव्येर्ष्यितः । चित्रगतायाः प्रतिकृतेश्चेष्टया मूलभूतराजविषयको मम कोपो नितान्तनकारणक इति भावः । एतेन स्वाचरणेऽनुतापो व्यक्तः ।

प्रणयेन प्रणयव्यञ्जकस्मितादिना सह सप्रणयम्, वदनं मुखं यस्मिन् कर्मणि तत्तथा । अञ्जलिम् प्रणामार्थं करयुगलमेलनम् ।

मदनकातर्यम् कामविकृतिकृतां भङ्गीम्, रूपयति अभिनयति ।

उदासीनः समागमं प्रति निरुद्योगः । अवसरे प्राप्ते तदनुपयोगादित्थमुक्तिः ।

अविश्वसनीयत्वात् अविश्वासात्, मयि समागमोद्युक्ते सा कदाचिदनुचितं चिन्तयित्वा विरज्येत्तथा च विरसताऽपतेदिति भावः ।

अत्रभवत्याम् मालविकायाम् ।

---

बकुलावलिका—महाराजकी जयहो ।

मालविका—( स्वगत ) मैंने चित्रगत महाराजको क्यों दोषी ठहराया ।

( स्नेहपूर्वक हाथ जोड़ती है )

राजा—( कामकातरताका अभिनय करते हैं )

विदूषक—आप हाथ पर हाथ रक्खे क्या बैठे हैं ?

राजा—तुम्हारी सखीपर विश्वास नहीं होता है, इसलिये ।

विदूषक—उसपर आपको विश्वास क्यों नहीं होता ?

राजा—श्रूयताम् ।

पथि नयनयोः स्थित्वा स्थित्वा तिरोभवति क्षणा-
त्सरति सहसा बाह्वोर्मध्यं गतापि सखी तव ।
मनसिजरुजा क्लिष्टस्यैव समागममायया
कथमिव सखे विस्रब्धं स्यादिमां प्रति मे मनः ॥ ११ ॥

बकुलावलिका—सहि, बहुसो क्खु भट्टा विप्पलद्धो । ता तुए अत्ता विस्सासणिज्जा करीअदु । [ सखि, बहुशः किल भर्ता विप्रलब्धः । तत्त्वयात्मा विश्वसनीयः क्रियताम् । ]

---

अविश्वासकारणमुपपादयितुमाह—पथीति । तव गौतमस्य सखी इय मालविका नयनयोः चक्षुषोः पथि विषयदेशे स्थित्वा स्थित्वा अवस्थाय क्षणात् तत्क्षणात तिरोभवति निलीयते, तथा बाह्वोः भुजयोः मध्यम् अन्तरालम् गता कथञ्चित् समालिङ्गितुम् भुजपञ्जरे कृता अपि सहसा झटिति निस्सरति बाहुपाशादपसरति । सर्वमपीदं भावनोपनीतमालविकाऽऽलिङ्गनविषयकं निवेदनं, तेन सङ्कल्पेन चेतसा यदा यदैवैनां निपुणं निरीक्षितुमालिङ्गितुञ्चारभे तदा तदैवास्थिरचित्ततया ध्यानभङ्गेनेयमपसरतीत्याशयो बोध्यः । एतेन विह्वलभावो व्यक्तः । एवम् अनेन प्रकारेण मनसिजरुजा कामपीडया क्लिष्टस्य परितापितस्य मे मम मनः समागममायया (अस्याः) समागमविषये शठतया ( निर्दयतया ) इमां मालविकां प्रति कथं केन प्रकारेण विस्रब्धं विश्वस्तं स्यात् जायेत । अपिः प्रश्नद्योतकः । इयन्तं कालं यावत्प्रतारितस्य मम मनसोऽधुनापि विश्वासानुदय इति न चित्रमिति भावः । 'माया तु शठता शाठ्यं कुसृतिर्निकृतिश्च सा' इति शब्दकल्पद्रुमः । हरिणी वृत्तम् , नसमरसलागः षड्वेदैर्हयैर्हरिणी मता इति लक्षणात् । अर्थापत्तिरलङ्कारः ॥ ११ ॥

बहुशः अनेकवारम् , विप्रलब्धः प्रतारितः, 'विप्रलम्भः प्रतारणा । शृङ्गाररसभेदे चे'ति यादवः । आत्मा स्वम् , विश्वसनीयः विश्वासार्हः । क्रियताम् विधी-

---

राजा—सुनो-तुम्हारी सखी अभी सामने आती है और अभी छिप जाती है, भुजपाशसे सहसा खिसक पड़ती है । मुझ कामपीडित प्रणयीके प्रति इस वञ्चनाके करते रहने पर भी उसपर विश्वास कैसे किया जाय ? ॥ ११ ॥

बकुलावलिका—सखि, तुमने महाराजको बहुत बार धोखा दिया, अबभी अपनेको विश्वास पात्र बनाओ ।

मालविका—सहि, मह उण मन्दभग्गाए सिविणसमाअमो वि भट्टिणो दुल्लहो आसि। [सखि, मम पुनर्मन्दभाग्यायाः स्वप्नसमागमोऽपि भर्तुर्दुर्लभ आसीत् ।]

बकुलावलिका—भट्टा कहेदु से उत्तरं । [ भर्ता कथयत्वस्या उत्तरम् । ]

राजा – उत्तरेण किमात्मैव पञ्चबाणाग्निसाक्षिकम् ।

तव सख्यै मया दत्तो न सेव्यः सेविता रहः ॥ १२ ॥

---

यताम् । अनेकधा त्वया राजा वञ्चितस्तदधुना प्राप्तस्य तस्य प्रार्थनां सफलां कृत्वा स्वस्या अनुरागस्य विश्वासस्तद्धृदये समुत्पाद्यतामन्यथा भूयो भूयो वञ्चना वैराग्यप्रसविनी जायेतेति हृदयम् ।

मन्दभाग्यायाः हतभाग्यायाः, स्वप्नसमागमः स्वप्नदशासङ्गमः, दुर्लभः दुरापः, एतेन स्वप्नसमागमस्य दुर्लभत्वाभिधानेन साक्षादायातस्य राज्ञः समागमस्य नितान्तमभिलाषविषयता ध्वनिता ।

अस्याः अमुष्या मालविकोक्तेः, उत्तरम् प्रतिवचनम् , स्वप्नसमागमोऽपि दुर्लभ आसीदिति प्रतिपाद्य स्वौत्सुक्यनिवेदनद्वारा दैवकृते प्रतिबन्धे स्वस्या अविश्वसनीयत्वे हेत्वभावोऽनयोपन्यस्तस्तदुत्तरं करणीयं निश्चिनोतु भर्त्तेत्याशयः ।

उत्तरेण किमिति । उत्तरेण प्रतिवचनेन किम् न किमपि प्रयोजनमित्यर्थः । मया तव सख्यै समप्राणायै मालविकायै आत्मा एव स्वदेह एव पञ्चबाणः कामः स एवाग्निः वह्निः स साक्षी कर्मद्रष्टा यत्र कर्मणि तथा दत्तः समर्पितः । एतेनाधुना मया प्रतीताः प्रतारणा मम हृदये नावकाशं भजन्त इति प्रत्यायनस्य नैरर्थक्यमुक्तम्। तत्रार्थान्तरन्यासेन युक्तिमाह न सेव्य इति । रहः एकान्ते सेविता परिचरणशीलः गुप्तप्रणयी न सेव्यः ( प्रभूभूतया प्रणयिन्या न सेव्यः ) न उपचारैः प्रसादनीयः । एतदाश्लिष्याकुलस्य ममात्मसम्प्रदानावसर एव कृतार्थतायै पर्याप्नोति नाहं मालविकाया वाक्यैः स्वं प्रसादयितुमिच्छामीति भावः । रह इत्यव्ययम् । 'पञ्चबाणाग्निसाक्षिकम्' इत्यनेनास्य दानस्य विश्वसनीयतया प्रतारणाऽऽशङ्कानिरासः कृतः ॥१२॥

---

मालविका—सखी, मैं बड़ी अभागिन हूँ, मेरे लिये स्वामीका स्वप्न सङ्गमभी दुर्लभ होरहा है ।

बकुलावलिका—महाराज आवें, इसका उत्तर दें ।

राजा—उत्तर देनेकी क्या आवश्यकता है, मैंने कामवह्निको साक्षी रखकर तुम्हारी सखीको आत्मा सौंप दी । जो छिपकर सेवा करता हो उसे सेव्य बनाना उचित नहीं है ॥ १२ ॥

बकुलावलिका—अणुगहीदम्हि । [ अनुगृहीतास्मि । ]

विदूषकः—( परिक्रम्य ससंभ्रमम् । ) बउलावलिए, एसो बालासोअ-रुक्खस्स पल्लवाइं लङ्घेदि हरिणो । एहि णिवारेम णं । [ बकुलावलिके, एष बालाशोकवृक्षस्य पल्लवानि लङ्घयति हरिणः । एहि निवारयाम एनम् । ]

बकुलावलिका—तह । ( इति प्रस्थिता । ) [ तथा । ]

राजा—वयस्य, एवमेवास्मिन्रक्षणक्षणेऽवहितेन त्वया भवितव्यम् ।

विदूषकः—एव्वं वि गोदमो संदिसीअदि । [ एवमपि गौतमः संदिश्यते । ]

---

अनुगृहीताः अनुकम्पिताः, अभिमतार्थसम्पादनादिति भावः । अत्र 'अस्मदो द्वयोश्च' द्वित्वार्थे बहुवचनम् ।

परिक्रम्य इतस्ततः पादक्षेपं कृत्वा । ससम्भ्रमम् सत्वरम्, एतेन कार्यस्यानुपेक्षणीयता व्यञ्जिता । लङ्घयति भक्षितुमुद्युङ्क्ते । हरिणः मृगः । एनम् हरिणम्, निवारयामः भक्षणात् प्रतिषेधामः, अन्यथाऽस्य बालस्य सञ्जातद्वित्रपत्रमात्रस्याशोकवृक्षस्य जीवनमेव संशय्येतेति भावः ।

तथा युक्तं त्वदुक्तमित्यर्थः । प्रस्थिता चलिता, राजमालविकयोः सङ्गमे सौविध्यसम्पादनाय निर्जनताविधानमुद्दिश्य विदूषकबकुलावलिकाभ्यां तथा प्रक्रान्तमिति बोध्यम् ( १ ) ।

रक्षणक्षणे गुप्तव्यापाररक्षाकाले । त्वया गौतमेन, एवमेव एतेनैव प्रकारेण, अवहितेन सतर्केण, भवितव्यम् भवितुमुचितम् ।

एवमपि उक्तप्रकारमपि, सन्दिश्यते उपदिश्यते, नोचितमिदं कथनं गौतमं प्रति

---

बकुलावलिका - बड़ी कृपा ।

विदूषक—( आकर, हड़बड़ीसे ) बालाशोकके वृक्षको हरिणका छौना चरता जारहा है, आओ, उसे बचावें ।

बकुलावलिका—यच्छी बात ।

राजा—इस रहस्यको छिपानेमें होशियार रहना ।

विदूषक – क्या यहभी गौतमको सिखाना होगा ?

---

( १ ) शाकुन्तलेऽप्यस्य कवेरीदृशे प्रसङ्गेऽमूदृशी कल्पना यथाः—

प्रियंवदा—"( सदृष्टिक्षेपम् ) अनसूये, यथैष इतो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति । एहि संयोजयाव एनम् । इति निष्क्रान्ते" ॥

बकुलावलिका—( परिक्रम्य । ) अज्ज गोदम, अहं अप्पआसे चिट्ठामि । तुमं दुवाररक्खओ होहि । [ आर्य गौतम, अहमप्रकाशे तिष्ठामि । त्वं द्वाररक्षको भव । ]

विदूषकः—जुज्जइ । [ युज्यते । ]

( निष्क्रान्ता बकुलावलिका । )

विदूषकः—इमं दाव फालहक्खम्भं अस्सिदो होमि । ( इति तथा कृत्वा । ) अहो सुहप्फरिसदा सिलाविसेसस्स । ( इति निद्रायते । ) [ इमं तावत्स्फटिकस्तम्भमाश्रितो भवामि । अहो सुखस्पर्शता शिलाविशेषस्य । ]

( मालविका ससाध्वसा तिष्ठति । )

राजा—विसृज सुन्दरि संगमसाध्वसं तव चिरात्प्रभृति प्रणयोन्मुखे ।

---

भवतः 'एवमेवावहितेन भवता भाव्यम्' इति, स्वत एव तस्य तत्र प्रवृत्तेः । तथा चायं तवोपदेशोऽनवसरदग्ध इति भावः ।

अप्रकाशे क्वचनात्मगोपनोपयुक्तेऽवकाशे ।

युज्यते सङ्गच्छते, त्वदुपदेशानुसारेण कार्यविधानमुपपद्यत इत्याशयः ।

स्फटिकस्तम्भम् स्फटिकप्रस्तरनिर्मितं स्तम्भम्, संश्रितः शयनार्थमाश्रितः । सुखस्पर्शता सुखयतीति सुखः सुखजनकः स्पर्शः त्वाचं ज्ञानं यस्य स तस्य भावः तथा आह्लादजनकत्वाचप्रत्यक्षतेत्यर्थः ।

ससाध्वसा रहसि प्रियप्राप्तौ सङ्गमविषयकभयशालिनी सलज्जा वा ।

विसृजेति । सुन्दरि रमणीयरूपे सङ्गमसाध्वसम् मत्समागमविषयकं भयं विसृज

---

बकुलावलिका--( परिक्रमण करके ) आर्य गौतम, मैं छिपी रहती हूँ, तुम दरवाजे पर पहरा करो ।

विदूषक—ठीक तो है ।

( बकुलावलिका बाहर जाती है )

विदूषक – इस स्फटिक शिलाका आश्रय लूं । ( वैसा करके ) अहा ! इस शिला-खण्डका स्पर्श कितना सुखद है ? ( ऐसा कहकर सोजाता है )

( मालविका डरकर खडी रहती है )

राजा—सुन्दरि, तुम सङ्गमसे मत डरो, मैं बहुत दिनोंसे तुम्हारे लिये उत्क-

परिगृहाण गते सहकारतां त्वमतिमुक्तलताचरितं मयि ॥ १३ ॥

मालविका—देवीभआदो अत्तणो वि पिअं कादुं ण पारेमि। [ देवीभयादात्मनोऽपि प्रियं कर्तुं न पारयामि । ]

राजा—अयि न भेतव्यम् ।

मालविका—( सोपालम्भम् । ) जो ण भाअदि सो मए भट्टिणीदंसणे दिट्ठसामत्थो भट्टा । [ यो न बिभेति स मया भट्टिनीदर्शने दृष्टसामर्थ्यो भर्ता । ]

---

परित्यज, तथा चिरात् प्रभृति बहुतिथात् कालात् तव प्रणयोन्मुखे प्रीतिपरायणे सहकारताम् आम्रतरुतुल्यताम् गते प्राप्ते मयि त्वम् अतिमुक्तलतायाः माधवीलतायाः आचरितम् आचरणम् परिगृहाण धारय । प्रियप्राप्तौ समागमलज्जां परित्यज्य माधवीलताऽऽम्रतरुमिव त्वमिदानीं मामालिङ्गेत्याशयः । अत्र सहकारतां गते मयीत्युक्त्याऽऽत्मनः प्रणयेऽत्र स्थिरता, तया च कन्याजनस्य निश्शङ्कप्रवृत्तियोग्यता, अतिमुक्तलताऽऽचरितधारणोपदेशेनालिङ्गने गाढताप्रार्थना चेत्याद्यर्था व्यज्यन्ते । "अतिमुक्तः माधवीलता" इति शब्दकल्पद्रुमः । सहकारतां सहकारतरुतुल्यत्वम्, अतिमुक्तलताया आचरितमिवाचरितमिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारः, 'विसृज सुन्दरि सङ्गमसाध्वसम्' इति दन्त्यसकारस्यासकृदावृत्त्या वृत्त्यनुप्रासश्चेत्यनयोः संसृष्टिः । द्रुतविलम्बितं वृत्तम् लक्षणं प्रागुक्तम् ॥ १३ ॥

देवीभयात् धारिण्या इरावत्याश्च भयात् । आत्मनोऽपि प्रियम् भवते स्वसमर्पणरूपम् । न पारयामि न शक्नोमि । एतेन स्वस्या अनुरागातिशयविजृम्भितः सङ्गमोत्सुकभावो व्यञ्जितः ॥

न भेतव्यम् देव्या इति शेषः ।

सोपालम्भम् सतिरस्कारम्, भट्टिनीदर्शने तस्मिन् प्रमदवनगतेऽशोककुञ्जे इरावत्याः प्रत्यक्षस्यावसरे दृष्टं सामर्थ्यं यस्य स तादृशः । भवान् तस्मिन्समये इरावतीं दृष्ट्वा मामशरणां विहाय यां विह्वलतामापत्तया प्रमापितं भवतो भयसहनसामर्थ्यमिति भावः ।

---

ण्ठित हूँ । अब मैं आम्रवृक्ष हूँ और तुम माधवी लता बनकर लिपट जाओ ॥ १३ ॥

मालविका—देवीके भयसे अपने मनका मनोरथभी नहीं पूर्णकर सकती हूँ ।

राजा—डरो मत ।

मालविका—( उलाहनेके साथ ) आप नहीं डरते यह मैं रानीके सामने देख चुकी हूँ ।

राजा—दाक्षिण्यं नाम बिम्बोष्ठि बैम्बिकानां कुलव्रतम्।
तन्मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धनाः ॥ १४ ॥
तदनुगृह्यतां चिरानुरक्तोऽयं जनः। ( इति संश्लेषमुपजनयति। )

( मालविका नाट्येन परिहरति। )

---

दाक्षिण्यमिति। बिम्बे बिम्बफले इव ओष्ठौ दशनच्छदौ यस्यास्तत्सम्बोधने बिम्बोष्ठि, दाक्षिण्यम् अनेकसंख्यकासु भार्यासु तुल्यानुरागत्वम् नाम प्रसिद्धिं गतम् बैम्बिकानां तद्वंशोद्भवानां राज्ञां कुलव्रतं वंशपरम्परागतो धर्मः, अनेनैव हेतुना तदेरावतीदर्शनसमये तदीयमनुवर्त्तनं मयाऽऽचरितं न तु भयेनेत्यर्थः, एवञ्चालं मां भीरुकमुत्प्रेक्ष्येति राजाशयः। नन्वेवं भवता बहुपरिग्रहभाजा सदैव कस्याश्चन स्त्रियोऽनुरोधस्य रक्षार्थं ममोपेक्षा करिष्यत इति भवति मदीयमात्मसमर्पणं नोपयुक्तमिति चेत्तत्राह—तन्म इति। दीर्घे विशाले अक्षिणी नयने यस्यास्तत्सम्बुद्धौ दीर्घाक्षि विशाललोचने तत् तथापि मम ये प्राणास्ते त्वदाशानिबन्धनाः त्वदधिगमाशयैव रक्षिताः, परिग्रहबहुत्वेऽपि भवतीमभिलष्यैव जीवामीति भावः। एतेनोत्कटानुरागवत्ता व्यक्ता अत्र बिम्बोष्ठीति लुप्तोपमा बिम्बोष्ठि बैम्बिकानां कुलव्रतमित्यत्र व्यञ्जनानां सकृदनेकधा साम्याच्छेकानुप्रासश्च। तयोः संसृष्टिः। इदमत्र बोध्यम्—अग्निमित्रोऽयं ब्राह्मणवंश्यो राजा शुङ्गवंशोद्भवः, तस्यैव क्वचिच्छ्रेण्यां बिम्बः कश्चनाविर्भूतः स्यात्तन्नाम्ना बैम्बिकसमाख्या। एतद्राजवंशवृत्तं भूमिकायां द्रष्टव्यमिति ॥ १४ ॥

तत् त्वदाशयैव जीवनस्य धार्यमाणत्वात्, अनुगृह्यताम् मनोरथपूरणप्रसादेनानुकम्प्यताम्, चिरानुरक्तः सुचिरकालोपरूढप्रेमा, अयम् मल्लक्षणः। सश्लेषम् आश्लेषम् आलिङ्गनमिति भावः, उपजनयति प्रारभते।

नाट्येन भङ्गीविशेषेण ( निषेधस्वीकारमध्यवर्त्तिना व्यवहारेण करकम्पनमस्तकधूननविवृत्तवदनतयाऽवस्थानस्वस्तिकीकृतभुजलताभावादिना प्रयत्नेन) परिहरति आत्मानं पृथक्कृत्य राजानं विफलप्रयासतां प्रापयति।

---

**राजा—बिम्बोष्ठि, दाक्षिण्य बिम्बवंशीयोंका कुलव्रत है, किन्तु हमारे यह प्राण तुम्हारी आशापर ही टिके हुए हैं ॥ १४ ॥**

**इसलिये इस चिरानुरागीको अनुगृहीत करो। ( ऐसा कहकर राजा आलिङ्गन करता है )**

**( मालविका अभिनय पूर्वक कतरा जाती है )**

राजा—( आत्मगतम् । ) रमणीयः खलु नवाङ्गनानां मदनविषयावतारः । एषा हि इयम्—

हस्तं कम्पयते रुणद्धि रशनाव्यापारलोलाङ्गुलीः
स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात् ।
पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं
व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे ॥ १५ ॥

---

नवाङ्गनानाम् प्रथमसमागतानां रमणीनाम् , मदनविषयः कामलीला तस्य अवतारः प्रकटीभावः, कामचेष्टोदय इत्यर्थः । रमणीयः सुन्दरः । खलुर्निश्चये । स्वोक्तमर्थमनुमोदयितुमाह—एषा हीति ।

हस्तं कम्पयत इति । हस्तं कम्पयते चालयति नायकप्रारब्धालिङ्गनव्यापारभङ्गायेति शेषः । ( तथा ) रशनाव्यापारे काञ्चीदामसम्बद्धे मोचनादिकर्मणि लोलाः चपलाः अङ्गुलीः रुणद्धि निवारयति, तथा बलात् सरभसमालिङ्ग्यमाना आश्लिष्यमाणा सती स्वौ हस्तौ निजौ करौ स्तनावरणतां कुचयुगलाच्छादनभावं नयति प्रापयति । ( किञ्च ) पक्ष्मले रमणीयपक्ष्मणी नेत्रे नयने यस्मिन् तादृशम् आननं मुखम् पातुं चुम्बितुम् सतृष्णमीक्षितुं वा उन्नमयतः ऊर्ध्वमुखं कुर्वतः उन्नमयन्तमनादृत्येत्यर्थः । 'षष्ठी चानादरे' इति षष्ठी । साचीकरोति तिर्यक्करोति । ( एवम् ) व्याजेन छलेन निरोधमिषेण अपि मे मम अभिलाषपूरणसुखं मनोरथसिद्धिप्रभवमानन्दं निर्वर्त्तयत्येव समुपनयत्येव । निषेधव्यापृताया अपि मुग्धनवाङ्गनायास्तास्ताश्चेष्टा अव्याजमनोहरत्वेन प्रियस्य हृदयं हरन्त्येवेत्यर्थः । तथा चामरुः—'जाता वामतयैव सम्प्रति मम प्रीत्यै नवोढा प्रिया' इति । अत्र चतुर्थचरणार्थं प्रति प्रथमचरणत्रयवाक्यार्थस्य हेतुतया काव्यलिङ्गम् , तथा हस्तकम्पनादिरूपप्रातिकूल्यस्याभिलाषपूरणसुखस्वरूपानुकूलानुबन्धित्वादनुकूलम् । एवं 'कम्पयते' 'रुणद्धि' 'नयति' 'साचीकरोति' 'निर्वर्त्तयति' प्रभृत्यनेकक्रियाः प्रत्येकेऽस्यैकस्य कर्त्तृतया

---

राजा—( स्वगत ) नवाङ्गनाओंका कामोद्रेक वास्तवमें बड़ा सुन्दर होता है । यह मालविका—

हाथ कंपाती है, करधनी खोलनेको उतारू अंगुलियोंको रोकती है, बलपूर्वक आलिङ्गित किये जानेपर अपने दोनों हाथोंसे स्तनमण्डलको ढंकलेती है, घनी बहनी वाले नयनोंसे सुन्दर मुखको चूमनेके लिये ऊपर उठानेपर मुंह घुमालेती है, फलतः वह छलपूर्वक हमारे अभिलाषको पूर्ण हीकर रही है ॥ १५ ॥

( ततः प्रविशतीरावती निपुणिका च । )

इरावती—हञ्जे णिउणिए, सच्चं तुमं परिगदत्था चन्दिआए। समुद्दघरअलिन्दसइदो एआई अज्जगोदमो दिट्ठो त्ति । [ हञ्जे निपुणिके, सत्यं त्वं परिगतार्था चन्द्रिकया । समुद्रगृहालिन्दशयित एकाकी आर्यगौतमो दृष्ट इति । ]

निपुणिका—अण्णहा कहं भट्टिणीए विण्णावेमि । [ अन्यथा कथं भट्टिन्यै विज्ञापयामि ]

इरावती—तेण हि तहिं एव्व गच्छम्ह संसआदो मुत्तं पिअवअस्सं पुच्छिदुं अ । [ तेन हि तत्रैव गच्छामः संशयान्मुक्तं प्रियवयस्यं प्रष्टुं च । ]

---

निर्देशाद्दीपकश्चेत्येतेषामेकाश्रयानुप्रवेशात्सङ्करः । 'रशना काञ्ची' । 'पक्ष्म अक्षिलोम' । 'साचि तिर्यक्' इति सर्वत्र शब्दकल्पद्रुमः । शार्दूलविक्रीडितं वृत्तम् 'सूर्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीडितम्' इति च तल्लक्षणम् ॥ १५ ॥

'हञ्जे' इति चेटीसम्बोधने । 'हण्डे हञ्जे हलाऽऽह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः । परिगतार्था ज्ञाततत्त्वा, चन्द्रिकया तदभिधानया परिचारिकया । काक्वा प्रश्ने पर्यवसानम् । समुद्रगृहस्य तदाख्योद्यानभवनस्य. अलिन्दे बहिर्भागावस्थिते क्वचनैकदेशे, 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः । शयितः निद्राणः । इतिशब्दोऽत्र परिगतार्थेत्यत्रान्वेति ॥

अन्यथा अपरिगतार्थत्वे, भट्टिन्यै स्वामिन्यै, विज्ञापयामि सूचयामि, निग्रहानुग्रहसमर्थस्वामिनीजने तत्किङ्करीणामयथार्थसूचनाया विपदावहत्वात्तथा कथमाचरेयमतो मदुक्तं श्रद्धेयमिति भावः ।

तेन त्वदुक्तौ सत्यत्वप्रत्ययेन, संशयात् जीवति म्रियते वा सर्पदष्ट इति द्वैधात् मुक्तम् उत्तीर्णम् , विषवैद्यकृतोपचारैर्जीवनस्य प्रत्यावर्त्तितत्वादित्थमुक्तिः । प्रष्टुम् जिज्ञासितुम् , तदीयस्वास्थ्यमिति शेषः । तत्र समुद्रगृहालिन्दे ।

---

( इरावती और निपुणिका का प्रवेश )

इरावती—अरी निपुणिका, तुम्हें चन्द्रिकाने ठीक खबर दी है । देखो, समुद्रगृहके दरवाजेपर अकेले गौतम पड़ा है ।

निपुणिका—अगर ऐसी बात न होती तो आपको कैसे कहती ?

इरावती—अतएव वहीं जाती हूँ, सन्देहमी छुड़ालूंगी और जरा गौतमकी भी खबर लूंगी ।

निपुणिका—सावसेसं विअ भट्टिणीए वअणं [ सावशेषमिव भट्टिन्या वचनम् । ]

इरावती—अण्णं च चित्तगदं अज्जउत्तं पसादइदुं । [ अन्यच्च चित्रगतमार्यपुत्रं प्रसादयितुम् । ]

निपुणिका—अह दाणिं कहं णु भट्टा एव्वं अणुणीअदि । [ अथेदानीं कथं नु भर्तैवमनुनीयते । ]

इरावती—मुद्धे, जारिसो चित्तगदो णं तारिसो एव्व अण्णसंकन्तहिअओ अज्जउत्तो । केवलं उवआरादिक्कमं पमज्जिदुं अअं आरम्भो । [ मुग्धे, यादृशश्चित्रगतो ननु तादृश एवान्यसंक्रान्तहृदय आर्यपुत्रः । केवलमुपचारातिक्रमं प्रमार्जितुमयमारम्भः । ]

---

सावशेषम् असमाप्तम्, चकारेण समुच्चयवाचकेनोत्थापितायाः आकाङ्क्षाया अनिवृत्तेः सावशेषत्वमस्य देव्या वचनस्येत्याशयः ।

अन्यच्च मद्वचनस्य सावशेषत्वं त्वयोहितं तदस्ति तस्यावशेष इति भावः । चित्रगतम् प्रतिकृतौ स्थितम्, आर्यपुत्रम् राजानम्, प्रसादयितुम् अनुनेतुम् ।

अनुनीयते प्रसाद्यते, तत्कोपकारणस्याविभाव्यमानतयाऽनुनयस्यातर्कितत्वेनेदृशः पर्यनुयोगः ।

मुग्धे अतत्वज्ञे, इदञ्च सम्बोधनं तस्याः परिस्थित्यज्ञता द्योतनाय । यादृशः मद्विषयानुरागप्रकर्षशालित्वोपलक्षितः, चित्रगतः आलिखितः, तादृशः तद्वदेव, अन्यसङ्क्रान्तहृदयः अन्याकृष्टमनाः, चित्रे यथा मदनुरक्तभावेनालिखित आर्यपुत्रस्तथैवाधुना मदतिरिक्तवनितासङ्क्रान्तहृदयोऽसाविति भावः, नन्वेवं पराकृष्टतानिश्चये किमर्थं नोपक्ष्यते राजेति चेत्तत्राह—केवलमिति । उपचारः प्रमदवनगतया मालविकया सह स्वरं भाषमाणो मया दृष्टोऽसौ यन्मम प्रसादनाय पादयोः पतितस्तल्लक्षणो भद्रव्यवहारः, तस्यातिक्रमम् अवधीरणारूपमुल्लङ्घनम् ( अनुचितत्वाद्दोषभूतम् ) प्रमा-

---

निपुणिका—आप कुछ और कहना चाहती हैं ।

इरावती—औरभी कुछ है, 'चित्रित महाराजको मनानाभी है' ।

निपुणिका—इस समय महाराजको क्या मनाना है ?

इरावती—चित्रमें जिस तरह आर्यपुत्रको हमारी ओर अनुरक्त चित्रित किया गया है उसी तरह वह दूसरी स्त्रीपर आसक्त है। केवल उनके साथ शिष्टाचारका पालन मैं न कर सकी, उसीके लिये यह उद्योग है ॥

निपुणिका—इदो इदो भट्टिणी । [ इत इतो भट्टिनी । ]

( उभे परिक्रामतः । )

चेटी—( प्रविश्य । ) जेदु जेदु भट्टिणी । भट्टिणि, देवी भणादि । ण मे मच्छरस्स एसो कालो । तेण क्खु वहुमाणं वड्ढेदुं वअस्साए सह णिअलबन्धणे किदा मालविआ । जइ अणुमण्णसि अज्जउत्तस्स पिअं कादुं तहा करेमि जं तुह इच्छिअं तं मे भणाहि त्ति । [ जयतु जयतु भट्टिनी । भट्टिनि, देवी भणति । न मे मत्सरस्यैष कालः । तेन खलु बहुमानं वर्धयितुं वयस्यया सह निगडबन्धने कृता मालविका । यद्यनुमन्यसे आर्यपुत्रस्य प्रियं कर्तुं तथा करोमि । यत्तवेष्टं तन्मे भणेति । ]

इरावती—णाअरिए, विण्णावेहि देवीं । का वअं भट्टिणीं णिओजेदुं ।

---

र्जितुम् क्षालयितुम्, अयम् उपक्रम्यमाणः उद्यमः चेष्टाविशेषः । पादयोः पतन्यदवधीरितो भर्त्रा तदघप्रक्षालनायैव ममायमनुनयोद्यमो न तदनुरागप्रकर्षपात्रत्वाधिगमाय, सम्प्रति तस्यापरस्यामङ्गनायामासक्तचित्तत्वादिति भावः । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावस्य भाष्यकारेष्टतयाऽन्यापदे पुंवद्भावः ।

इत इतः अनेन अनेन (पथाऽऽगच्छतु) सार्वविभक्तिकस्तसिः । देवी धारिणी,

मत्सरस्य द्वेषस्य, 'मत्सरोऽन्यशुभद्वेषे' इत्यमरः । बहुमानम् आदरातिशयम्, वर्धयितुम् समेधयितुम्, त्वां सन्तोषयितुमिति भावः । वयस्यया प्रियसख्या (बकुलावलिकया), निगडबन्धने शृङ्खलाबन्धने, कृता स्थापिता । अयमाशयः—तव पुरतोऽविनयमाचरन्ती मालविका यन्मया कारावासे स्थापिता तत्त्वादरवर्धनायैव, न द्वेषेण, अधुना सिद्धं तत्कार्यम्, अधुना राजा सर्वबन्धनमोचनादेशद्वारा तामपि बन्धनात् मुमोचयिषति, अतो यदि राज्ञः प्रियं क्रियमाणमनुमन्यसे तदा तदर्थमादेशः क्रियते मयेति ।

---

निपुणिका—देवीजी-इधरसे, इधरसे ।

( दोनों चलती हैं )

( दासी आकर ) रानीजीकी जय हो । देवीने कहा है 'यह हमारे लिये झगड़नेका समय नहीं है । तुम्हारीही बात रखने के लिये सखीसहित मालविकाको कैदमें रखवा दिया है । यदि तुम कहो तो आर्यपुत्रका प्रियकार्य करूं । तुम्हारी जैसी इच्छा हो कहो' ॥

इरावती—नागरिका, तुम देवीसे कहना, देवीको आदेश देनेवाली मैं कौन होती

परिअणणिग्गहेण दंसिदो मइ अणुग्गहो। कस्स वा पसादेण अअं जणो वड्ढदि त्ति। [ नागरिके, विज्ञापय देवीम्। का वयं भट्टिनीं नियोजयितुम्। परिजननिग्रहेण दर्शितो मय्यनुग्रहः। कस्य वा प्रसादेनायं जनो वर्धत इति। ]

चेटी—तह। ( इति निष्क्रान्ता। ) [ तथा। ]

निपुणिका—( परिक्रम्यावलोक्य च। ) भट्टिणि, एसो दुवारुद्देसे समुद्दघरअस्स विपणिगदो विअ बलीवद्दो अज्जगोदमो आसीणो एव्व णिद्दाअदि। [ भट्टिनि, एष द्वारोद्देशे समुद्रगृहस्य विपणिगत इव बलीवर्द आर्यगौतम आसीन एव निद्रायते। ]

इरावती—अच्चाहिदं। ण क्खु सावसेसो विसविआरो भवे। [ अत्याहितम्। न खलु सावशेषो विषविकारो भवेत्। ]

---

नियोजयितुम् अनुमत्या कार्यविशेषे प्रवर्त्तयितुम्, वयं काः न का अपीत्यर्थः, निग्रहानुग्रहाधिकृतां देवीं प्रत्यनुमतिप्रदानेनादेशकरणे सर्वथा वयमनधिकारा इति भावः। परिजनस्य स्वपरिचारिकाया मालविकायाः, निग्रहेण निगडितचरणतया कारावासादेशनेन, अनुग्रहः कृपातिशयः, मयि कृतापराधायाः स्वपरिचारिकाया यन्निग्रहो देव्या पक्षपातमकृत्वा कृतः स मयि तस्या महाननुग्रह इति भावः। अथवा उचितमेव कृतं देव्या, मम सर्वदाऽऽदरस्य तयाऽनुध्यायमानत्वादित्याह—कस्यवेति। कस्य देव्यतिरिक्तस्य जनस्य प्रसादेन अनुग्रहेण, अयम् मल्लक्षणः, जनः वर्द्धते बहुमानमेति ? देव्यनुग्रहमात्रमेव मदादरकारणमिति भावः। एतेन राजविरक्तिस्तदुद्भवस्तस्या मानसिकः खेदश्च व्यज्यते।

तथा यथाभवदुक्तं विज्ञापयामि देव्यै इति भावः।

विपणिगतः आपणे वर्त्तमानः, एतेन कार्यसामान्याभावकृतमालस्यं सूचितम्। आसीनः उपविष्टः, एतेन शयनमुद्राऽभावेऽपि शयननिवेदनेन तस्याचतुरतयोपहासः कृतो बोध्यः।

'किन्तु' इति प्रश्ने। अत्याहितम् जीवानपेक्षि। कुतोऽपि कारणात् तस्य

---

हूँ ? अपने जनपर अकृपाकरके उसे बन्धन दिया गया यह मेरे ऊपर कृपा की गई। और किसके द्वारा अनुगृहीत हूँगी ?

दासी—जो आज्ञा। ( जाती है )

निपुणिका—( देखकर ) यह समुद्रगृहके दरवाजेपर गौतम बाजारू बैलकी तरह बैठे बैठे सो रहा है।

इरावती—तबतो बुराहुआ। कहीं विषका अंश न रह गया हो ?

निपुणिका—पसण्णमुहवण्णो दीसइ। अवि अ धुवसिद्धिणा चिइच्छिदो। ता से असङ्कणिज्जं पावं। [ प्रसन्नमुखवर्णो दृश्यते। अपि च ध्रुवसिद्धिना चिकित्सितः। तदस्याशङ्कनीयं पापम्। ]

विदूषकः—( उत्स्वप्नायते। ) भोदि मालविए ) [ भवति मालविके। ]

निपुणिका—सुदं भट्टिणीए, कस्स एसो अत्तणिओअसंपादणे विस्ससणिज्जो हदासो। सव्वकालं इदो एव्व सोत्थिवाअणमोदएहिं कुच्छिं पूरिअ संपदं मालविअं सिविणावेदि। [ श्रुतं भट्टिन्या, कस्यैष आत्मनियोगसंपादने

---

जीवनं संशयदोलाधिरूढमिति साश्चर्योक्तिरियम्, कारणमाह—सावशेष इवेति। विषस्य सर्पदंशजनितस्य जङ्गमविषस्य, कियानंशः सम्भवतोऽवशिष्टः, स चिकित्सया कियन्तं कालं यावददर्शितविकारोऽपि कालेन विकारं जनयितुं प्रावर्त्ततेति सम्भावनाऽत्र निबद्धा। तथा च जङ्गमविषाणां कार्यविषये भावमिश्रः—

निद्रां तन्द्रां क्लमं दाहं संपाकं लोमहर्षणम्।
शोथञ्चैवातिसारञ्च कुरुते जङ्गमं विषम्' ॥ इति ॥
'अत्याहितं महाभीतिः कर्म जीवनापेक्षि च' इत्यमरः।

प्रसन्नमुखवर्णः ललितमुखकान्तिः, एतेन विषवेगशङ्काऽशतोऽपाकृता। तदुक्तं भावप्रकाशे—

प्रसन्नदोषं प्रकृतिस्थधातुमन्नाभिकामं सममूत्रविट्कम्।
प्रसन्नवर्णेन्द्रियचित्तचेष्टं वैद्योऽवगच्छेदविषं मनुष्यम्' ॥ इति ॥

ध्रुवसिद्धिना तदाख्येन राजादृतेन विषवैद्येन चिकित्सितः कृतभैषज्यः, 'यथा नाम तथा गुणः' इति प्रथितेन ध्रुवसिद्धिना कृतायां चिकित्सायां विषवेगशेषाशङ्काया नास्त्यवकाश इति भावः। पापम् अमङ्गलम् मरणलक्षणम्, अशङ्कनीयम् असम्भावनीयम्, अतोऽलं तथा चिन्तयित्वेति भावः।

उत्स्वप्नायते स्वप्नप्रलापमाचरति। प्रलापस्वरूपमेवाह—भगवतीति। हताशः पिशुनः, आत्मनियोगसम्पादने स्वकर्त्तव्यनिर्वाहे, विश्वसनीयः विश्वासपात्रम्, अवि-

---

निपुणिका—चेहरेका रंग अच्छा है और ध्रुवसिद्धिने चिकित्सा की है, इसके अमङ्गलकी शङ्का न करें।

विदूषक—( स्वप्नप्रलापमें ) भगवति मालविके, !

निपुणिका—सुना आपने? अपने कार्यके लिये कौन इसपर विश्वास करेगा?

विश्वसनीयो हताशः । सर्वकालमित एव स्वस्तिवाचनमोदकैः कुक्षिं पूरयित्वा सांप्रतं मालविकां स्वप्नायते । ]

विदूषकः—इरावदीं अदिक्कमन्ती होहि । [ इरावतीमतिक्रामन्ती भव । ]

निपुणिका—एदं अच्चाहिदं । इमं भुअङ्गभीरुअं बह्मबन्धुं इमिणा भुअङ्गकुडिलेण दण्डकट्ठेण तम्भन्तरिदा भाअइस्सं । [ एतदत्याहितम् । इमं भुजंगभीरुं ब्रह्मबन्धुमनेन भुजंगकुटिलेन दण्डकाष्ठेन स्तम्भान्तरिता भाययिष्यामि । ]

इरावती—अरुहदि एव्व किदग्घो सप्पदंसणं । [ अर्हत्येव कृतघ्नः सर्पदंशनम् । ]

---

श्वासकारणमाह—सर्वकालम् सर्वदा, इतः इरावतीप्रसादात्, स्वस्तिवाचनमोदकैः आशीःप्रदानसमयोपसर्पणलब्धमधुरैः, मालविकां स्वप्नायते तद्विषये प्रलपति । सदा मालविकामेवायं चिन्तयति यतः स्वप्ने तां प्रलपति, कुक्षिं चेरावतीकृपया पूरयतीति वञ्चकोऽयमतीवाविश्वासार्ह इति भावः ॥ 'हताशः…पिशुनः' इति शब्दकल्पद्रुमः । 'स्वस्त्याशीःक्षेमपुण्यादौ' इत्यमरश्च ॥

अतिक्रामन्ती पराभवन्ती, सौभाग्यातिशयादित्यर्थः । प्रलापोत्तरार्धमिदमनुसन्धेयम् ॥

अत्याहितम् महाभयम्, ( न केवलं मालविकां ध्यायतीयदेवास्य पैशुन्यमपि तु स्वप्रतिपालिकाया भवत्या अवमाननामपि कामयत इति महतीयमनर्थपरम्परेति भावः ) भुजङ्गभीरुकम् अहिभीरुम् ब्रह्मबन्धुम् ब्राह्मणाधमम्, भुजङ्गकुटिलेन सर्पवद्वक्रेण स्तम्भान्तरिता स्तम्भान्तरे निलीना । भाययिष्यामि भयमुत्पादयिष्यामि ।

कृतं हन्ति नाद्रियत इति कृतघ्नः अकृतज्ञः सर्पदंशनमर्हति सर्पकर्तृकदंशनयोग्यो भवति । दानेनादरेण चाहर्निशमुपकुर्वतीनामस्माकं सपत्नीयोजनतत्कृतापकर्षपात्रतानुध्यानपरायणतया गुरुपातकित्वात्तदपराधस्य चाक्षम्यत्वादित्थमुक्तिः । तथा चोक्तं स्कान्दे—

---

आपके यहाँ आशीर्वाद पहुँचाता है, मिठाइयां पाता है, उसीपर गुलछर्रे उड़ते हैं, और स्वप्न देखता है मालविकाका ।

विदूषक—इरावतीको जीतलो ।

निपुणिका—यहतो बड़ा खराब है । इस खम्भेके पास खड़ी होकर सर्पसे भीत इस ब्राह्मणको सांपकी तरह टेढ़े इस लाठीसे डरवाती हूँ ।

इरावती—इस कृतघ्नको सांप काट खाये तो अच्छा हो ।

( निपुणिका विदूषकस्योपरि दण्डकाष्ठं पातयति । )

विदूषकः—( सहसा प्रबुध्य । ) अविहा अविहा । भो वअस्स, सप्पो मे उवरि पडिदो ।[ अविधा अविधा । भो वयस्य, सर्पो म उपरि पतितः । ]

राजा—( सहसोपसृत्य । ) सखे, न भेतव्यं न भेतव्यम् ।

मालविका—( अनुसृत्य । ) भट्टा, मा दाव सहसा णिक्कमदु । सप्पो त्ति भणीअदि । [ भर्तः, मा तावत्सहसा निष्क्रामतु । सर्प इति भण्यते । ]

इरावती—हद्धि हद्धि । भट्टा इदो एव्व धावदि । [ हा धिक् हा धिक् । भर्ता इत एव धावति । ]

विदूषकः—( सप्रहासम् । ) कहं दण्डकट्ठं एदं । अहं उण जाणे जं मए केदईकण्टएहिं डंसं करिअ सप्पस्स उवरि अअसो किदं, तं मे फलिदं

---

'ब्रह्मघ्ने च सुरापे च चौरे च गुरुतल्पगे ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः' । इति

प्रबुध्य निद्रां विहाय, अविधा अप्रशस्तः प्रकारः, उद्वेगकरो व्यापार इति भावः ।

'सर्पो मे उपरि पतितः' एवञ्चाविलम्बं मां त्रातुं धावेति प्रार्थितं ध्वनितम् । अत्रोद्वेजनाद्युक्तिर्नाम सध्यङ्गम् ।

अनुसृत्य अनुगमनं कृत्वा, सहसा हठात्, निष्क्रामतु बहिर्यातु । एतेन मालविकाऽनुरोधेन प्रेमगाढतोक्ता ।

इत एव धावति मदभिमुखमेवागच्छतीत्यर्थः । एतेनेरावत्या व्यग्रता सा च पादपतितेऽपि राजन्यकृतप्रसादतया सापराधत्वेन सम्मुखोपसरणानिच्छाप्रभवा ध्वनिता ।

---

( निपुणिका विदूषकके ऊपर लाठी घुमाती है )

विदूषक—( एकाएक जागकर ) हाय ! हाय ! वयस्य, हमारे ऊपर सांप गिर पड़ा है ।

राजा—( शीघ्र समीप आकर ) डरो मत, डरो मत ।

मालविका-( पीछा करके ) देव, आप बाहर मत जांय, सांपकी बात कह रहा है ।

इरावती—हाय, महाराज यहींसे दौड़े आरहे हैं ।

विदूषक—( हंसकर ) यह तो लाठी है । मुझे जान पड़ा कि मैंने केतकी कण्टक-

त्ति । [ कथं दण्डकाष्ठमेतत् । अहं पुनर्जाने यन्मया केतकीकण्टकैर्दंशं कृत्वा सर्पस्योपर्ययशः कृतम्, तन्मे फलितमिति । ]

( प्रविश्य पटाक्षेपेण । )

**बकुलावलिका—मा दाव भट्टा पविसदु । इह कुडिलगई सप्पो विश्र दीसदि** [ मा तावद्भर्ता प्रविशतु । इह कुटिलगतिः सर्प इव दृश्यते । ]

**इरावती**—( स्तम्भान्तरिता राजानं सहसोपेत्य । ) **अवि णिव्विग्घमणोरहो दिवासंकेदो मिहुणस्स** । [ अपि निर्विघ्नमनोरथो दिवासंकेतो मिथुनस्य । ]

( सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः । )

**राजा—प्रिये, अपूर्वोऽयमुपचारः ।**

**इरावती—बकुलावलिए, दिट्ठिआ भट्टाहिआरविसआ संपुण्णा दे पइण्णा** । [ बकुलावलिके, दिष्ट्या भर्त्रभिसारविषया संपूर्णा ते प्रतिज्ञा । ]

---

तन्मे फलितम् मिथ्यासर्पदंशनमभिनयतः सत्यसर्पदंशनमुपनतमिति भावः । अत एव च मिथ्याऽप्यमङ्गलं न प्रार्थ्यत इति शिष्टाचारः ।

कुटिलगतिः चक्रगतिः ( सर्पः ) इरावती तु ध्वन्यवगम्या ।

मिथुनस्य राजमालविकात्मकस्य द्वन्द्वस्य । दिवासङ्केतः दिवसाभिसारः । सम्भ्रान्ताः भयचकिताः ।

उपचारः प्रीतिव्यवहारः, अपूर्वः अनितरदिवसोपचारसाधारणः, दृष्टमात्र एव मयि परिहासवचनावतारणादिति भावः ।

भर्त्रभिसारविषया भर्त्तारमभिसारयिष्यामि मालविकायाः सविधे समागमय्य

---

से दाढ़ बनाकर जो सर्पको मिथ्या अपवाद लगाया था, उसीका फल यह मुझे मिल रहा है ।

( बकुलावलिकाका प्रवेश )

बकुलावलिका—महाराज, आप मत आवें, यहाँ टेढ़ा साप है ।

इरावती—( सहसा समीप जाकर ) युगल जोड़ीका यह दिवसाभिसारतो निर्विघ्न सम्पन्न हुआ ?

( सभी इरावतीको देखकर आश्चर्यित होते हैं )

राजा—प्रिये, अपूर्वही यह व्यवहार है, देखतेही परिहास ।

इरावती—बकुलावलिका, महाराजके अभिसारके विषयकी तुम्हारी प्रतिज्ञा तो पूरी हुई ?

**बकुलावलिका**—पसीददु भट्टिणी । किं मए किदंत्ति देवो पुच्छिदव्वो । दद्दुरा वाहरन्तित्ति किं देवो पुहविं वरिसिदुं सुमरेदि । [प्रसीदतु भट्टिनी । किं मया कृतमिति देवः प्रष्टव्यः । दर्दुरा व्याहरन्तीति किं देवः पृथिवीं वर्षितुं स्मरति । ]

**विदूषकः**—मा दाव । भोदीए दंसणमत्तेण अत्तभवं पणिवादलङ्घणं विसुमरिदो । तुमं उण अज्जवि पसादं ण गेण्हसि । [ मा तावत् । भवत्या दर्शनमात्रेणात्रभवान्प्रणिपातलङ्घनं विस्मृतः । त्वं पुनरद्यापि प्रसादं न गृह्णासि । ]

---

तया योजयिष्यामीति प्रतिज्ञा निश्चयः । सम्पूर्णा सार्था ( जाता किमिति प्रश्नः ) एतेन तद्विषय इरावत्याः कोपो व्यक्तः ।

देवः राजा ( प्रकरणबलाद्देवपदस्य राजरूपार्थे शक्तिर्नियन्त्र्यते ) दर्दुराः भेकाः, व्याहरन्ति रटन्ति, इति अस्मात् कारणात् , देवः मेघः ( तदधिष्ठातृदेवता-विशेषः ) वर्षितुम् वृष्टये, पृथिवीम् धरित्रीम्, स्मरति ध्यायति ।

अयमाशयः—यथा हि वर्षासमये दर्दुरशब्दाकर्णनकृता न घनस्य जलदानेन धरामाप्लावयितुं प्रवृत्तिरपि तु स्वेच्छया नियत्या वा प्रेरिता, तथैव राज्ञो मालविका-विषयाऽऽसक्तिर्न मया घटिता किन्तु राजेच्छयैव जातेति वृथा मयि भवत्याः कोप-कलुषम्मन इति । अत्र समादप्रस्तुतात् प्रस्तुतसमप्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः । साधितराजमनोरथायास्तदनुग्रहलाभविश्वासकृता राजावरोधेन सहेदृशी प्रौढा व्याहृतिः ॥

मा तावत् अनुचितमिदं कथोपकथनकृतं पारुष्यवर्द्धनम्, तन्निरुध्यतामित्यर्थः, स्वोक्तार्थे प्रमाणमुपन्यस्यति—भवत्या इति । भवत्या दर्शनमात्रेण दृष्टमात्रायां त्वयि, अत्रभवान् माननीयः, प्रणिपातलङ्घनम् त्वया विहितपूर्वम् पादपतनेऽप्यप्रसादरूपं स्वावमानम् , विस्मृतः ध्यानादपानयत् (एतेन राज्ञः सरलहृदयता व्यक्ता, सा च कुपितामपीरावतीं प्रति सरलव्यवहारेण प्रमाणिताऽपि । अद्यापि कालकृतेऽपराध-लाघवे जातेऽपि, प्रसादं न गृह्णासि न प्रसीदसि, तदिदं तवानुचितमिति भावः ।

---

**बकुलावलिका**—आप नाराज न हों, मैंने क्या किया है सो राजासे पूछ लीजिये । क्या मेढ़कोंके रटनेसे हो मेघ पृथ्वीको जलप्लावित करता है ?

**विदूषक**—ऐसा नहीं, तुम्हें देखतेही महाराज तुम्हारेद्वारा कियेगये अपमानको भूलगये किन्तु तुम अभीभी प्रसन्न नहीं होरही हो ।

इरावती—कुविदा दाणिं अहं किं करिस्सं । [ कुपितेदानीमहं किं करिष्यामि । ]

राजा—एवमेतत् अस्थाने कोप इत्यनुपपन्नं त्वयि । तथाहि—

कदा मुखं वरतनु कारणादृते तवागतं क्षणमपि कोपपात्रताम् ।
अपर्वणि ग्रहकलुषेन्दुमण्डला विभावरी कथय कथं भविष्यति ॥ १६॥

किङ्करिष्यामि न किमपि साधयितु बाधितु वाऽहं क्षमा, सामर्थ्यविरहात्, ( स च भर्त्रनुरागातिशयाभावात्, तदनेनेरावत्या खेदः प्रकटितः )

अस्थाने अयुक्तः, त्वयि विचारवत्तया प्रसिद्धायाम्, अन्यासां जायतामस्थाने कोपः, परं विचारचतुरायास्तव नोपपद्यते कारणमनन्विष्य कोपोदय इति भावः।

कदा मुखमिति । वरा श्रेष्ठा ( सर्वाङ्गानवद्या ) तनुः मूर्त्तिर्यस्यास्सा तत्सम्बुद्धौ वरतनु रमणीयगात्रि, तव मुखम् कारणात् ऋते हेतुं विना कदा कस्मिन् काले ( क्षणमात्रस्यापि कृते ) कोपपात्रताम् कोपसूचकविकारभाजनत्वम् आगतम् प्राप्तम्? अधुनावधि कदापि अहर्मासाब्दानां का कथा क्षणमेकमपि भवत्या मुखमकारणकोपकलुषं न जातमथ सम्प्रति तथा जायत इत्यनुचितमिति भावः । तत्र दृष्टान्तमाह—अपर्वणीति । पर्वपदस्य पूर्णिमादिशक्तत्वेऽप्यत्र पूर्णिमाप्रतिपत्सन्ध्युपलक्षकत्वम्, तथा चापर्वणि पूर्णिमाप्रतिपत्सन्ध्यतिरिक्ते समये ग्रहकलुषम् राहुसम्पर्कमलिनम् इन्दुमण्डलं चन्द्रबिम्ब यस्याम् तादृशी विभावरी रात्रिः कथं केन प्रकारेण भविष्यति न कथमपीत्यर्थः । यथाऽपर्वणि रात्रिर्ग्रस्तचन्द्रमण्डला न भवितुमर्हति तथा त्वमप्यसति कोपकारणे कोपकलुषमुखी भवितुं नार्हसीति भावः । सधर्मस्य वस्तुनः प्रतिबिम्बनाद् दृष्टान्तालङ्कारः । अत्र रूढिप्रयोजनयोरभावेऽपि पर्वशब्देन पूर्णिमाप्रतिपत्सन्धिरूपलक्ष्यार्थस्य प्रकाशनान्नेयार्थत्वं नाशङ्कनीयम्, चन्द्रग्रहणप्रकरणे पर्वपदस्य तत्रार्थे निरूढत्वात्, तथा च श्राद्धविवेके जमदग्निवचनम्—

'पर्वकाले तु सम्प्राप्ते चन्द्रार्कौ छादयिष्यसि । भूमिच्छायागतश्चन्द्रं चन्द्रगोऽर्कं कदाचन'॥

ग्रहपदमत्र राहुपरमतो न विशेषेऽविशेषाख्यदोषः, तथा च मेदिनी—

'अनुग्रहे च निर्बन्धे ग्रहणे च रणोद्यमे । पूतनादौ सैंहिकेये उपरागेऽपि च ग्रहः' ॥

---

इरावती—मैं रंज होकर ही क्या करलूंगी ? ।

राजा—बेजगह बिगड़ पड़ना तुम्हें नहीं शोभता ।

हे सुगात्रि, ( इससे पूर्व ) विनाकारणके तुमने कब कोप प्रकाश किया ?

इरावती—अट्ठाणे त्ति सुट्ठु वाहरिदं अज्जउत्तेण । अण्णसंकन्तेसु अम्हाणं भाअहेएसु जइ उण कुप्पेअं, तदो णं अहं हस्सा भवेअं । [ अस्थान इति सुष्ठु व्याहृतमार्यपुत्रेण । अन्यसंक्रान्तेष्वस्माकं भागधेयेषु यदि पुनः कुप्येयम्, नन्वहं हास्या भवेयम् । ]

राजा—त्वमन्यथा कल्पयसि । अहं पुनः सत्यमेव कोपस्थानं न पश्यामि । कुतः

नार्हति कृतापराधोऽप्युत्सवदिवसेषु परिजनो दण्डम् ।
इति मोचिते मयैते प्रणिपतितुं मामुपगते च ॥ १७ ॥

---

पूर्णिमाप्रतिपत्सन्धिसमये ग्रहणं भवतीत्यत्र ज्यौतिषवचनम्—

'यस्मिन्नृक्षे रविस्तस्माच्चतुर्दशगतः शशी ।
पूर्णिमाप्रतिपत्सन्धौ राहुणा ग्रस्यते शशी' ॥ इति ।

रुचिरा वृत्तम् 'जभौ सजौ गिति रुचिरा चतुर्ग्रहैः' इति च तल्लक्षणम् ॥१६॥

सुष्ठु साधु, व्याहृतम् उक्तम् 'व्याहार उक्तिर्लपितं भाषितं वचनं वचः' इति कोशः, 'अस्थाने कोपः' इति राज्ञा कोपस्यायुक्तत्वमभिप्रेत्योक्तम्, इरावत्या तु राज्ञोऽन्यसंक्रान्तचित्ततया कोपस्य प्रणयिजने एव कार्यतया च अनुपयुक्ते पात्रे कोपः कृत इत्याशयेन सुष्ठुवचनत्वं समर्थितमिति बोध्यम् । भागधेयेषु भाग्येषु प्रियप्रेमपात्रत्वेषु, अन्यसंक्रान्तेषु अन्यस्यां मालविकाभिधायां वनितायां गतेषु । हास्या अप्रियं प्रियं मत्वा कुपितत्वेनोपहासयोग्या। कोपजनितचेतोविकृत्येत्थमुक्तम्, अन्यथा अप्रासङ्गिकम्, ( मालविकायां मदीयमनुरागम् )

नार्हतीति । कृतापराधः विहितागा अपि परिजनः परिचारकलोकः उत्सवदिवसेषु दण्डं कारावासादिरूपं दमनम् न अर्हति । इति हेतोः एते मालविकाबकुलाव-

---

पूर्णिमाके विनाही राहुग्रहणसे चन्द्रमण्डल कलुषित होजाय, ऐसी बात किस रात्रिमें होती है ?

इरावती—मैं बेजगह क्रोध करती हूँ यह आपका कहना ठीक है । हमारा सौभाग्य किसी औरको मिल रहा है, अगर इसपर क्रोध करूंगी तो हंसी होगी ।

राजा—तुमतो दूसरीही कल्पना करने लगती हो, मैंतो वस्तुतः क्रोधका कारण नहीं देखता । क्यों कि—

उत्सवके दिनोंमें अपराधी परिजनको भी दण्डदेना उचित नहीं होगा इसीलिये

इरावती—णिउणिए, गच्छ। देवीं विण्णावेहि। दिट्ठं भवदीए एक्कपक्खपादित्तणं। अवहिदं मे हिअअं अज्ज त्ति। [ निपुणिके, गच्छ। देवीं विज्ञापय। दृष्टं भवत्याः एकपक्षपातित्वं अवधृतं मे हृदयमद्येति। ]

निपुणिका—तह। ( इति निष्क्रान्ता। ) [ तथा। ]

विदूषकः—( आत्मगतम्। ) अहो, अणत्थो संपडिदो। बन्धणब्भट्ठो गिहकवोदो बिडालिआए आलोए पडिदो। [ अहो, अनर्थः संपतितः। बन्धनभ्रष्टो गृहकपोतो बिडालिकाया आलोके पतितः। ]

लिके मोचिते बन्धन त्याजिते मुक्तबन्धनतां नीते इत्यर्थः। ननु काम ते मुच्येयातां, न तत्र कोऽपि मम विवादः, परमत्रोपस्थितिः किमर्थेति चेदत्राह—प्रणिपतितुमिति। मां प्रणिपतितुं मोचनजनितकृतज्ञताज्ञापनाय प्रणाम, कर्त्तुम् उपगते अत्रायाते। एवञ्च नास्ति तवात्रान्यथाकल्पनेति भावः। अत्रोद्भिन्नस्यापि राजमालविकयोः प्रेमसङ्गमस्य प्रणामव्याजोपन्यासेन गोपनाद् व्याजोक्तिरलङ्कारः। आर्या वृत्तम् ॥ १७ ॥

भवत्याः देव्याः, एकपक्षपातित्वम् एकतरसाहाय्यकारित्वम् दृष्टम् अनया घटनयाऽवगतम्। अवधृतम् कृतावधारणम्। देव्या अङ्गुलीमुद्रामदृष्ट्वा कथमिमे मुक्तबन्धने कर्त्तुं क्षमेत कश्चित्, सुतरां मालविकापक्षपातिनी देव्येव राजमङ्गलकामनाव्याजेन मालविकां बन्धनान्मोचयित्वा तां राज्ञा योजितवती, तदयं तस्याः पक्षपातो मया हृदयेऽवधारित इति सन्देशाशयः।

तथा यथात्वदादेशं देव्यै सन्देशं प्रापयामीत्यर्थः।

अनर्थः विपत्तिः, सम्पतितः उपस्थिता। विपत्तिमुपपादयति—बन्धनेति। गेहकपोतकः गृहपालितः क्षुद्रः कपोतः, एतेन पलायनाशक्तिरुक्ता। बिलाडिकायाः मार्जारिकायाः, आलोके दृष्टिपथे, आलोकपदस्य प्रकाशार्थे प्रयुक्तत्वेऽपि दृष्टिपथार्थतया कालिदासेन मेघदूतेऽपि कृतः प्रयोगः, यथा—

---

इन दोनों ( मालविका और बकुलावलिका ) को छुड़वा दिया गया है, और वे दोनों कृतज्ञता ज्ञापनके लिये प्रणाम करने आई हैं ॥ १७ ॥

इरावती—निपुणिका, जाकर देवीसे कह, आपका भी पक्षपात देखलिया गया। आज हमारे हृदयको विश्वास हो गया।

निपुणिका—जो आज्ञा ( जाती है )

विदूषक—अरे, अनर्थ हुआ ! बन्धन मुक्त गृहकपोत बिलाड़की नजरमें पड़गया।

निपुणिका—( प्रविश्यापवार्य । ) भट्टिणि, जदिच्छादिट्ठाए माहविआए आचक्खिदं । एव्वं क्खु एदं णिव्वुत्तं त्ति ( इति कर्णे कथयति । ) [ भट्टिनि, यदृच्छादृष्टया माधविकयाख्यातम् । एवं खल्वेतन्निर्वृत्तमिति । ]

इरावती—( आत्मगतम् । ) उववण्णं । सच्चं अअं एत्थ ब्रह्मबन्धुणा किदो पओओ । ( विदूषकं विलोक्य । ) इअं इमस्स कामतन्तसचिवस्स णीदी । [ उपपन्नम् । सत्यमयमत्र ब्रह्मबन्धुना उद्भिन्नः प्रयोगः । इयमस्य कामतन्त्र-सचिवस्य नीतिः । ]

विदूषकः—भोदि, जदि णीदीए एक्कं वि अक्खरं पढेअं, ण मए अत्तभवं संस्सिदो हवे । [ भवति, यदि नीतिगतमेकमप्यक्षरं पठेयम्, न मयात्रभवान्संश्रितो भवेत् । ]

---

'आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती'। इति ।

यथा बन्धनान्मुक्तः कपोतशिशुर्मार्जारिकाया दृष्टिपथे पतितो विपद्यते तथेयं मालविका राज्ञा मिलितमात्राऽलब्धभार्योचिताधिकारा चेरावत्या दृष्टौ पतिता विपद्येतेत्यर्थ आपतित इति सारांशः । अत्राप्रस्तुतप्रशंसाऽलङ्कारः ।

यदृच्छादृष्टया अतर्कितभावेन मिलितया, माधविकया तदाख्यया सारभाण्डगृह-रक्षाऽधिकृतया परिचारिकया, आख्यातम् उक्तम्, एतत् मालविकाबकुलावलिक-योर्मोचनम्, निर्वृत्तम् सम्पन्नम् । "राज्ञः सोपसर्गं नक्षत्रमतः सर्वबन्धनमोक्षो विधी-यतामि'ति दैवज्ञैरभिहितमित्यभिधाय गौतमेन प्रदर्शिता सा देव्या अङ्गुलीयमुद्रा, ततो मया मोचिते मालविकाबकुलावलिके" इति कर्णे कथितमित्याशयः ॥

उपपन्नम् युक्तम्, ( सम्भवानतिशायि ) ब्रह्मबन्धुना ब्राह्मणाधमेन, उद्भिन्नः प्रकल्पितः, प्रयोगः उपायः, कामतन्त्रसचिवस्य कामविषये सहायकस्य नर्मसचिवस्य ।

नीत्याः नीतिशास्त्रस्य, अत्रभवन्तम् माननीयम्, ( राजानम् ) संश्रितः सेवक-

---

निपुणिका—( प्रवेश करके, धीरेसे ) सरकार, माधविका मिलगई, उसने कहा कि यह ऐसे ऐसे हुआ । ( कानमें कुछ कहती है )

इरावती—( स्वगतं ) सब संभव है । इस ब्राह्मणाधमने ही उपाय सोचा है । (विदूषककी ओर देखकर, प्रकाशमें) कामसचिव इस ब्रह्मबन्धुकी ही यह नीति है ? ।

वदूषक—यदि नीतिशास्त्रका एकभी अक्षर जानता तो इनके आश्रयमें नहीं रहता ।

राजा—( आत्मगतम् । ) आः कथं नु खल्वस्मात्संकटादात्मानं मुच्यावहै

( प्रविश्य । )

जयसेना—देव, कुमारी वसुलच्छी कन्दुअं अणुधावन्दी पिङ्गलवाणरेण बलीअं वित्तासिदा अङ्कणिसण्णा देवीए पवादकिसलअं विअ वेवमाणा ण किंपि पकिदिं पडिवज्जइ । [देव, कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिङ्गलवानरेण बलवत्त्रासिताङ्कनिषण्णा देव्याः प्रवातकिसलयमिव वेपमाना न किंचित्प्रकृतिं प्रतिपद्यते । ]

राजा—कष्टं कष्टम् । कातरो बालभावः ।

इरावती—( सावेगम् । ) तुवरदु अज्जउत्तो णं समासासिदुं । मा से संतासजणिदो विआरो वड्ढदु । [त्वरतामार्यपुत्र एनां समाश्वासयितुम् । मास्याः

भावेन प्रपन्नः, सति नीतिपरिचये राजपूजितभावेन जीवनं गमयेयं नतु विदूषकभावेन राजेङ्गितमात्रवृत्तिर्भवेयमिति भावः ।

आः पीडायाम्, सङ्कटात् विपदः, मुच्यावहै मुक्तौ भवेव ( अहं त्वं गौतमश्च )

जयसेना तदाख्या परिचारिका । वसुलक्ष्मीः तदाख्या धारिणीगर्भजा राजपुत्री । कन्दुकम् 'गेंद' इति प्रसिद्धं खेलनद्रव्यम् । अनुधावन्ती क्षिप्यमाणं सवेगं च कन्दुकमनुसरन्ती । पिङ्गलवानरेण तदाख्येन तद्वर्णेन वा मर्कटेन । बलीयः अत्यर्थम् , वित्रासिता भयं गमिता । अङ्कनिषण्णा क्रोडे स्थापिता । प्रवातकिसलयमिव वेगवद्वायुचालितपल्लववत् । वेपमाना कम्पमाना । न किमपि प्रतिपद्यते न किञ्चन चेतयते । 'बलीयः' पदेनात्र कविनाऽत्यन्तमित्यर्थो विवक्षितः, दृश्यते चेदृशः प्रयोगोऽस्य कवेः शाकुन्तलेऽपि—'निर्घृण, तपति बलीयस्त्वयि वृत्तमनोरथान्यङ्गानि' ।

कातरो बालभावः कातर्यं बालस्वभावसिद्धमित्यर्थः ।

समाश्वासयितुम् आश्वासनेन चैतन्यमानेतुम् । विकारः भयकृतं चैतन्यराहित्यम् ।

राजा—( विदूषकसे धीरे धीरे ) अरे, इस आफदसे कैसे बचूं ।

( सावेग जयसेनाका प्रवेश )

जयसेना—देव कुमारी वसुलक्ष्मी गेंदके पीछे दौड़रही थीं, इसी समय पिङ्गल वानरने उन्हें भयभीत कर दिया है । वह देवीकी गोदमें हैं, किन्तु हवामें पत्तेकी तरह कांपती हैं, होश नहीं होरहा है ।

राजा—हाय, बच्चे बड़े भयशील होते हैं ।

इरावती—( आवेगपूर्वक ) आर्यपुत्र शीघ्र उसे आश्वासित करें, उसका भयकृत

संत्रासजनितो विकारो वर्धताम् । ]

**राजा**—अयमेनामहं संज्ञापयामि । ( इति सत्वरं परिक्रामति । )

**विदूषकः**—साहु रे पिङ्गलवाणर, साहु । परित्तादो तुए सपक्खो । [ साधु रे पिङ्गलवानर, साधु । परित्रातस्त्वया स्वपक्षः । ]

( निष्क्रान्तो राजा विदूषकश्च । इरावती निपुणिका प्रतीहारी च । )

**मालविका**—हला, देविं चिन्तिअ वेवदि मे हिअअं । ण जाणे अदो वरं किं वा अणुहविदव्वं हविस्सदि त्ति । [ सखि, देवीं चिन्तयित्वा वेपते मे हृदयम् । न जानेऽतः परं किं वानुभवितव्यं भविष्यतीति । ]

( नेपथ्ये । )

अच्चरिअं अच्चरिअं । अपुण्णे एव्व पञ्चरत्ते दोहलस्स मुउलेहिं संणद्धो तवणीआसोओ । जाव देवीए णिवेदेमि । [ आश्चर्यमाश्चर्यम् । अपूर्ण एव पञ्चरात्रे दोहदस्य मुकुलैः संनद्धस्तपनीयाशोकः । यावद्देव्यै निवेदयामि । ]

---

वर्द्धताम् वर्द्धमानं सत् कमपि विघ्नं विधत्ताम् ।

संज्ञापयामि जातसंज्ञां करोमि । एतेन राज्ञः स्वाभाविकं धैर्यं व्यक्तम् ।

साधुपदद्विरुक्तिरानन्दद्योतनाय । परित्रातः वसुलक्ष्म्या वित्रासनेन सङ्कटान्मोचितः स्वपक्षः पुरुषजातीय आत्मीयवर्गोऽस्मदादिलक्षणः । ( अन्यथाऽद्यास्या हस्तादस्माकं निर्मोक्षो नाभविष्यदित्याशयः ।

देवीं चिन्तयित्वा देव्यामवगतवृत्तायां तदीयं कोपं विभाव्येत्यर्थः । कम्पकारणमुक्त्वा दुःखस्वरूपमाह—न जान इति । अनुभवितव्यम् सोढव्यम् , इरावतीमुखात् सह राज्ञा निभृते स्थाने ममावस्थानमाकर्ण्य देवी पुनरपि कमपि घोरतरं दण्डमादेक्ष्यतीति भयेन कम्पते मम मानसमिति भावः ।

दोहदस्य अभिलाषस्य, अशोकतरौ मालविकया कृतस्य पुष्पोद्गमफलकतया

---

विकार बढ़ने न पावे ।

राजा—मैं उसे अभी होशमें लाता हूँ । (शीघ्रतासे जाता है )

विदूषक—शाबास पिङ्गल ! तुमने स्वपक्षको उबार लिया ।

( राजा, विदूषक, इरावती, निपुणिका, प्रतीहारी, सबका प्रस्थान )

मालविका—सखी, देवीके भयसे मेरा हृदय कांप रहा है । नहीं जानती इसके आगे क्या क्या भोगना है ?

( नेपथ्यमें )

आश्चर्य, आश्चर्य, अशोक तरुके दोहदके पांच दिन पूरे भी नहीं बीते, उसने फूल खिला दिए । चलो देवीको खबरदें ।

( उभे श्रुत्वा प्रहृष्टे । )

**बकुलावलिका**—आस्ससिदु सही । सच्चप्पइण्णा देवी । [ आश्वसितु सखी । सत्यप्रतिज्ञा देवी । ]

**मालविका**—तेण हि पमदवणपालिआए पिट्ठदो होमि । [ तेन हि प्रमदवनपालिकायाः पृष्ठतो भवामि । ]

**बकुलावलिका**—तह । [ तथा । ]

( इति निष्क्रान्ते । )

इति चतुर्थोऽङ्कः ।

---

सम्भावितस्य पदाघातस्येति प्राकरणिकोऽर्थः । सन्नद्धः पूर्णः । यावत् प्रथमम् । इयं मदनावल्या नामोद्यानपालिकाया उक्तिः ।

सत्यप्रतिज्ञा सत्यवचना । एतेन देव्या तुभ्यमशोकतरौ चरणाघातायादेशं वितरन्त्या यत्तवाशापूरणं प्रतिज्ञातं तत्तयाऽवश्यं पालयिष्यत इत्याशासे ततश्च तव हितमेव साऽनुष्ठास्यति नतु दण्डं विधास्यतीति मा भैषीरित्यर्थः । क्रोडीकृतो बोध्यः । अत्र देव्यनुग्रहरूपकार्यसंग्रहणादादानं नाम संध्यङ्गमुक्तम् ।

पृष्ठतो भवामि पश्चाद् व्रजामि । एतेनानयाऽशोकतरोः पुष्पितत्वे निवेद्यमाने सन्तुष्टान्तरङ्गया देव्या कदाचित् लभ्येत ममाग इत्याशा व्यक्ता । तथा उचितं त्वया चिन्तितम् । इद मालविकाकृतमुद्यानपालिकाऽनुसरणमुत्तराङ्कोपयुक्तत्वाद्बिन्दुरिति विभावनीयम् ॥

इति मैथिलपण्डितश्रीयुतरामचन्द्रमिश्रशर्मप्रणीते मालविकाग्निमित्र-'प्रकाशे'चतुर्थाङ्कप्रकाशः ॥

---

**( दोनों सुनकर सन्तुष्ट होती हैं )**

**बकुलावलिका—सखी, धीरज धरो ।**

**मालविका—इसीलिये मैं प्रमदवनकी मालिनके पीछे होलेती हूँ ।**

**बकुलावलिका—ठीक है ।**

**( दोनोंका प्रस्थान )**

**चतुर्थ अङ्क**



# पञ्चमोऽङ्कः ।

( ततः प्रविशत्युद्यानपालिका । )

उद्यानपालिका—उवक्खित्तो मए किदसक्कारविहिणो तवणीआसोअस्स वेदिआबन्धो । जाव अणुट्ठिदणिओअं अत्ताणं देवीए णिवेदेमि । (परिक्रम्य ।) अहो दैवस्स अणुकम्पणीआ मालविआ । तस्सिं तह चण्डिआ देवी इमिणा असोअकुसुमवुत्तन्तेण पसादसुमुही हविस्सदि । कहिं णु क्खु देवी हवे । (विलोक्य ।) अम्हो, एसो देवीए परिअणब्भन्तरो किंवि जदुमुद्दालञ्छिदं मञ्जूसं गेण्हिअ चदुस्सालादो कुज्जो सारसिओ णिक्कमदि । पुच्छिस्सं दाव णं । ( ततः प्रविशति यथानिर्दिष्टहस्तः कुब्जः । ) सारसिअ, कहिं पत्थिदोसि । [ उपक्षिप्तो मया कृतसत्कारविधिस्तपनीयाशोकस्य वेदिकाबन्धः । यावदनुष्ठितनियोगमात्मानं देव्यै निवेदयामि । अहो दैवस्यानुकम्पनीया मालविका । तस्यां तथा चण्डी देव्यनेनाशोककुसुमवृत्तान्तेन प्रसादसुमुखी भविष्यति । कुत्र नु खलु देवी भवेत् ? । अहो, एष देव्याः

---

कृतसत्कारविधेः मूलावच्छेदेन जलसेकादिना विहितादरस्य, तपनीयाशोकस्य अशोकतरुप्रभेदस्य, भित्तिवेदिकाबन्धः जलसमूहनाय भित्तिरिव प्रोन्नताया वेदिकायाः आलवालस्वरूपाया बन्धः निर्माणम् । उपक्षिप्तः समर्पितः कृत इत्यर्थः । अनुष्ठितनियोगम् पालितादेशम् , अहो आश्चर्यम्, दैवस्य भाग्यस्य, अनुकम्पनीया कृपापात्रम् , । तस्याम् मालविकायाम् , तथा तादृशी, चण्डिका अत्यन्तकोपना, देवी धारिणी, अशोकहर्षदोहदवृत्तान्तेन तपनीयाशोकतरोर्यो हर्षजनकश्चरणाघातोपस्थापितो दोहदवृत्तान्तः दोहदोपकल्पितकुसुमोद्गमसमाचारस्तेन, प्रसादसुमुखी प्रसन्ना । राज्ञा सह मालविकायाः प्रणयव्यापारमाकर्ण्य तस्यां धृतानल्पकोपाऽपि देवीदानीं तपनीयाशोकतरुदोहदवृत्तान्तमुपश्रुत्य प्रसन्ना तां पुरस्करिष्यत्येव न पुनर्दण्डयिष्यती-

---

( उद्यानपालिकाका प्रवेश )

उद्यानपालिका—मैंने तपनीयाशोकका सत्कार करके उसकी जड़में क्यारी बनादी है, महारानीसे निवेदन करदूँ कि उनका हुक्म तामिल होगया है । (घूमकर) आश्चर्य, भाग्यने मालविकाकी बड़ी मददकी । महारानी उसपर बहुत बिगड़ी हुई थी, इस अशोकके आनन्द जनक समाचारको सुनकर प्रसन्न हो उठेंगी । देवी हैं कहाँ ? ( देखकर ) ओ, यहीतो देवीके परिचारकोंमें से एक सारसिक नामका परि-

परिजनाभ्यन्तरः किमपि जतुमुद्रालाञ्छितां मञ्जूषां गृहीत्वा चतुःशालातः कुब्जः सारसिको निष्क्रामति। प्रक्ष्यामि तावदेनम्। सारसिक, कुत्र प्रस्थितोऽसि। ]

**सारसिकः**—महुअरिए, विज्जाभरिआणं बह्मणाणं णिच्चदक्खिणं मासिई पुरोहिदस्स हत्थं पावइस्सं। [ मधुकरिके, विद्याभरितानां ब्राह्मणानां नित्यदक्षिणां मासिकीं पुरोहितस्य हस्तं प्रापयिष्यामि। ]

**मधुकरिका**—अह किंणिमित्तं। [ अथ किंनिमित्तम्। ]

**सारसिकः**—जदप्पहुदि सेणावदिजण्णतुरंगरक्खणे णिउत्तो भट्टदारओ वसुमित्तो तदप्पहुदि तस्स आउसणिमित्तं णिक्कसदसुवण्णपरिमाणं दक्खिणं देवी दक्खिणीएहिं परिग्गाहेदि। [ यतःप्रभृति सेनापतियज्ञतुरंगरक्षणे नियुक्तो भर्तृदारको वसुमित्रस्ततःप्रभृति तस्यायुर्निमित्तं निष्कशतसुवर्णपरिमाणां दक्षिणां देवी दक्षिणीयैः परिग्राहयति। ]

---

त्यहो मालविकाया भाग्यवत्त्वमिति भावः। परिजनाभ्यन्तरः परिजनेष्वन्यतमः। जतुमुद्रालाञ्छिताम् लाक्षामुद्रिताम् ( सुरक्षायै गुप्ततायै चाधुनापि लाक्षामुद्रा व्यवह्रियते ) कुत्र कार्यविशेषे इति शेषः। प्रस्थितासि चलितासि।

विद्याभरितानाम् विशेषविद्याशालिनाम्। नित्यदक्षिणाम् प्रत्यहदेयदक्षिणाम्। मासिकीम् मासव्यापिनीम्, मासपर्यन्तदातव्यामित्यर्थः।

किन्निमित्तम् कस्मै फलाय प्रत्यह दक्षिणाद्रव्यं विद्यावत्तमेभ्यो वितीर्यत इति जिज्ञासा।

यज्ञतुरङ्गरक्षणे अग्निमित्रपितुः पुष्यमित्रस्याश्वमेधीयाश्वरक्षायाम्।

सेनापतिः सेनापतित्वेन कल्पितः। वसुमित्रः तदभिधानः। नियुक्तः अधिकृतः। निष्कशतं सुवर्णपरिमाणं काञ्चनमात्रा यस्यास्ताम् निष्कशतपरिमितस्वर्णपरिच्छिन्नाम्। दक्षिणाम् दानम्। दक्षिणीयैः प्रतिग्राहयति दक्षिणापात्रब्राह्मणेभ्यो वितरति।

---

चारक सीलमोहर पेटी लिये चतुःशालगृहसे इधरही आरहा है, इसीसे पूछलूं। ( यथावर्णित कुब्ज परिचारकका प्रवेश ) सारसिक, किधर चले हो ?

सारसिक—मधुकरिके, विद्वानोंको प्रतिदिन देनेके लिये यह एक मासकी दक्षिणा पुरोहित महाशयको देने जा रहा हूँ।

मधुकरिका—इसका प्रयोजन ?

सारसिक—जिसदिनसे राजकुमार वसुमित्र यज्ञाश्वके रक्षामें नियुक्त हुए तभीसे महारानी उनके कल्याणार्थ सौ निष्क सोना प्रतिदिन पात्रोंमें बंटवा रही हैं।

मधुकरिका—अह कहिं देवी । किं वा अणुचिट्ठदि । [ अथ कुत्र देवी । किं वानुतिष्ठति । ]

सारसिकः—मङ्गलघरे आसणत्था भविअ विदब्भविसआदो भादुणा वीरसेणेण पेसिदं लेहं लेहकरेहिं वाइअमाणं सुणादि । [ मङ्गलगृह आसनस्था भूत्वा विदर्भविषयाद्भ्रात्रा वीरसेनेन प्रेषितं लेखं लेखकैर्वाच्यमानं शृणोति । ]

मधुकरिका—को उण विदब्भराअवुत्तन्तो सुणीअ दि । [ कः पुनर्विदर्भराजवृत्तान्तः श्रूयते । ]

---

प्रतिदिनं निष्कशतपरिमितं सुवर्णं देवी निजस्य सूनोर्वसुमित्रस्याशिवप्रमार्जनाय पात्रेभ्यो वितरतीत्यर्थः । अशीतिरक्तिकापरिमितेन स्वर्णेनैकः सुवर्णः, चतुर्भिः सुवर्णैरेको निष्कः, तथा च मनुः—

'पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश ।
चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः' ॥

दक्षिणामर्हन्तीति दक्षिणीयाः दक्षिणापात्राणि, तैः प्रतिग्राहयतीत्यत्र प्रयोज्यकर्तरि तृतीया, तस्यानुक्तत्वात् । दक्षिणीयशब्दे 'कडङ्करदक्षिणाच्छ च'(१) इति छप्रत्ययः । स्वर्णदानफलं प्रोक्तमग्निपुराणे—यथाः—

'सर्वान् कामान् प्रयान्त्येते पितामहसुतोऽब्रवीत् ।
मरीचिर्भगवान् पूर्वं ये प्रयच्छन्ति काञ्चनम्' ॥

विदर्भविषयात् विदर्भदेशात्, लेखम् पत्रम् लेखकैः पत्रादिलेखनाय नियुक्तैः ( किरानीति प्रसिद्धैः ) वाच्यमानम् पठ्यमानम् ।

---

मधुकरिका—महारानी कहाँ क्या कर रही हैं ?

सारसिक—मङ्गलगृहमें आसनपर बैठी विदर्भसे अपने भाई वीरसेन द्वारा प्रेषित पत्र पढ़वाकर सुन रही हैं ।

मधुकरिका—विदर्भराजके बारेमें क्या सुना जाता है ?

---

( १ ) सूत्रमिदं कालिदासेनोदाहरणद्वयं प्रयुज्यादृतम्, तत्र दक्षिणीयपदमत्रैव द्विधा । कडङ्करीयपदमपि रघुवंशे प्रयुक्तं दृश्यते, यथाः—

नीवारपाकादिकडङ्करीयैरामृश्यते जानपदैर्न कच्चित् ।
कालोपपन्नातिथिकल्प्यभागं वन्यं शरीरस्थितिसाधनं वः ॥५।९॥

**सारसिकः**—वसीकिदो क्खु वीरसेणप्पमुहेहिं भत्तुणो विजअदण्डेहिं विदब्भणाहो। मोइदो से दाआदो माहवसेणो। दूदो अ तेण महासाराणि रअणाणि वाहणाणि सिप्पआरिआभूइट्ठं परिअणं उवाअणीकरिअ भट्टिणो सआसं पेसिदो त्ति। [वशीकृतः किल वीरसेनप्रमुखैर्भर्तुर्विजयदण्डैर्विदर्भनाथः। मोचितोऽस्य दायादो माधवसेनः। दूतश्च तेन महासाराणि रत्नानि वाहनानि शिल्पकारिकाभूयिष्ठं परिजनमुपायनीकृत्य भर्तुः सकाशं प्रेषित इति।]

**मधुकरिका**—गच्छ, अणुचिट्ठ अत्तणो णिओअं। अहं वि देविं पेक्खिस्सं। [गच्छानुतिष्ठात्मनो नियोगम्। अहमपि देवीं प्रेक्षिष्ये।]

(इति निष्क्रान्तौ।)

इति प्रवेशकः।

---

वशीकृतः स्वाधीनीकृतः, वीरसेनप्रमुखैः वीरसेनप्रधानैः, भर्तुः अग्निमित्रस्य, दण्डचक्रैः दमनार्थं नियुज्यमानैर्योधैः, अस्य विदर्भनाथस्य, दायम् सङ्क्रान्तधनम् आददातीति दायादः सपिण्डः, तेन वीरसेनेन, महासाराणि महार्हाणि, रत्नानि वैदूर्यप्रभृतीनि वाहनानि हस्त्यश्वादीनि, रत्नानि वाहनानि चेति द्वन्द्वः। शिल्पिनः कारवः, दारिकाः कन्याश्च, तैर्भूयिष्ठं बहुलितं परिजनम् वन्दीभूतलोकसमूहम्। उपायनीकृत्य उपहारतयाऽऽनीय। सः दूतः, भर्तारं प्रेक्षिष्यते अग्निमित्रं साक्षात्कृत्य सर्वं शिल्पिदारिकारत्नवाहनादीनि पराजितेन राज्ञोपायनभावेन प्रेषितानि समुपहरिष्यतीति भावः।

प्रवेशकः तल्लक्षणं यथा—

'प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा'॥

---

**सारसिक**—महाराजके वीरसेन प्रभृति सैनिकोंने विदर्भराजको बन्दी बनालिया, और उसके दायाद माधवसेनको मुक्तकरवा दिया। माधवसेनने बहुतसे कीमती रत्न, हाथी, घोड़े, कारीगरकन्यायें, दास वगैरह उपहार लेकर अपना दूत महाराजके पास भेजा है, वह महाराजका दर्शन करेगा।

**मधुकरिका**—जाओ, अपना कार्यदेखो। मैं भी देवीके पास जाती हूँ।

(जाती है)

प्रवेशक।

( ततः प्रविशति प्रतीहारी । )

प्रतीहारी—आणत्तम्हि असोअसक्कारवावुदाए देवीए । विण्णावेहि अज्जउत्तम् । इच्छम्मि अज्जउत्तेण सह असोअरुक्खस्स पसूणलच्छिं पच्चक्खीकादुं त्ति । ता जाव धम्मासणगदं देवं पडिवालेमि । (इति परिक्रामति ।)

[ आज्ञप्तास्म्यशोकसत्कारव्यापृतया देव्या । विज्ञापयार्यपुत्रम् । इच्छाम्यार्यपुत्रेण सहाशोकवृक्षस्य प्रसूनलक्ष्मीं प्रत्यक्षीकर्तुमिति । तद्यावद्धर्मासनगतं देवं प्रतिपालयामि । ]

( नेपथ्ये वैतालिकौ । )

प्रथमः—विजयतां विजयतां देवः । दिष्ट्या दण्डैरेव रिपुशिरःसु वर्तते देवः ।

---

अत्राशोकमुकुलोद्गमवीरसेनविजयादिकस्य वृत्तकथांशस्य शिल्पदारिकादिकर्तृकराजसाक्षात्काररूपस्य वर्णिष्यमाणकथांशस्य निदर्शनं कृतं बोध्यम् । अशोकसत्कारव्यापृतया तपनीयाशोकस्य सत्कारे मूलपरिष्कारजलकरणकसेकादिरूपे उपकारे व्यापृतया समासक्तया । आज्ञामाह—विज्ञापयेति । प्रसूनलक्ष्मीम् कुसुमोद्गमसम्भृतां शोभाम् । प्रत्यक्षीकर्तुम् द्रष्टुम् । धर्मासनगतम् विचारासनस्थम्, प्रतिपालयामि प्रतीक्षे, 'धर्मासनशब्दस्य राज्यासनेऽर्थेऽनेन कविना शाकुन्तलेऽपि प्रयोगः कृतः—'धर्मासनाद् विशति वासगृहं नरेन्द्रः' इति ।

वैतालिकाः मङ्गलपाठकाः ।

दण्डेन राज्ञां परान् प्रत्यनुष्ठेयेषूपायेषु चतुर्षु चरमेण दमनेन, ( न तु सन्दिग्धमना इव सामादिप्रयोगेण ) अरिशिरस्सु वर्त्तते शत्रून्नमयतीत्यर्थः । वर्द्धमानबलोऽयं राजाऽस्माकमिति भावः ।

---

( प्रतीहारीका प्रवेश )

प्रतीहारी—अशोकके सत्कारमें आसक्त देवीने मुझे कहा है कि जाकर महाराजसे कहो–'मैं महाराजके साथही अशोककी कुसुमशोभा देखना चाहती हूँ । इस लिये जबतक महाराज धर्मासनपर हैं, इन्तजार करती हूँ ।

( जाती है )

( नेपथ्यमें वैतालिक गण )

पहलावैतालिक—भाग्यवश महाराज दण्डसे ही शत्रुपराजेता बनेहुए हैं । रति

परभृतकलव्याहारेषु त्वमात्तरतिर्मधुं
नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान्।
विजयकरिणामालानत्वं गतैः प्रबलस्य ते
वरद वरदारोधोवृक्षैः सहावनतो रिपुः ॥ १ ॥

द्वितीयः—विरचितपदं वीरप्रीत्या सुरोपमसूरिभि-

---

परभृतकलव्याहारेष्विति। आत्ता सहचरीत्वेन गृहीता रतिस्तदाख्या स्वभार्या येन स तादृशः अङ्गवान् धृतदेहः अनङ्गः कामदेव इव त्वं परभृतकलव्याहारेषु कोकिलमधुररुताह्लादितेषु विदिशातीरोद्यानेषु विदिशातटस्थोपवनेषु मधु वसन्तं नयसि गमयसि, परभृताः वैतालिकास्तेषां कलानि रुतानि येषु तेषु विदिशातीरोद्यानेष्विति चार्थः। रतिसहायः समासादितमनोज्ञतनुश्च कामदेवो यथा कोकिलालापमुखरितेषु विदिशातीरोद्यानेषु वसन्तं प्रकाशितं प्रमापयति, तथा महोत्साहः सन्नद्धसेनाङ्गवान् भवानपि मादृशवैतालिककृतस्तुतिमुखरेषु विदिशातीरोद्यानेषु माधुर्यमाविर्भावयसि, प्रशान्तसकलोपद्रवत्वसम्पादनादिति पूर्वार्द्धाशयः। किञ्च हे वरद, अभिमतार्थप्रद, प्रबलस्य ते तव रिपुः शत्रुः विजयकरिणां विजयसाधनानां गजानाम् आलानत्वं बन्धनस्तम्भभावं गतैः प्राप्तैः वरदारोधोवृक्षैः वरदाभिधाननदीतटस्थतरुभिः सह साकम् अवनतः नम्रीभूतश्च। वरदाकूलवर्त्तिवृक्षबद्धास्तव विजयकरिणस्तान् वृक्षानाकृष्य नमयन्ति, शत्रवस्तद्भयाच्च स्वयमुपगच्छन्त्यधीनत्वमिति भावः। अत्र पूर्वार्द्धे श्लेषोत्थापिता पूर्णोपमा, परार्द्धे सहोक्तिः, वरदवरदेति व्यञ्जनानां सकृत्साम्याच्छेकानुप्रासश्चेति, तेषां च मिथो नैरपेक्ष्यात्संसृष्टिः, अङ्गवानिति मतुप्प्रशंसायाम्।

'मधुश्चैत्रे वसन्ते च माधुर्ये द्रुमदैत्ययोः' इति व्याडिः।

'आलान गजबन्धनी' इत्यमरश्च।

हरिणी वृत्तम्, तल्लक्षणं यथा नसमरसलागः षड्वेदैर्हयैर्हरिणी मता' ॥ १ ॥

विरचितपदमिति। हे सुरोपम देवप्रतिम दण्डानीकैः दमनाधिकृताभिः सेनाभिः

---

सहचर तथा सुन्दर शरीरवाले कन्दर्पके समान, शत्रु विजयानुरागी तथा चतुरङ्गिणी सेनाके स्वामी आप, कोयलोंके कलरवसे उपमित स्तुतिपाठकोंके मनोहर स्वरसे मुखरित विदिशाके तटमें बसन्तकी तरह मधुरता पैदा कररहे हैं। हे वरद, आपके विजयकरियों के बन्धनस्तम्भ रूपमें व्यवहृत होने वाले वरदा तटवर्त्ती वृक्षोंके साथ आपके शत्रुभी झुका दिये गये हैं ॥ १ ॥

द्वितीय—हे देवतुल्य, दण्ड विधानार्थ सुरक्षित आपके सैनिकोंने विदर्भराजकी

अरितमुभयोर्मध्येकृत्य स्थितं क्रथकैशिकान्।
तव हृतवतो दण्डानीकैर्विदर्भपतेः श्रियं
परिघगुरुभिर्दोर्भिर्विष्णोः प्रसह्य च रुक्मिणीम् ॥ २ ॥

प्रतीहारी—एसो जअसद्दसूइदप्पत्थाणो भट्टा इदो एव्व आअच्छदि। अहं वि दाव इमस्स पमुहादो लोआदो ओसरिअ खम्भन्तरिदा होमि। ( इत्येकान्ते स्थिता । ) [ एष जयशब्दसूचितप्रस्थानो भर्तेत एवागच्छति । अहमपि तावदस्य प्रमुखाल्लोकादपसृत्य स्तम्भान्तरिता भवामि । ]

---

प्रसह्य बलपूर्वकम् विदर्भदेशाधीश्वरस्य यज्ञसेनस्य श्रियं राजलक्ष्मीं हृतवतः आनीतवतस्तव अग्निमित्रस्य तथा परिघगुरुभिः लौहमयलगुडमहद्भिः दोर्भिः चतुर्भिर्भुजैः प्रसह्य बलात्कारेण रुक्मिणीं भीष्मकसुतां हृतवतो भार्याभावेन नीतवतो विष्णोः श्रीकृष्णस्य च चरितं चरित्रं ( कर्तृपदम् ) वीरप्रीत्या वीरजनोचितया श्रद्धया सूरिभिः पण्डितैः विरचितानि निर्मितानि पदानि महत्त्वख्यापकवाक्यानि यस्य तादृशम् ( सत् ) क्रथकैशिकान् विदर्भान् मध्येकृत्य व्याप्य स्थितम् अस्तीति शेषः। वीरप्रियैः पण्डितैः सादरं वर्णिता रुक्मिणीं हृतवतः कृष्णस्य कीर्त्तिर्यथा विदर्भदेशे विस्तीर्णा तथा विदर्भाधिपतेर्यज्ञसेनस्य राजलक्ष्मीं हृतवतो भवतोऽपि कीर्त्तिर्विदर्भविषये प्रसृतेति वाक्यार्थः। अत्राप्रस्तुतस्य विष्णोः प्रस्तुतस्याग्निमित्रस्य च 'हृतवतः' इत्येकक्रियाऽभिसम्बन्धाद् दीपकालङ्कारः, स च 'सुरोपम' 'परिघगुरुभि'रित्युपमाभ्यां सङ्कीर्यते। 'सुरोपम''सूरिभि'रित्यत्र छेकानुप्रासश्च। किञ्चात्र दीपकेनाग्निमित्रस्य विष्णुतुल्यतासमर्पणादुपमालङ्कारो ध्वन्यते। मध्येकृत्येत्यत्र 'मध्येपदेनिवचने च' इत्यत्र निपातनादेत्वम्। क्रथानां क्रथवंश्यानां कैशिकानां कैशिकवंश्यानाञ्चाधिष्टानात् क्रथकैशिकेति विदर्भदेशस्य नामान्तरम्। जनपदवाचकत्वाद्बहुवचनम्। हरिणी वृत्तम्, लक्षणमनुपदमेवोक्तम् ॥ २ ॥

जयशब्दसूचितप्रस्थानः जयशब्देन जयजीवेति नादेन सूचितं द्योतितम् प्रस्थानम् सभागृहान्निष्क्रमणम् यस्य स तथोक्तः। मुखात् सम्मुखदेशात्, अपसृत्य अप-

---

श्रीका हरणकर लिया है, पहले जमानेमें लौहकर्कश भुजोंसे श्रीकृष्णने रुक्मिणीका हरण कियाथा, अनुरागवश पण्डितोंने दोनों की कीर्त्ति को वर्णित किया, आज वही कीर्त्तिगान विदर्भदेशमें गूंजरहा है ॥ २ ॥

प्रतीहारी—जयशब्द महाराजके प्रस्थानकी सूचना देता है और वह इधर ही आरहा है। मैं भी सामनेसे हटकर बाहर दरवाजेपर खड़ा होता हूँ।

( ऐसा कहकर एक ओर खड़ा होता है )

( प्रविश्य सवयस्यः । )

राजा—कान्तां विचिन्त्य सुलभेतरसंप्रयोगां
श्रुत्वा विदर्भपतिमानमितं बलैश्च ।
धाराभिरातप इवाभिहतं सरोजं
दुःखायते मम मनः सुखमश्नुते च ॥ ३ ॥

विदूषकः—जह अहं पेक्खामि तह एक्कन्तसुहिदो भवं हविस्सदि ।
[ यथाहं प्रेक्षे तथा एकान्तसुखितो भवान्भविष्यति । ]

---

क्रम्य । मुखालिन्दतोरणम् सम्मुखवर्त्तिबहिर्द्वारप्रकोष्ठतोरणम् संश्रिता स्वगोपनायाश्रिता ।

कान्तामिति । कान्तां मालविकां सुलभेतरसम्प्रयोगाम् असुलभसमागमाम् विचिन्त्य विभाव्य तथा बलैः सेनाभिः विदर्भपतिं यज्ञसेनम् आनमितम् विजित्याधीनीकृतञ्च श्रुत्वाऽऽकर्ण्य ( वर्त्तमानस्य मम ) हृदयम् चेतः ( कर्त्तृपदम् ) आतपे सूर्यरश्मिविषये ( स्थितम् ) धाराभिः वर्षाभिः अभिहतम् ताडितञ्च सरोजम् कमलमिव दुःखायते खेदमनुभवति सुखमश्नुते च आनन्दं चाधिगच्छति । अयमाशयः—यथाऽऽतपे विद्यमानस्य कमलस्यातपसम्पर्कः सुखकरस्तस्यामेव स्थितौ च धारापातः प्रियकरस्पर्शप्रतिबन्धकतया व्यथकश्चेति सुखं दुःखं द्वयं युगपदेवोपनमते, तथैव मया प्रियायाः समागमस्य दौर्लभ्येन चिन्तया दुःखं च शत्रुपराजयश्रवणसम्भवो हर्षश्च युगपदेवाधिगम्यत इति । अत्र दुःखसुखयोर्विरूपयोः सङ्घटनया विषमालङ्कारः । वसन्ततिलकं वृत्तम् । 'दुःखायते' इत्यत्र 'सुखादिभ्यः कर्त्तृवेदनायाम्' इति क्यङ् । इह मालविकारूपबीजानुसन्धानात् सन्धिर्नाम सन्ध्यङ्गमुक्तम् ॥ ३ ॥

यथा येन पथा, प्रेक्षे अनुमिनोमि, तथा तेन प्रकारेण, एकान्तसुखितः नितान्तहृष्टः । एतेन मालविकालाभसम्भावना ध्वनिता ।

---

( वयस्यके साथ राजाका प्रवेश )

राजा—प्रियाका समागमदुर्लभ है यह सोचकर और सैन्यद्वारा विदर्भराज के पराजयको सुनकर मेरा मन धूपमें धारासे आहत कमलकी तरह दुःख और सुख दोनोंका अनुभव कर रहा है ॥ ३ ॥

विदूषक—मैं देखरहा हूँ आपको केबल सुखही होगा ।

राजा—कथमिव ।

विदूषकः—अज्ज किल देवीए एव्वं पण्डितकोसिई भणिदा । भअवदि, जं तुमं पसाहणगव्वं वहसि, तं दंसेहि मालविआए सरीरे विवाहणेवत्थं त्ति । ताए सविसेसालंकिदा मालविआ । तत्तहोदी कदावि पूरए भवदोवि मणोरहं । [ अद्य किल देव्यैवं पण्डितकौशिकी भणिता । भगवति, यत्त्वं प्रसाधनगर्वं वहसि, तद्दर्शय मालविकायाः शरीरे विवाहनेपथ्यमिति । तया सविशेषालंकृता मालविका । तत्रभवती कदाचित्पूरयेद्भवतोऽपि मनोरथम् । ]

राजा—सखे, मदपेक्षामनुप्राप्य अनया धारिण्या पूर्वाचरितैः संभाव्यत एवैतत् ।

---

कथमिव का भवतोऽनुमाने हेतुरिति प्रश्नः । अत्र कार्यान्वेषणाद् विरोधो नाम सन्ध्यङ्गमुक्तं भवति ॥

पण्डितकौशिकी परिव्राजिकावेशधारिणी सुमतिभगिनी । प्रसाधनगर्वम् अन्यस्या अलङ्कारादिना शोभासमृद्धिसम्पादनविषयेऽभिमानम् । वहसि धारयसि । विवाहनेपथ्यम् विवाहोपयोगिनं वेशम् । तत्रभवत्या कौशिक्या । सविशेषालङ्कृता अनितरदिनजनसाधारणतया सज्जिता । मनोरथम् मालविकया सह समागमरूपम् (मालविकाया वैवाहिकवेशरचनया विदूषकस्यायमूहः ) अत्र कार्योपदर्शनात्पूर्वभाव इति सन्ध्यङ्गमुक्तम् ।

मदपेक्षामनुप्राप्य मम सुखसन्तोषविधानापेक्षया । पूर्वाचरितैः प्राक्तनव्यवहारैः । एतत् मह्यमेव सम्प्रदातुं मालविकाया अलङ्करणम् । एतेन देवीं प्रति राज्ञो विश्वासविशेषो ध्वनितः ।

---

राजा—कैसे ?

विदूषक—आज धारिणीदेवी पण्डित कौशिकीसे कहरही थी-भगवती, यदि आपको वास्तविकमें अलङ्कार पहनानेकी कलामें अभिमान है तो मालविकाको विवाह वेशसे अलङ्कृतकरें । इसपर उन्होंने मालबिकाको खूब अलङ्कृत किया है । हो सकता है देवी आपकी इच्छा पूर्णकरें ।

राजा—इससे पूर्व मेरे साथ किये गये उसके व्यवहारोंसे जाना जासकता है कि मेरे लिये ही उसने यह किया है ।

प्रतीहारी—( उपगम्य । ) जेदु जेदु भट्टा । देवी विण्णावेदि तवणीआसोअस्स कुसुमसहदंसणेण मह आरम्भो सफलो करीअदु त्ति । [ जयतु जयतु भर्ता । देवी विज्ञापयति तपनीयाशोकस्य कुसुमसहदर्शनेन ममारम्भः सफलः क्रियतामिति । ]

राजा—ननु तत्रैव देवी तिष्ठति ।

प्रतीहारी—अह इं । जहरिहसंमाणसुहिअं अन्तेउरं विसज्जिअ मालविआपुरोएण अत्तणो परिअणेण सह देवं पडिवालेदि । [ अथ किम् । यथार्हसंमानसुखितमन्तःपुरं विसृज्य मालविकापुरोगेणात्मनः परिजनेन सह देवं प्रतिपालयति । ]

राजा—( सहर्षं विदूषकं विलोक्य । ) जयसेने, गच्छाग्रतः ।

प्रतीहारी—एदु एदु देवो । ( इति परिक्रामति । ) [ एत्वेतु देवः । ]

---

कुसुमसहदर्शनेन पुष्पोद्गमस्य मया सह प्रत्यक्षीकरणेन । वाक्यार्थोऽत्र विज्ञापनाकर्म ।

नन्विति प्रश्ने, किं देवी तपनीयाशोकतरुसमीपं गतेति प्रष्टुरनुयोगः । एतेन राज्ञो देव्यनुरोधपालनतत्परता ध्वनिता ।

अथ किम् भवदनुमितं देव्यास्तत्रोपगमनममिथ्येत्यर्थः । यथार्हसम्मानसुखितम् यथोचितपुरस्कारप्रसन्नम् । अन्तःपुरम् अवरोधजनम् विसृज्य विहाय । मालविकापुरोगेण मालविका पुरोगा प्रमुखा यस्य तेन मालविकाप्रधानेन । परिजनेन अनुचरवर्गेण । देवम् भवन्तम् । प्रतिपालयति प्रतीक्षते ।

विदूषकं विलोक्य साकूतया दृशा तमालोक्य । यथार्थमेव त्वयानुमितमिति सप्रसादं ज्ञापयितुमिदं तदीयं विलोकनम् । गच्छाग्रतः अग्रे चल, प्रमदवनमार्गमादेशयेति भावः ।

---

प्रतीहारी—( प्रवेश करके ) महाराजकी जयहो । देवीने कहा है-सुवर्णाशोककी पुष्पशोभाको आर्यपुत्रके साथ देखना चाहती हूँ ।

राजा—क्या देवी वहाँ हैं ?

प्रतीहारी—हाँ, समुचित पुरस्कारोंसे सुखी अन्तःपुरको छोड़कर, अपनी दासियों के साथ, मालविकाको अग्रसरकरके आपकी राह देख रही हैं ।

राजा—( हर्षसे विदूषककी ओर देखकर ) चलो जयसेने ।

प्रतीहारी—आइए महाराज । ( चलती है )

विदूषकः—( विलोक्य । ) भो वअस्स, किंवि परिवुत्तजोव्वणोविअ वसन्तो पमदवणे लक्खीअदि । [ भो वयस्य, किंचित्परिवृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते । ]

राजा—यथाह भवान् ।

अग्रे विकीर्णकुरवकफलजालकभिद्यमानसहकारम् ।
परिणामाभिमुखमृतोरुत्सुकयति यौवनं चेतः ॥ ४ ॥

विदूषकः—( परिक्रम्य । ) अहो अअं सो दिण्णणेवत्थो विअ कुसुमत्थवएहिं तवणीआसोओ । ओलोअदु भवं । [ अहो, अयं स दत्तनेपथ्य इव कुसुमस्तबकैस्तपनीयाशोकः । अवलोकतां भवान् । ]

राजा—स्थाने खलु प्रसवमन्थरोऽयमभूत् । यदिदानीमनन्यसाधारणीं शोभामुद्वहति । पश्य—

---

किञ्चित्परिवृत्तयौवनः पूर्वस्मादाधिक्येन पूर्णदशामापन्नो नवीभूतयौवन इति भावः ।

अग्र इति । अग्रे पुरतः विकीर्णानां प्रसृमराणाम् कुरवकफलानाम् तदाख्यतरुफलानाम् जालकेन समूहेन भिद्यमानः सङ्गच्छमानः सहकारः आम्रतरुः यत्र तत्तादृशम् , पुरःप्रकीर्णकुरवककुसुमसमूहसमाच्छाद्यमानाम्रवृक्षमित्यर्थः । इदमेकं यौवनस्य विशेषणम् । परिणामाभिमुखम् परिणामः परिपाकः (समाप्तिपूर्वरूपदशा) तदभिमुखम् परिपाकोन्मुखम् , ऋतोर्वसन्तस्य यौवनम् पृथुलश्रीकत्वम् चेतः मनः उत्सुकयति उत्कण्ठयति प्रणयिजनसङ्गमसतृष्णं विधत्त इत्यर्थः । अत्र प्रकरणवशादृतुशब्दस्य ऋतुविशेषरूपवसन्तपरत्वमिति बोध्यम् । आर्या वृत्तम् ॥ ४ ॥

कुसुमस्तवकैः पुष्पगुच्छकैः, दत्तमर्पितं नेपथ्यं वेशो यस्य स तादृशः ।

अयम् दृश्यमानसर्वशाखः, (मालविकादत्तदोहदतया स्नेहभाजनम् ) अयं तपनी-

---

विदूषक—( देखकर ) देखता हूँ प्रमदवनमें वसन्तकी जवानी फूटसी पड़ी है ।

राजा—तुमने ठीक कहा, आगे फैलेहुए कुरवकके फूल फल आम्रमञ्जरीसे मिल-रहे थे । इस समय परिणामाभिमुख वसन्त ऋतुका यह यौवन चित्तको चञ्चल किये दे रहा है ॥ ४ ॥

विदूषक—अजी देखिये, इन पुष्पगुच्छोंने इस अशोक वृक्षको सजासा दिया है ।

राजा – इसने फूलखिलानेमें विलम्बकरके अच्छाही किया, आज इसकी छबि अनोखी होरही है । देखो—

सर्वाशोकतरूणां प्रथमं सूचितवसन्तविभवानाम् ।
निर्वृत्तदोहदेऽस्मिन्संक्रान्तानीव कुसुमानि ॥ ५ ॥

विदूषकः—तह । भो, वीसद्धो होहि । अम्हेसु संणिहिदेसु वि धारिणी पासपरिवट्टिणीं मालविअं अणुमण्णेदि । [ तथा भोः, विस्रब्धो भव । अस्मासु संनिहितेष्वपि धारिणी पार्श्वपरिवर्तिनीं मालविकामनुमन्यते । ]

---

याशोकः, प्रसवमन्थरः प्रसवे कुसुमोद्गमे मन्थरः मन्दप्रवृत्तिः, (यदभूत्) तत् स्थाने, (युक्तं कृतम्) यत् यस्माद्धेतोः, इदानीम्, अधुना, अनन्यसाधारणीम् इतरतरुदुरापाम्, शोभाम् कुसुमसमृद्धिकृतां श्रियम्, उद्वहति धारयति । यद्ययमपि तरुः सकलेतरवृक्षवद्यथासमयं पुष्पमसोष्यत, नास्य कृते यत्न इयानास्थास्यत, पुष्पिते चास्मिन्नैतावानुत्सवसमारम्भो वा व्यधास्यत, तदनेन पुष्पप्रसवमान्थर्यमवलम्ब्य युक्तं कृतमिति प्रघट्टकार्थः ।

सर्वाशोकेति । निर्वृत्तः सम्पन्नः दोहदः रमणीचरणाघातो यस्मिन् तादृशे रमण्या पदाहते इत्यर्थः । अस्मिन् तपनीयाशोकतरौ, प्रथमं पूर्वं सूचितः ज्ञापितः वसन्तविभवः मधुमासावतारकृतपुष्पोदयः यैः तेषां प्रथमोद्गमितवसन्तकालिकसुमनसाम् सर्वाशोकतरूणामित्यर्थः । कुसुमानि पुष्पाणि सङ्क्रान्तानि सञ्चरितानि इव । अयमाशयः—यैस्तरुभिर्वसन्तोदयेऽहमहमिकया प्राक् पुष्पाण्युद्गमितानि तेषां सर्वेषामिव पुष्पाणि विलम्ब्य रमणीपादाघातदोहदमनुभूय च पुष्पितेऽत्र तपनीयाशोकतरौ समुपागतानीव । तदियं क्रियोत्प्रेक्षा । आर्या जातिः, पादाघातेनाशोकविकासोपनिबन्धः कविसमयप्रसिद्धिमनुरुध्य बोध्यः । तथा चोक्तं साहित्यदर्पणे "पादाघातादशोको विकसति बकुलं योषितामास्यमद्यैः······इत्याद्युन्नेयमन्यत् कविसमयगतं सत्कवीनां प्रबन्धे" ॥ ५ ॥

तथा भवतोत्प्रेक्षितं सत्यमित्यर्थः । विस्रब्धः मालविकाप्राप्तिविषये विश्वस्तः । विस्रम्भकारणमाह—अस्मास्विति । अस्मासु त्वयि, मयि, अन्यस्मिंश्च त्वदीयरहःसाक्षिपरिजने, सन्निहिते समुपस्थिते, पार्श्ववर्त्तिनीमनुमन्यते स्वसमीपे प्रकाशभावेन

---

जिन अशोक तरुओंने पहले वसन्त वैभव दिखलाये थे, आज निवृत्त दोहद इस अशोक तरुमें, उन सभी तरुओंके फूल आकर जुट गये हैं ॥ ५ ॥

विदूषक—ठीक कहा । अहा ! धीरज धरो, क्योंकि हम लोगोंके सामने भी धारिणीने मालविकाको अपने पास रहने दिया है ।

राजा—( सहर्षम् । ) सखे, पश्य—

मामियमभ्युत्तिष्ठति देवी विनयादनूत्थिता प्रियया ।
विस्तृतहस्तकमलया नरेन्द्रलक्ष्म्या वसुमतीव ॥ ६ ॥

( ततः प्रविशति धारिणी मालविका परिव्राजिका विभवतश्च परिवारः । )

मालविका—( आत्मगतम् । ) जाणामि णिमित्तं कोदुआलंकारस्स । तह वि मे हिअअं बिसिणीपत्तगदं विअ सलिलं वेवदि । अवि अ दक्खिणेदरं वि मे णअणं वहुसो फुरदि । [ जानामि निमित्तं कौतुकालंकारस्य ।

---

स्थापयितुमनुजानाति । यद्यस्या देव्याः पुरेव हृदयं साशङ्कमभविष्यत्तदा यथापूर्वं मालविकां दृष्टिपथादस्माकमपासारयिष्यन्नतु कदापि विवाहनेपथ्येन योजयित्वा स्वपार्श्वे सबहुमानं स्थापयितुमदयिष्यत । एतेनाद्य देवी तां तुभ्यं सम्प्रदातुमेव कृता योजनेति प्रतीत्याश्वस्तो भवेति भावार्थः ।

मामियमिति । विस्तृते समयोचिताभिवादनार्थं प्रसृते हस्तौ करावेव कमले पद्मे यस्यास्तया तथोक्तया प्रियया मालविकया विनयात् नम्रीभावात् अनूत्थिता पश्चादनुगता इयम् देवी धारिणी नरेन्द्रलक्ष्म्या राजश्रिया ( अनूत्थिता ) वसुमती पृथ्वीव माम् अभ्युत्तिष्ठति मां प्रति सम्मानं प्रदर्शयितुमुत्तिष्ठति । यथा नरेन्द्रलक्ष्म्याऽनुगम्यमाना वसुमती मामभिमुखीभूय सेवते तथैव मालविकयौचित्यात्स्नेहाद्राशीसम्मानस्य विधेयत्वाच्चानुगतेयं देवी धारिणी मामायान्तमभिवादयितुमुत्तिष्ठतीति भावः । अत्रोपमाऽलङ्कारः, किञ्च हस्तौ कमले इव, एवं हस्तावेव कमले इत्युभयथाऽपि समासस्य सम्भवात् विनिगमनाविरहेणोपमारूपकयोः सङ्करश्च, तयोरङ्गाङ्गिभावेन सङ्करः । आर्या जातिः ॥ ६ ॥

कौतुकालङ्कारस्य कुतूहलोत्पादकस्य देवीकारितस्य मदीयवेशविन्यासस्य, हेतुं जानामि तपनीयाशोकतरौ दोहददानात् पञ्चदिवसाभ्यन्तरे तस्य कुसुमोद्गमे जाय-

---

राजा—मित्र, देखो, देखो, यह देवी हमारे स्वागतमें उत्थानकर रही है और प्रिया उसका साथ दे रही है, जैसे कमलरूप हाथ पसारे राज्यलक्ष्मी के साथ वसुमती हो ॥ ६ ॥

( धारिणी, मालविका, परिव्राजिका और परिवारका प्रवेश )

मालविका—हमारे इस असाधारण रूपमें अलङ्कृत किए जानेका कारण हमें

तथापि मे हृदयं बिसिनीपत्रगतमिव सलिलं वेपते। अपि च दक्षिणेतरदपि मे नयनं बहुशः स्फुरति। ]

विदूषकः—भो वअस्स, विवाहणेवत्थेण सविसेसं क्खु सोहदि मालविआ। [ भो वयस्य, विवाहनेपथ्येन सविशेषं खलु शोभते मालविका। ]

राजा—पश्याम्येनाम्। यैषा—

अनतिलम्बिदुकूलनिवासिनी बहुभिराभरणैः प्रतिभाति मे।
उडुगणैरुदयोन्मुखचन्द्रिका हृतहिमैरिव चैत्रविभावरी ॥ ७ ॥

---

माने प्रतिज्ञातो देव्याः प्रसाद एवात्र कारणमिति जानामीत्यर्थः। प्रसन्ना च सा मदीयमभीष्टं राजप्रणयभाजनत्वाधिगममवश्यं कल्पेत निष्पादयितुमिति भावः। बिसिनीपत्रगतम् नलिनीदलस्थम्। वेपते कम्पते। प्रभूणां चेतोवृत्तेश्चाञ्चल्यस्य प्रसिद्धतया मदभाग्यदोषात् पुनरपि देव्याः प्रतिबन्धकत्वं सम्भाव्य मम मानसं कम्पत इति बोध्यम्। नन्वेवमधीरता स्यादतः सन्तोषकारणमुपन्यस्यति—दक्षिणेतरदिति। दक्षिणेतरत् वामम्। बहुशः भूयो भूयः। स्फुरति चलति। तदवश्यं हितं फलेदिति भावः। तथा चोक्तं वसन्तराजशकुने—'भ्रूभागमध्ये प्रियसङ्गमः स्यान्नासाक्षिमध्ये च सहायलाभः। दृगन्तमध्यस्फुरणेऽर्थलाभोत्कण्ठे क्रमाद्विस्फुरिते दृगादौ ॥ पुंसां यदा दक्षिणदेहभागे स्त्रीणां च वामावयवे प्रजातः' ॥ इति।

विवाहनेपथ्येन विवाहकालोचितेन क्षौमवसनादिपरिधानेन। सविशेषम् अतिमात्रम्।

अनतीति। अनतिलम्बि नातिप्रसारि दुकूलम् क्षौमम् निवस्ते परिवस्ते इति अनतिलम्बिदुकूलनिवासिनी एषा मालविका बहुभिः प्रचुरमात्रैः आभरणैः अलङ्कारैः, हृतानि कालवशादपगतानि हिमानि आवरणकराणि प्रालेयानि येषां तैः हृतहिमैः उडुगणैः नक्षत्रनिकरैः उदयोन्मुखी क्रमश उदयमुपाच्छन्ती चन्द्रिका ज्योत्स्ना यस्यां

---

ज्ञात है, फिरभी कमलपत्रपर स्थित जल बिन्दुकी तरह हमारा हृदय कांपता है। हमारी बांईं आंखभी बारबार फड़क रही है।

विदूषक—अजी वयस्य, यह मालविका इस वैवाहिक वेशमें खूब शोभरही है।

राजा—देखरहा हूँ, यह-चुस्त रेशमी कपड़े पहने और गहनोंसे लदी मालविका मुझे ऐसी मालूम पड़रही है जैसे पालेके अवसानमें उज्जवल नक्षत्रोंसे युक्त उदीयमान ज्योत्स्नासे अलङ्कृत रात्रि हो ॥ ७ ॥

धारिणी—( उपेत्य। ) जेदु जेदु अज्जउत्तो। [ जयतु जयत्वार्यपुत्रः। ]

विदूषकः—वड्ढदु भोदी। [ वर्धतां भवती। ]

परिव्राजिका—विजयतां देवः।

राजा—भगवति, अभिवादये।

परिव्राजिका—अभिप्रेतसिद्धिरस्तु।

देवी—( सस्मितम्। ) अज्जउत्त, एस ते अम्हेहिं तरुणीजणसहाअस्स असोओ संकेदघरो कप्पिदो। [ आर्यपुत्र, एष तेऽस्माभिस्तरुणीजनसहायस्याशोकः संकेतगृहं कल्पितः। ]

---

सा तथोक्ता ( शुक्लपक्षस्य ) चैत्रविभावरीव मधुमासनिशेव मे मम प्रतिभाति प्रतिभा ज्ञानम्, तद्विषयो भवति। सुपरिहिततयाऽनतिलम्बमानदुकूला बह्वाभरणा चेयं मालविका प्रालेयमुक्तैर्नक्षत्रैः समेधितश्रिया चन्द्रिकया चैत्रविभावरीव मया प्रतीयत इति भावः। अत्र चन्द्रिका दुकूलम्, तस्यानतिलम्बमानता चन्द्रिकाया उदयोन्मुखता, अलङ्कारा नक्षत्राणि, मधुश्यामा च सेति सादृश्येनोपमाऽलङ्कारः। 'दुकूलं क्षौमवस्त्रम्' इति शब्दकल्पद्रुमः। 'नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रिया'मित्यमरश्च। द्रुतविलम्बितं वृत्तम्॥ ७॥

वर्धताम् आनन्दैः समृध्यतु।

अभिवादये प्रणमामीत्यर्थः।

अभिप्रेतसिद्धिः मनोरथपूर्त्तिः, एतेन मालविकासमागमसम्भवो ध्वनितः।

एषः अशोकः,। तरुणीजनसहायस्य युवतियुतस्य। सङ्केतगेहकः समागमसङ्केतगृहम्। 'सङ्केतगेहकः' इत्यत्रेवार्थे कन्। अत्र यथेष्टं प्रियासमागमसुखमनुभवितुमर्हसीत्याशयः। अनेनापि मालविकासमागमविषये सङ्केतः क्रियते इति बोध्यम्।

---

देवी—( समीप जाकर ) जयहो आर्यपुत्रकी।

विदूषक—जयहो देवीकी।

परिव्राजिका—जयहो महाराजकी।

राजा—भगवति, अभिवादन करता हूँ।

परिव्राजिका—अभिप्रेत सिद्धिहो।

देवी—( हंसकर ) आर्यपुत्र, हमलोगोंने नई स्त्रीसे युक्त आपके सङ्केतगृहके रूपमें इसी अशोक तरुको चुना है।

विदूषकः—भो, आराहिओसि। [ भोः, आराधितोऽसि। ]

राजा—( सव्रीडमशोकमभितः परिक्रामन्। )

नायं देव्या भाजनत्वं न नेयः सत्काराणामीदृशानामशोकः।
यः सावज्ञो माधवश्रीनियोगे पुष्पैः शंसत्यादरं त्वत्प्रयत्ने ॥ ८ ॥

---

आराधितः सम्मानितः, चिरात् मालविकासङ्गम प्रतिबध्नतया देव्येदृशाशाजनकसस्नेहपरिहासस्य करणादिति शेषः।

अशोकमभितः अशोकतरोश्चतुर्दिक्षु, 'अभितः परितः समया निकषाहाप्रतियोगेऽपि' इति द्वितीया। सव्रीडम् सर्वसमक्षं तथा परिहासादुपजातलज्जम्।

नायमिति। देव्या त्वया अयम् पुरो वर्त्तमानः तपनीयाशोकतरुः ईदृशानां सत्काराणाम् एवंविधानां बहुमानानाम् भाजनत्वम् अधिकारित्वम् न नेयः न प्रापणीयः इति न। अयमशोको भवत्याऽवश्यं बहुमन्तव्य इति भावः। स्वोक्तमर्थं समर्थयितु कारणमुपन्यस्यति—यः सावज्ञ इति। यः अयमशोकः माधवश्रियः वसन्तलक्ष्म्या नियोगे 'पुष्यन्तु' इति सामान्यत आदेशे सावज्ञः धृतावहेलः ( इव ) सन् त्वत्प्रयत्ने त्वदीयप्रयासे ( मालविकाकर्तृकचरणाघातप्रयोजके ) पुष्पैः उद्गच्छद्भिः स्वीयकुसुमैः आदरम् सम्मानम्, शंसति प्रकाशयति। वसन्तसमागमे पुष्पतरवः पुष्यन्ति, तन्मन्ये ते वसन्तश्रियः 'पुष्यन्तु भवन्तः' इत्याज्ञामिव पालयन्ति, अयं तपनीयाशोकस्तावता न कुसुममधात्, अथ भवत्यां सयत्नायां तत्रादरवशादिवातिशीघ्रं पुष्पितो जात इति भवदीयप्रयासस्य साफल्यं कृत्वोपकृतवतोऽस्य भवत्यापि सम्माननोपकारोऽवश्यकर्त्तव्यः, कृते प्रतिकर्त्तव्यतायाः सदाचारपरिप्राप्तत्वादिति भावः। अत्र पूर्वार्धवाक्यार्थं प्रति परार्धवाक्यार्थस्य हेतुतया वाक्यार्थहेतुकं काव्यलिङ्गम्। 'सामान्यतरुबुद्ध्याऽशोकोऽयं देव्या सत्कारभाजनत्वं न नेयः' इति सम्भाव्यमाननिषेधव्यावर्त्तनाय द्वितीयो नञ्। तथा च वामनः—सम्भाव्यनिषेधनिवर्त्तने नञ्द्वयम्। अत एवाह-मल्लिनाथः—'द्वौ नञौ प्रकृतार्थं गमयत इति ॥ शालिनी वृत्तम् ॥ ८ ॥

---

विदूषक—बड़ी खातिरदारी होरही है।

( राजा लज्जासे अशोककी परिक्रमा करता है )

राजा—देवी, तुम्हें इस अशोकके प्रति तुम्हें सत्कार प्रदर्शित करनाही चाहिये, क्योंकि यह अशोकवृत्त वसन्तलक्ष्मीका आज्ञाका अनादर करके तुम्हारे प्रयत्नके लिये फूलोंसे आदर प्रकट कर रहा है ॥ ८ ॥

विदूषकः--भो, वीसद्धो भविअ तुमं जोव्वणवदिं इमं पेक्ख । [ भोः, विस्रब्धो भूत्वा त्वं यौवनवतीमिमां पश्य । ]

देवी--कं । [ काम् । ]

विदूषकः--भोदि, तवणीआसोअस्स कुसुमसोहम् । [ भवति, तपनीयाशोकस्य कुसुमशोभाम् । ]

( सर्वं उपविशन्ति । )

राजा--(मालविकां विलोक्य । आत्मगतम् ।) कष्टः खलु संनिधिवियोगः ।

अहं रथाङ्गनामेव प्रिया सहचरीव मे ।
अननुज्ञातसंपर्का धारिणी रजनीव नौ ॥ ९ ॥

---

विस्रब्धः देवीपरिहासप्रत्ययान्मालविकाप्राप्तिविषये बद्धविश्वासः । यौवनवतीम् प्रशस्तयौवनाम् ( प्रशंसायां मतुप् ) प्रेक्षस्व पश्य । पक्षे पूर्णकुसुमसम्भाराम् ।

तपनीयाशोकस्येति विदूषकोक्तिर्व्याजोक्तिः, 'व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः' इति लक्षणात् । सचायं व्याजो देव्यनुरोधात् कर्त्तव्यतयाऽऽपतितः ।

सन्निधिवियोगः समीपवर्त्तिन्यपि प्रियजने मिलनाशक्तिः । कष्टः कष्टकरः, व्यथक इत्यर्थः। अत्र कारणे कार्यत्वोपचारादितरकारणतो वैलक्षण्यमव्यभिचरितत्वञ्च गम्यते।

अहमिति । अहं रथाङ्गनामा चक्रवाक इव, मे मम प्रिया मालविका सहचरी चक्रवाकाङ्गना इव, यद्वा सहचरीव चक्रवाकीव सहचरी समीपस्थिता, तथा न अनुज्ञातः अभीष्टः सम्पर्कः संसर्गो यया सा तथोक्ता धारिणी देवी नौ आवयोः ( चक्रवाकोपमस्य मम चक्रवाकीसमानाया मम प्राणप्रियाया मालविकायाश्च परस्परं कामयमानयोरपि) अननुज्ञातसम्पर्का अननुमोदितसंयोगा रजनी रात्रिरिव अस्तीति शेषः । रात्रेरिव धारिण्याः प्रतिबन्धकतया नावां संयुज्यावह इति धिगिमामविवेकामिति भावः । स्वस्य प्रियायाश्च चक्रवाकदम्पत्युपमया गाढस्नेहता ध्वनिता । अत्रोपमात्रयम् ॥ ९ ॥

---

विदूषक--स्थिरतापूर्वक इस युवतीको देखो ।

देवी--किसको ?

विदूषक --इसतपनीयाशोककी कुसुमसमृद्धिको ।

राजा--( मालविकाको देखकर, स्वगत ) समीपमें रहकर वियोग सहना बड़ा कष्टप्रद होता है ।

मैं चक्रवाकके तुल्यहूं , मेरी प्रियतमा चक्रवाकीकी तरह साथ है, हमदोनों को मिलनेसे रोकनेवाली यह धारिणी रात्रिसदृश है ॥ ९ ॥

( प्रविश्य । )

कञ्चुकी—विजयतां देवः । देव, अमात्यो विज्ञापयति । विदर्भविषयोपायने द्वे शिल्पकारिके मार्गपरिश्रमादलघुशरीरे इति पूर्वं न प्रवेशिते । संप्रति देवोपस्थानयोग्ये संवृत्ते । तदाज्ञां देवो दातुमर्हतीति ।

राजा—प्रवेशय ते ।

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रम्य ताभ्यां सह प्रविश्य । ) इत इतो भवत्यौ ।

प्रथमा—( जनान्तिकम् । ) हला मदणिए, अपुव्वं इमं राअउलं पविसन्तीए पसीददि मे हिअअं । [ सखि मदनिके, अपूर्वमिदं राजकुलं प्रविशन्त्याः प्रसीदति मे हृदयम् । ]

---

विजयताम् विजयं लभताम् । देवः भवान् । विदर्भराजस्य यज्ञसेनस्य । उपायने उपहारस्वरूपे । शिल्पिदारिके शिल्पचतुरे बालिके । मार्गपरिश्रमात् दूराध्वचलनकृतखेदात् । अलघुशरीरे असुस्थदेहे । इति कृत्वा इति कारणात् । न प्रवेशिते न देवस्य पुर उपस्थापिते ( पूर्वमितःकालादिति बोध्यम् ) सम्प्रति कियद्दिश्रमानन्तरम् । देवोपस्थानयोग्ये भवदन्तिकानयनक्षमे । संवृत्ते सम्पन्ने । आज्ञाम् तयोः प्रवेशायानुमतिम् ।

ते शिल्पिदारिके ।

अपूर्वम् अनुपमम् । राजकुलम् राजभवनम् । प्रसीदति तुष्यति शोभासमृद्धिसाक्षात्करणादिति भावः ।

---

कञ्चुकी—( प्रवेश करके ) जय हो महाराजकी । देव ! मन्त्रीजीने कहा है कि उस समय विदर्भराजद्वारा उपहार रूपमें प्रेषित दो शिल्पि कन्यायें मार्ग परिश्रमसे थकी थीं, इसलिये हाजिर नहीं किया । अब हुजूरमें हाजिर होने लायक होगई हैं । अतः आप आज्ञा प्रदान करें ।

राजा—उन्हें बुलाओ ।

कञ्चुकी—जो आज्ञा ! (बाहर जाकर उनके साथ प्रवेश करके) आपदोनों इधर चलें ।

प्रथमा—सखी मदनीके, इस अपूर्व राजकुलमें प्रवेशकरके हमारा हृदय आनन्दित हो रहा है ।

द्वितीया—जोसिणीए, महवि एव्वं अत्थि क्खु लोअप्पवादो आआमि सुहं दुक्खं वा हिअअसमवत्था कहेदि त्ति । [ ज्योत्स्निके, ममाप्येवम् । अस्ति खलु लोकप्रवादः आगामि सुखं दुःखं वा हृदयसमवस्था कथयतीति । ]

प्रथमा—सो सच्चो दाणिं होदु । [ स सत्य इदानीं भवतु । ]

कञ्चुकी—एष देव्या सह देवस्तिष्ठति । उपसर्पतां भवत्यौ ।

( उभे उपसर्पतः । )

( मालविका परिव्राजिका च चेट्यौ विलोक्य परस्परमवलोकयतः )

उभे—( प्रणिपत्य । ) जेदु जेदु भट्टा । जेदु जेदु भट्टिणी । [ जयतु जयतु भर्ता । जयतु जयतु भट्टिनी । ]

राजा—निषीदतम् ।

---

एवम् त्वया तुल्यम् । राजकुलदर्शनात्प्रसन्नत्वमिति भावः । खलु प्रसिद्धौ । आगामि भविष्यत् । हृदयसमवस्था मानसिकी स्थितिः । कथयति सूचयति । चित्तप्रसादः सुखं तदवसादश्च दुःखं सूचयतीति प्रसिद्धं लोके, प्रसीदति च मम तव च चित्तमत्र राजकुले, तन्मन्येऽत्रावाभ्यां सुखेन जीवनं याप्येतेति भावः ।

सः लोकप्रवादः । तत्सत्यत्व एवास्मद्धितस्य निहितत्वादित्यर्थः ।

उपसर्पताम् राजमहिष्योः समीपं गच्छताम् ।

निषीदतम् उपविशतम् ।

---

द्वितीया—अरी ज्योत्स्निका, मेरीभी वही स्थिति है, लोक यह सत्यही कहते हैं कि हृदयकी अवस्था आगामी सुखदुःखकी सूचना देती है ।

प्रथमा—उसको यहाँभी ठीक उतरना चाहिये ।

कंचुकी—रानीके साथही राजा बैठे हैं । आप दोनों चलें ।

( दोनों समीप जाती हैं )

( मालविका और परिव्राजिका उनदोनोंको देखकर एकदूसरी की ओर देखती है )

दोनों—( प्रणत होकर ) महाराज और महारानीकी जय हो ।

राजा—तुम दोनों बैठो ।

( उभे राजाज्ञया उपविष्टे )

राजा—कस्यां कलायामभिविनीते भवत्यौ ।

उभे—भट्टा, संगीदए अब्भन्तरेम्ह । [ भर्तः, संगीतकेऽभ्यन्तरे स्वः । ]

राजा—देवि, गृह्यतामनयोरन्यतरा ।

देवी—मालविए, इदो पेक्ख । कदरा दे संगीदसहआरिणी रुच्चदि । मालविके, इतः पश्य । कतरा ते संगीतसहकारिणी रोचते । ]

उभे—( मालविकां दृष्ट्वा । ) अम्हो भट्टदारिआ । जेदु जेदु भट्टदारिआ । ( इति प्रणम्य तया सह बाष्पं विसृजतः । ) [ अहो भर्तृदारिका । जयतु जयतु भर्तृदारिका । ]

---

कस्याम् नृत्यगीतवादित्रचित्राङ्कनादिषु कस्याङ्कलायाम् । अभिविनीते सम्यक्शिक्षिते । कन्ययोः शिल्पिदारिकात्वेन परिचयः सामान्यज्ञानं वदुत्थापितश्चायं राज्ञो विशेषविषयः प्रश्नः ।

सङ्गीतके सङ्गीतविद्यायाम् ( गानं वाद्यं च नृत्यञ्चेति मिलित्वा सङ्गीतविद्या तत्र ) अभ्यन्तरे अन्तर्निविष्टे ।

अन्यतरा शिल्पिदारिकयोरेकतरा ।

पश्य प्रेक्षस्व । सङ्गीतसहकारिणी सङ्गीते सहायिका । रोचते इष्यते त्वयेति भावः । या त्वया सङ्गीतसहकारिणीभावेन रक्षितुमिष्येत तामेवाहं ग्रहीतुमिच्छामीति तात्पर्यम् ।

तया मालविकया । बाष्पं विकिरतः अश्रु मुञ्चतः, मालविकायास्ताभ्यां परिचितत्वादश्रुप्रवृत्तिः "स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इति भावः ॥

---

( दोनों राजाज्ञा पाकर बैठती हैं )

राजा—तुम लोगोंको किस कलाकी शिक्षा दीगई है ?

दोनों—महाराज, सङ्गीतमें शिक्षित हुई हैं ।

राजा—देवी, एकको आप चुनलें ।

देवी—मालविका, इधर देखो, कौन इनमें तुम्हारी सङ्गीतमें सहायिका होने के लायक प्रतीत होती है ?

दोनों—( मालविकाको देखकर ) अरे, राजकुमारी ! ( प्रणत होकर ) जयहो राजकुमारीकी ! ( उसके साथ वह दोनों रोने लगती हैं )

( सर्वे सविस्मयं विलोकयन्ति । )

**राजा**—के भवत्यौ । का वेयम् ।

**प्रथमा**—भट्टा, एसा अम्हाणं भट्टदारिआ । [ भर्तः, एषास्माकं भर्तृदारिका । ]

**राजा**—कथमिव ।

**उभे**—सुणादु भट्टा । जो सो भट्टिणा विजअदण्डेहिं विदब्भणाहं वसीकरिअ बन्धणादो मोइओ कुमारो माहवसेणो णाम, तस्स इअं कणीअसी भइणी मालविआ णाम । [ शृणोतु भर्ता । यः स भर्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनो नाम, तस्येयं कनीयसी भगिनी मालविका नाम । ]

**देवी**—कहं । राअदारिआ इअं । चन्दणं क्खु मए पादुओवओएण दूसिदं । [ कथम् । राजदारिकेयम् । चन्दनं खलु मया पादुकोपयोगेन दूषितम् । ]

---

सविस्मयमवलोकयन्ति कथमनयोः शिल्पिदारिकयोर्मालविकया सह प्राचीनः परिचयः, कुतोऽथवामू रोदितु प्रवृत्ते इति साश्चर्यं पश्यन्तीत्यर्थः । भवत्यौ शिल्पिदारिकात्वेन व्यवह्रियमाणे युवाम् । इयम् मालविका । को भवतीनां परिचयः ? किमत्र रहस्यम् ? इति प्रश्नः ।

भर्तृदारिका—राजकन्या, राजा भट्टारको देवस्तत्सुता भर्तृदारिकेत्यमरः ।

विजयदण्डैः विजयजनकदण्डसाधनीभूतैः सैन्यैः । विदर्भनाथम् यज्ञसेनम् । वशीकृत्य अधीनीकृत्य । बन्धनात् कारागारात् । कनीयसी सर्वापेक्षया वयसा न्यूना । भगिनिका स्वसा । ( अनुकम्पायां कन् ) ।

राजदारिका राजकन्या । पादुकोपयोगेन पादुका काष्ठपादुका तत्रोपयोजनेन व्यवहारेण । अयमाशयः—यथा कश्चिच्चन्दनकाष्ठं तथाऽप्रतीत्य पादुकायामुपयुञ्जीत

---

( सभी आश्चर्यसे देखने लगते हैं )

**राजा**—आप दोनों कौन हैं ? और यह कौन है ?

**प्रथमा**—महाराज, यह हमारी राजकुमारी है ।

**राजा**—कैसे ?

**दोनों**—आपसुनें, आपने सैन्यके द्वारा विदर्भराजको हराकर जिन्हें मुक्त करवाया है, उन्हीं माधवसेनकी छोटी बहन यह मालविका है ।

**देवी**—क्या यह राजकुमारी है ? । चन्दनको हमने काष्ठपादुका बनाकर दूषित किया ?

राजा—अथात्रभवती कथमित्थंभूता ।

मालविका—( निःश्वस्यात्मगतम् । ) विहिणिओएण । [विधिनियोगेन ।]

द्वितीया—सुणादु भट्टा । दाआदवसंगदे भट्टदारए माहवसेणे तस्स अमच्चेण अज्जसुमदिणा अम्हारिसं परिअणं उज्झिअ गूढं आणीदा एसा । [ शृणोतु भर्ता । दायादवशंगते भर्तृदारके माधवसेने तस्यामात्येनार्यसुमतिनास्मादृशं परिजनमुज्झित्वा गूढमानीतैषा । ]

राजा—श्रुतपूर्वं मयैतत् । ततस्ततः ।

द्वितीया—भट्टा, अदो वरं ण आणामि । [ भर्तः, अतः परं न जानामि । ]

परिव्राजिका—ततः परं मन्दभागिनी कथयिष्यामि ।

---

तथाऽस्माभिरपि मालविका राजकन्येति न जानतीभिर्दासीभावेन सा व्यवहृता, नैतावदेव, किन्तु कारागारवासमपि लम्भितेति कथं 'राजकन्ये'ति वाक्येनानुशय्यते इति ।

अत्रभवती ( राजकन्यात्वेन ) माननीया । कथम् केन प्रकारेण, इत्थंभूता इमां दशामनुप्रपन्ना, दासीभावमालम्बितुं बाधितेति भावः ।

दायादस्य स्ववंशजातस्य यज्ञसेनस्य, वशम् आधीन्यम् , गते प्राप्ते । भर्तृदारके राजपुत्रे । अमात्येन मन्त्रिणा । उज्झित्वा विहाय । गूढम् प्रच्छन्नभावेन । एषा मालविका ।

मन्दभागिनी हीनादृष्टा, तथात्वं च देशत्यागभ्रातृनिधनक्लेशादिविविधकष्टानामापतितत्वाद् बोध्यम् ।

---

राजा—तब आपकी यह हालत कैसे हुई ?

मालविका—( सांस छोड़कर, स्वगत ) भाग्यकी प्रेरणासे ।

द्वितीया—सुनें महाराज, जब राजकुमार माधवसेनको दायादोंने वन्दी वना लिया तब अमात्य आर्य सुमति हमारे जैसे परिजनोंको छोड़कर, छिपाकर इन्हें ले आए ।

राजा—इतना तो मैंने सुना था । उसके बाद ?

द्वितीया—महाराज, इसके आगे हम नहीं जानतीं ।

परिव्राजिका—इससे आगे अभागी मैं कहूँगी ।

उभे—भट्टदारिए, अज्जकोसिइए विअ सरसंजोओ । णं सा एव्व ।
[ भर्तृदारिके, आर्यकौशिक्या इव स्वरसंयोगः । ननु सैव । ]

मालविका—अह इम् । [ अथ किम् । ]

उभे—जदिवेसधारिणी अज्जकोसिई दुक्खेण विभावीअदि । भअवदि, णमो दे । [ यतिवेषधारिण्यार्यकौशिकी दुःखेन विभाव्यते । भगवति, नमस्ते । ]

परिव्राजिका—स्वस्ति भवतीभ्याम् ।

राजा—कथम् । आप्तवर्गोऽयं भगवत्याः ।

परिव्राजिका—एवमेतत् ।

विदूषकः—तेण हि कहेदु भअवदा अत्तहोदीवुत्तन्तं दाव असेसं ।
[ तेन हि कथयतु भगवत्यत्रभवत्या वृत्तान्तं तावदशेषम् । ]

---

स्वरसंयोगः वर्णोच्चारणक्रमः । ननु निश्चयेन, सैव आर्यकौशिक्येव । न तस्याः स्वरसंयोगवदस्याः स्वरसंयोग इति तुलनामात्रमपि तु सैवेयं भगवतीति साक्षादुपस्थितेति निश्चयेनावधारयेति भावः ।

यतिवेशधारिणी परिव्राजकजनोपयुक्तकाषायाम्बरपरिधाना । दुःखेन स्वरसंयोगेङ्गितादिसादृश्यमूलकानुमानायासेन । विभाव्यते प्रत्यभिज्ञायते । अत्र 'विभाव्यते' इत्यन्तं मालविकाम्प्रति, 'नमस्ते' इति च कौशिकीं प्रति ।

स्वस्ति क्षेमम् , भवत्विति शेषः । भवतीभ्याम् शिल्पिदारिकाभ्यां युवाभ्याम् । 'नमःस्वस्तिस्वाहे'त्यादिना चतुर्थी ।

आप्तवर्गः परिचितपूर्वतयाऽऽत्मीयजनः । 'आप्तः प्रत्ययितस्त्रिषु' इत्यमरः । काक्वा जिज्ञासा व्यज्यते ।

एवमेतत् परिचिता इमा ममेति भवदूहः सत्य इत्यर्थः ।

तेन परिचितत्वेन हेतुना । अत्रभवत्याः राजकन्यात्वेन सम्मान्यायाः मालविकायाः । अशेषम् समग्रम् ।

---

दोनों—आर्य कौशिकी का सा स्वर मालूम पड़ता है !

मालविका—अरी, वही न है ।

दोनों—यतिवेषधारिणी आर्य कौशिकी कष्टसे पहचानी जारही हैं । भगवति, नमस्कार ।

परिव्राजिका—तुमलोगोंका भला हो ।

राजा—यह आपकी परिचिता हैं ।

परिव्राजिका—हाँ ऐसी ही बात है ।

विदूषक—तब आप इनकी सारी कथा कहें ।

परिव्राजिका—( सवैक्लव्यम् । ) तावच्छ्रूयताम् । माधवसेनसचिवं ममाग्रजं सुमतिमवगच्छ ।

राजा—उपलक्षितः । ततस्ततः ।

परिव्राजिका—स इमां तथागतभ्रातृकां मया सार्धमपवाह्य भवत्संबन्धापेक्षया पथिकसार्थं विदिशागामिनमनुप्रविष्टः ।

राजा—ततस्ततः ।

परिव्राजिका—स चाटव्यन्तरे निविष्टो गताध्वा वणिग्गणः ।

राजा—ततस्ततः ।

परिव्राजिका—ततः किंचान्यत् ।

---

सवैक्लव्यम् शोकविह्वलतया सह, तथाभावश्च भ्रातृपरिजनविपदुपनिपातध्यानेन बोध्यः ।

उपलक्षितः तर्कितः, स चायं तर्कः कौशिक्याः शोकं दृष्ट्वा कर्तुं शक्यः । ततस्तत इति द्विरुक्तिः सम्भ्रमे । तेन चोत्कण्ठाकृतं कालक्षेपासहिष्णुत्वं व्यङ्ग्यम् ।

तथागतभ्रातृकाम् तथागतः तामवस्थामापन्नो यज्ञसेनेन कारायां क्षिप्तो भ्राता सोदरो माधवसेनो यस्यास्ताम् । इमाम् मालविकाम् । अपवाह्य यज्ञसेनाधिकृतान्माधवसेननिवासप्रासादान्निष्कास्य । भवत्सम्बन्धापेक्षया भवते मालविकाया दानानुरोधेन [ इत्थमाचरणञ्च मन्त्रिणः स्वभर्तृमनोरथपूर्त्यर्थम् ] विदिशागामिनम् विदिशाभिधभवदीयराजधानीं प्रति गच्छन्तं । पथिकसार्थम् पान्थसमूहम् । अनुप्रविष्टः तेन पथिकजनसमूहेन सङ्गत इत्यर्थः । सः पथिकसार्थः । अटव्यन्तरे वनमध्ये । गताध्वा अतिवाहितविपुलमार्गः ( अतश्च परिश्रान्तः ) निविष्टः उपविष्टः ( स्थितो विश्रमितुमिति भावः । )

---

परिव्राजिका—( खेद पूर्वक ) सुनिये-माधवसेनके मन्त्री हमारे अग्रज थे।

राजा—यहतो समझ गयाथा, आगे ?

परिव्राजिका—वह इसके भाईके बन्दी हो जानेपर मुझे और इसको लेकर आपसे सम्बन्धकी इच्छासे विदिशा आनेवाले यात्रिदलके साथ होलिये ।

राजा—उसकेबाद ?

परिव्राजिका—वह बणिक् जनोंका समुदाय मध्यवनमें थककर ठहर गया।

राजा—और क्या हुआ ?

परिव्राजिका—उसके बाद-तूणीरपट्टद्वारा दोनो बाहुमध्यों को कसे, पैरतक लट-

तूणीरपट्टपरिणद्धभुजान्तरालमापार्ष्णिलम्बिशिखिबर्हकलापधारि ।
कोदण्डपाणि विनदत्प्रतिरोधकानामापातदुष्प्रसहमाविरभूदनीकम् ॥१०॥

( मालविका भयं रूपयति । )

विदूषकः—भोदि, मा भआहि । अदिक्कन्तं क्खु तत्तहोदी कहेदि ।
[ भवति, मा बिभेहि । अतिक्रान्तं खलु तत्रभवती कथयति । ]

---

तूणीरपट्टेति तूणीरपट्टेन तूणबन्धनार्थं निर्मितेन तत्सम्बद्धपट्टसूत्रविशेषेण, परिणद्धम् सम्यगाबद्धम्, भुजान्तरालम् बाहुमध्यभागः वक्षोदेशो यस्य तत्तथा । पृष्ठदेशे लम्बमानस्य तूणीरस्य युद्धकृतचाञ्चल्यकाले स्खलनं निवारयितुं वक्षोदेशेन सह पट्टसूत्रेणाबद्धमित्यर्थः । आपार्ष्णि पादमूलपर्यन्तम्, लम्बी लम्बमानो यः शिखिबर्हकलापस्तं धर्तुं शीलं यस्य तदापादलम्बिशिखिबर्हकलापधारि पादाग्रपर्यन्तपातिमयूरपिच्छसमूहमित्यर्थः । कोदण्डपाणि धनुर्धरम्, निनदत् शब्दायमानम्, आपातदुष्प्रसहम् दुर्निरोधम्, प्रतिरोधकानाम् दस्यूनाम् अनीकम् सैन्यम् आविरभूत् आत्मानं प्राचकटत् । अयमर्थः— वक्षोदेशं तूणीरबन्धनपट्टनपट्टसूत्रेण बद्धवत्, पादलम्बिमयूरकलापालङ्कृतम्, धृतधनुः, शब्दायमानम्, अत्यन्तदुर्निरोधम्, दस्यूनां कुलं तत्र विश्राम्यतां तेषां पथिकसार्थानाम्पुरः समुपस्थितमित्यभून्महानातङ्क इति । 'पार्ष्णिः स्त्रीपुंसयोः पादमूले स्यात्' इति रन्तिदेवः । 'शिखण्डश्च पिच्छबर्हे नपुंसके' इत्यमरः । 'चौरैकागारिकस्तेनदस्युतस्करमोषकाः । प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः' इति चामरः ॥ अत्र बर्हकलापपदयोरेकार्थकत्वादापाततः पुनरुक्तवदाभासमानत्वेऽपि कलापशब्दस्य समूहार्थकतया पर्यवसानात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥ १० ॥

रूपयति अभिनयेन प्रकटयति । तस्या भयञ्च दस्युदलस्मरणकृतम् ।

अतिक्रान्तम् व्यतीतम् एतेन तदुपस्थित्याशङ्कया कातर्यं नोपपन्नमिति मा भैषीरिति भावः ।

---

कते हुए मयूरपुच्छोंसे अलङ्कृत, धनुर्धर, सामने आनेवालोंके लिये कालस्वरूव, और गरजता हुआ दस्युसैन्य प्रकट हुआ ॥ १० ॥

( मालविका भयप्रकाश करती है )

विदूषक—भद्रे, डरें नहीं, यहतो वीती वात सुनारही हैं ।

राजा—ततस्ततः।

परिव्राजिका—ततो मुहूर्तं बद्धायुधास्ते पराङ्मुखीभूताः सार्थवाहयोद्धारस्तस्करैः।

राजा—हन्त, इतः परं कष्टतरं श्रोतव्यम्।

परिव्राजिका—ततः स मत्सोदर्यः।

इमां परीप्सुर्दुर्जाते पराभिभवकातराम्।
भर्तृप्रियः प्रियैर्भर्तुरानृण्यमसुभिर्गतः॥ ११॥

---

मुहूर्त्तम् अल्पकालपर्यन्तम्। बद्धायुधाः गृहीतास्त्राः। सार्थवाह-योद्धारः पथिकजनेषु युद्धक्षमाः। सार्थवाहानां योद्धारो रक्षकसैन्यानीत्यर्थो वा। पराङ्मुखीभूताः पराजिताः ( पलायिषतेति भावः )

हन्त खेदे। कष्टतरम् अतीवव्यथकम्।

मत्सोदर्यः मम सहोदरः। 'भ्राता तु स्यात्सहोदरः। समानोदर्यसोदर्यसगर्भ्यसहजाअपि' इत्यमरः।

इमामिति। दुर्जाते तत्र व्यसने पराभिभवेन परकृताक्रमणेन कातराम् भयव्याकुलाम् इमाम् मालविकाम् परीप्सुः पर्याप्तुम् परित्रातुमिच्छुः भर्तृप्रियः स्वामिवल्लभः प्रियैः सर्वेषां प्राणिनाम् प्रेमभाजनैः ( अतएव च दुस्त्यजैः ) असुभिः प्राणैः भर्तुः स्वामिनः अनृणत्वम् ( राजकृतपोषणाद्युपकारस्य प्राणत्यागातिरिक्तकार्याप्रत्युपकर्त्तव्यतया तत्त्यागेन निष्कृतिम् ) गतः प्राप्तः। मालविकात्राणेच्छया युध्यमानो दस्युभिर्निहत इत्यर्थः। अत्र 'असुभिरानृण्यं गतः' इत्युक्त्या भङ्ग्या मरणप्रतीतेः पर्यायोक्तमलङ्कारः। 'पर्याप्तिः स्यात् परित्राणं हस्तधारणमित्यपि' इत्यमरः। 'दुर्जातं व्यसने क्लीबमसम्यग्जातवस्तुनि' इति केशवः॥ ११॥

---

राजा—तब ?

परिव्राजिका - थोड़ीदेर तक यात्रिदल लड़ता रहा, पीछे दस्युओं के दलने उसे हरादिया।

राजा—हाय ! इसके आगे दुःखद वृत्तान्त सुनना होगा।

परिव्राजिका—उसके वाद शत्रुकृत आक्रमणसे कातर इस मालविकाको उस आपत्ति समयमें वचाते हुए स्वामिप्रिय हमारे सहोदर अपने प्राणोंको देकर स्वामिऋण चुकाया॥ ११॥

प्रथमा—हा, हदो सुमदी । [ अहो, हतः सुमतिः । ]

द्वितीया—तदो क्खु इअं भट्टदारिआए समवत्था संवुत्ता । [ ततः खल्वियं भर्तृदारिकायाः समवस्था संवृत्ता । ]

( परिव्राजिका बाष्पं विसृजति । )

राजा—भगवति, तनुत्यजामीदृशी लोकयात्रा । न शोच्यस्तत्रभवान्सफलीकृतभर्तृपिण्डः । ततस्ततः ।

परिव्राजिका—ततोऽहं मोहमुपगता यावत्संज्ञां लभे तावदियं दुर्लभदर्शना संवृत्ता ।

---

भर्तृदारिकायाः मालविकायाः । इयं समवस्था दासीभावरूपा दशा । बाष्पं विसृजति भ्रातरमनुशोचन्ती रोदनमाचरतीति भावः ।

तनुत्यजाम् मरणधर्मणाम् मनुष्याणाम् ईदशी मरणादिरूपा । लोकयात्रा जगतो रीतिः तथा च गीता —

'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च' । इति ।

योगियाज्ञवल्क्योप्याह—

'गन्त्री वसुमती नाशमुदधिर्दैवतानि' च ।

फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति' ॥ इति

सफलीकृतभर्तृपिण्ड आत्मव्ययेनापि कन्यापरित्राणार्थमुद्यतत्वात् सार्थकीकृतमालविकापूर्वजान्नः । न शोच्यः न शोचनीयः स्वाम्यर्थे तस्करैश्च घातितत्वात् । तथा चोक्तमाग्नेये पुराणे—

'दंष्ट्रिभिः शृङ्गिभिर्वापि हता म्लेच्छैश्च तस्करैः ।
ये स्वाम्यर्थे हता, यान्ति राजन् स्वर्गं न संशयः' ॥

ततः सुमतेर्मरणानन्तरम् । संज्ञाम् चेतनाम् । दुर्लभदर्शना अदृश्या ।

---

**प्रथमा—अहा ! सुमति मारेगये ?**

**द्वितीया—इसीसे तो राजकुमारीकी यह दशा हुई ।**

**( परिव्राजिका रोती है )**

**राजा—भगवति, देहधारियों के लिये मरना स्वाभाविक है, आपके भाईने स्वामिऋणचुकानेमें प्राणदिये, उन्हें मत सोचिये ।**

**परिव्राजिका—उसके बाद जब मुझे चेतना हुई तब तक यह खो गई थी ।**

राजा—महत्खलु कृच्छ्रमनुभूतं भगवत्या।

परिव्राजिका—ततो भ्रातुः शरीरमग्निसात्कृत्वा पुनर्नवीकृतवैधव्य-दुःखया मया त्वदीयं देशमवतीर्य इमे काषाये गृहीते।

राजा—युक्तः सज्जनस्यैष पन्थाः। ततस्ततः।

परिव्राजिका—सेयमाटविकेभ्यो वीरसेनं वीरसेनाच्च देवीं गता। देवीगृहे लब्धप्रवेशया मया चानन्तरं दृष्टेत्येतदवसानं कथायाः।

मालविका—किं णु क्खु संपदं भट्टा भणादि। [ किं नु खलु सांप्रतं भर्ता भणति। ]

---

भ्रातुः सुमतेः। शरीरम् शवम्। अग्निसात् दग्धम्। पुनः भूयः। नवीभूतवैधव्यदुःखया पुनर्जागरितस्वामिमरणक्लेशया। अवतीर्य आगम्य। इमे काषाये कषायेण रक्ते परिधानीयोत्तरीयवस्त्रे। भ्रातरं मृतं दग्ध्वा 'भर्त्तरि मृते ममायमाश्रय आसीदधुना कं शरणमुपयातास्मि' इति विषण्णा भवदीयं राज्यं प्रपद्य प्रव्रज्यामापमिति भावः।

पन्थाः सर्वसम्मतो मार्गः। गार्हस्थ्यसुखलेशाभावे प्रव्रज्याग्रहणं युक्तमित्यर्थः। सेयम् मालविका। आटविकेभ्यः वनचारिभ्यः ( दस्युभ्यः सकाशात् ) वीरसेनम् तदाख्यं भवदमात्यम्। दस्युभिरियं मालविका स्वोपरि प्रसादं कर्त्तुमुत्कोचरूपेण वीरसेनाय समर्पितेति तात्पर्यम्। देवीगृहे महिषीगृहे। लब्धप्रवेशया अधिगतप्रवेशावसरया। अनन्तरम् पश्चात्।

भणति निर्णीय ब्रवीति, श्रुतमदीयवृत्तान्तो राजा मदीयमत्र स्वप्रणयिनीभावेनावस्थानमनुमन्यते, धारिण्यादिभयेन केनाप्यन्येन वा कारणेन मां सम्प्रति विगतभयस्य मम भ्रातुरन्तिकं वा प्रापयतीति द्वैधेन मालविकाया मनः साशङ्कमिति भावः।

---

राजा—आपको बड़ी बड़ी मुशीबतें झेलनी पड़ीं।

परिव्राजिका—इसके बाद भाईकी अग्नि क्रिया करके हमने अपने हृदयमें वैधव्य वेदना को नवीभूत रूपमें पाया। अतः आपके राज्यमें आकर यह काषाय धारण करलिया।

राजा – सज्जनोंके लिये यही ठीक मार्ग है।

परिव्राजिका—और यह मालविका लुटेरोंके पाससे वीरसेनके यहाँ और उसके पाससे देवीके यहाँ आई। जबमैं देवीके पास आई तो उसे वहाँ देखा। यहीं कथाकी इतिश्री है।

मालविका—( स्वगत ) न जाने अब महाराज क्या कहते हैं ?

राजा—अहो परिभवोपहारिणो विनिपाताः । कुतः

प्रेष्यभावेन नामेयं देवीशब्दक्षमा सती ।
स्नानीयवस्त्रक्रियया पत्रोर्णं वोपयुज्यते ॥ १२ ॥

धारिणी—भअवदि, तुए अभिजणवदिं मालविअ अणाचक्खन्तीए असंपदं किदम् । [भगवति, त्वयाभिजनवतीं मालविकामनाचक्षाणयाऽसांप्रतं कृतम् ।]

परिव्राजिका—शान्तं पापम् । केनचन कारणेन खलु मया नैर्घृण्यमालम्बितम् ।

---

परिभवोपहारिणः कष्टदायकाः, विनिपाताः आपदः ।

प्रेष्यभावेनेति । इयम् मालविका देवीशब्दक्षमा सौन्दर्यशीलशुभलक्षणत्वादिना गुणगणेन महाकुलप्रसूतत्वेन च देवीपदव्यवहार्यतायुक्ता सती प्रेष्यभावेन परिचारिकाभावेन स्नानीयवस्त्रक्रियया स्नानकाले गात्रप्रोञ्छनीयवस्त्रत्वकरणेन पत्रोर्णम् वा धौतकौशेयवसनमिव उपयुज्यते नाम । यथातिमहार्हं धौतकौषेयवसनं स्नानानन्तरं विधेये गात्रप्रोञ्छनकर्मणि व्यवहर्तुं नोपयुक्तं किन्तु प्रसाधनावसरपरिधानभावेन शोभते,तथैव राजकन्यायाः सर्वगुणयुक्तायाश्चास्या मालविकाया देवीभावेनैवादरः प्राप्नोति न प्रेष्यभावेनावमाननेति खेद इति भावः । उपमात्राऽलङ्कारः । सम्भावनायां नामशब्दः । इवार्थे चात्र वापदं 'मणीवोष्ट्रस्य लम्बेते' इत्यादाविव । 'पत्रोर्णं धौतकौशेयम्' इत्यमरः । कृमयः पत्रेषु पालिता ऊर्णा सृजन्ति, तेन पत्रस्योर्णाऽत्रेति पत्रोर्णपदव्युत्पत्तौ भरतः ॥ १२ ॥

अभिजनवतीम् महाकुलप्रसूताम् । अनाचक्षाणया अब्रुवत्या । असाम्प्रतम् अयुक्तम् । महाजनावमानकृतापराधावसरसमर्पणादस्मदहितमाचरितं त्वयेति देव्या आशयः । एतेनाज्ञानकृतापराधस्य क्षम्यता ध्वनिता । 'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयाः' इत्यमरः' । नैर्घृण्यम् निर्दयत्वम्, एतेनात्मनो राजकुलस्य च पश्चात्तापस्यावसरस्याभावो ध्वनितः ।

---

राजा—भाग्य बड़ी बड़ी आफदें खड़ी कर सकता है । देखो जो मालविका देवी पदके योग्य है उसे दासी भावमें रहना पड़रहा है । मानों बहुमूल्य रेशमी वस्त्र स्नानकालिक वस्त्रके कार्यमें लाया जाता है ॥ १२ ॥

देवी—महाकुल प्रसूत इस मालविकाका परिचय नहीं दिया यह आपने ठीक नहीं किया ।

परिव्राजिका—आप कुछ दूसरा न समझें । मैंने किसी कारणवशही इतनी निर्दयता की ।

देवी— किं विअ तं कारणम्। [ किमिव तत्कारणम्। ]

परिव्राजिका—इयं पितरि जीवति केनापि देवयात्रागतेन सिद्धादेशकेन साधुना मत्समक्षं समादिष्टा। आसंवत्सरमात्रमियं प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यतीति। तदेवंभाविनमादेशमस्यास्त्वत्पादशुश्रूषया परिणमन्तमवेक्ष्य कालप्रतीक्षया मया साधु कृतमिति पश्यामि।

राजा—युक्ता प्रतीक्षा।

कञ्चुकी—देव, कथान्तरेणान्तरितम् अमात्यो विज्ञापयति। विद-

---

किमिव-कीदृशम्?

इयम् मालविका। पितरि स्वताते। जीवति वर्त्तमाने। देवयात्रागतेन देवताविशेषस्योत्सवे समायातेन। सिद्धादेशकेन प्रसिद्धदैवज्ञेन मत्समक्षम् मयि वर्त्तमानायाम् समादिष्टा उक्ता। तदुक्तिमेवानुवदति–संव्वत्सरेत्यादिना। सँव्वत्सरमात्रम् द्वायनमेकं यावत्। प्रेष्यभावम् दास्यम्, सदृशभर्तृगामिनी स्वानुरूपप्रियसङ्गता। भाविनम् भविष्यन्तम्। आदेशम् आदिष्टपूर्वं प्रेष्यभावम्। त्वत्पादशुश्रूषया–त्वत्परिचर्यया। परिणमन्तम् सफलीभूय व्यतिक्रामन्तम्। अयमर्थः–अनलीकवाचा दैवज्ञेन कथितस्य मालविकयाऽनुभवनीयस्य प्रेष्यभावस्य भवत्परिचर्यया पर्यवसितत्वे मया कालं प्रतीक्षमाणया स्थितमन्यथा त्वयाऽस्याः परिचये लब्धे प्रेष्यभावापगमेऽवश्यभोक्तव्यस्य तस्य क्वचिदन्यत्र चारितार्थ्यं कर्तव्यं स्यात्तच्चानिष्टतरं भवेदतो मया नायुक्तं कृतमिति।

प्रतीक्षा कालसहनम्।

कथान्तरेण विषयान्तरालापेन। अन्तरितम् तिरोहितम्, अलब्धावसरमित्यर्थः

---

देवी—वह कारण क्या है?

परिव्राजिका—जब इसके पिताजी जीवितथे उन्हीं दिनों तीर्थयात्रा प्रसङ्गमें आये हुए किसी सिद्ध महात्माने कहाथा कि यह एक वर्ष तक दासी का जीवन बितानेके बाद योग्य स्वामी प्राप्तकर सकेगी। इस लिये इसके अवश्य भोग्य इस आदेशको आपकीसेवामें चरितार्थ होते देखकर मैं समयकी प्रतीक्षा कर रही थी, मैं समझती हूँ यह मैंने ठीकही किया।

राजा—प्रतीक्षा करनाही ठीक था।

कञ्चुकी—देव, दूसरी बातमें उलझ गया! मन्त्रीजीने कहा है कि विदर्भ देशके

र्भगतमनुष्ठेयमनुष्ठितमभूत् । देवस्य तावदभिप्रायं श्रोतुमिच्छामीति ।

राजा—मौद्गल्य, तत्रभवतोर्यज्ञसेनमाधवसेनयोर्द्वैराज्यमिदानीमवस्थापयितुकामोऽस्मि ।

तौ पृथग्वरदाकूले शिष्टामुत्तरदक्षिणे ।
नक्तंदिवं विभज्योभौ शीतोष्णकिरणाविव ॥ १३ ॥

कञ्चुकी—देव, एवममात्यपरिषदे निवेदयामि ।

---

विदर्भगतम् विदर्भदेशविषयम् अनुष्ठेयम् कर्त्तव्यम् । यज्ञसेननिग्रह एवात्र विदर्भविषयमनुष्ठेयं तत्सम्पादितमित्याशयः ।

अभिप्रायम् विदर्भराजनिग्रहात्परतो विदर्भराज्यविषये कर्त्तव्यम् ।

द्वैराज्यम्—पृथक् पृथक् राज्यद्वयम् । द्वौ राजानौ यत्र देशे सस्तथोक्तस्तस्य भावो द्वैराज्यम् । अंशविभागेन राज्यद्वयमत्र विवक्षितम् दृश्यते च द्वैराज्यपदप्रयोगोऽत्रैवार्थे नैषधेऽपिः—'चरचिरं शैशवयौवनीयद्वैराज्यभाजि त्वयि खेदमेति' ॥ इति ।

द्वैराज्यस्थापनप्रकारमाह—

तौ पृथगिति । तावुभौ यज्ञसेनमाधवसेनौ नक्तन्दिवम् रात्रिं दिनञ्च विभज्य पृथक् पृथग्विषयीकृत्य शीतोष्णकिरणौ चन्द्रसूर्यौ इव पृथक् पृथक् अनितरपारतन्त्र्येण उत्तरदक्षिणे वरदाकूले शिष्टाम् पालयताम् । शासेर्लोटि प्रथमपुरुषद्विवचने रूपम् । यथा विधात्रा नियन्त्रितौ सूर्याचन्द्रमसौ पृथक्पृथक् अह्नो रात्रेश्च प्रभवतः,सति सम्भवेऽन्योन्यस्य चोपकुरुत एव न पुनरास्कन्दतस्तथाम् यज्ञसेनमाधवसेनौ मदादेशेन वरदानद्या दक्षिणमुत्तरं च तद्देशमधिकुरुतामिति भावः । उपमाऽलङ्कारः । 'अचतुरविचतुरेत्यादिना सूत्रेण नक्तन्दिवमिति निपातितम् ॥ १३ ॥

अमात्यपरिषदे मन्त्रिमण्डलाय ।

---

विषयमें जो कर्त्तव्य था वहकर दिया गया । श्रीमान् की इच्छा क्या है यह जानना चाहता हूँ ।

राजा—मौद्गल्य, अब मैं चाहता हूँ कि यज्ञसेन और माधवसेन के दो अलग अलग राज्य कायम कर दिए जांय ।

वे दोनों 'वरदा' केदक्षिण तथा उत्तर तटका अलग अलग शासन करें जैसे सूर्य चन्द्रमा अहोरात्रका दो विभाग करके (प्रजाओंका पालन करते हैं) ॥ १३ ॥

कञ्चुकी—महाराज, यही बात मन्त्रिमण्डलसे कह दीजाय ?

( राजाङ्गुल्यानुमन्यते । )

( निष्क्रान्तः कञ्चुकी । )

प्रथमा—( जनान्तिकम् । ) भट्टदारिए, दिट्ठिआ भट्टिणा भट्टदारओ अद्धरज्जे पडिट्ठं गमइस्सदि । [ भर्तृदारिके, दिष्ट्या भर्ता भर्तृदारकोऽर्धराज्ये प्रतिष्ठां गमयिष्यते । ]

मालविका—एदं दाव बहु मणिदव्वं, जं जीविदसंसआदो मुत्तो । [ एतत्तावद्बहु मन्तव्यम्, यज्जीवितसंशयान्मुक्तः । ]

( प्रविश्य । )

कञ्चुकी—विजयतां देवः । देव, अमात्यो विज्ञापयति । कल्याणी देवस्य बुद्धिः । मन्त्रिपरिषदोऽप्येतदेव दर्शनम् । कुतः—

द्विधा विभक्तां श्रियमुद्वहन्तौ धुरं रथाश्वाविव संग्रहीतुः ।

---

अङ्गुल्या अङ्गुलिचालनरूपेणेङ्गितेन । अनुमन्यते । अनुमतिं प्रयच्छति ।

दिष्ट्या भाग्येन । भर्तृदारकः माधवसेनः । अर्द्धराज्ये द्विधाविभक्तस्य विदर्भराज्यस्यैकस्मिन् भागे । प्रतिष्ठाम् अधिकारम् । बहुमन्तव्यम् यथेष्टंबोद्धव्यम् । जीवितसंशयात् शत्रोर्यज्ञसेनस्योपद्रवैः प्राणसङ्कटात् । राज्याधिगमस्त्वाशातिरिक्त एवेति भावः ।

कल्याणी शुभा, ( सर्वोपकारानुध्यानात्कर्त्तव्यावहितत्वाच्च ) देवस्य राज्ञः । एतदेव भवदादेशानुगतमेव । दर्शनम् भावनम् ( विचार इति पर्यवसितार्थः । )

द्विधा विभक्तामिति । द्विधा विभक्तां समभागद्वयेन विभक्तां धुरं वहनीयरथभारम् उद्वहन्तौ कर्षन्तौ रथाश्वौ इव परस्परावग्रहनिर्विकारौ अन्योन्याक्रमणाभिसन्धिरहितौ संग्रहीतुः नियन्तुः सारथेरिव द्विधा विभक्तां वरदाया तीरद्वये

---

( राजा इशारेसे अनुमति प्रकाश करते हैं )

( कञ्चुकी जाता है )

प्रथमा—राजकुमारीजी, भाग्यवश राजकुमार आधे राज्यपर प्रतिष्ठित होंगे ।

मालविका—यही अधिक समझो कि प्राणसंशयसे बचे ।

कञ्चुकी—( प्रवेशकरके ) जयहो महाराजकी, मन्त्रियोंने कहा है कि महाराजकी बुद्धि बड़ी कल्याणी है मन्त्रिमण्डलकी भी यही रायथी ।

क्योंकि—दो भागोंमें विभक्त राजलक्ष्मीको प्राप्तकरके वे दोनों परस्पर आक्रमण की प्रवृत्तिको भूलकर सदा आपकी आज्ञामें रहेंगे जैसे दोभागोंमें बंटे रथके भारको

तौ स्थास्यतस्ते नृपते निदेशे परस्परोपग्रहनिर्विकारौ ॥ १४ ॥

राजा—तेन हि मन्त्रिपरिषदं ब्रूहि। सेनान्ये वीरसेनाय लेख्यतामेवं क्रियतामिति।

कञ्चुकी—यदाज्ञापयति देवः। ( इति निष्क्रम्य, सप्राभृतकं लेखं गृहीत्वा पुनः प्रविष्टः। ) अनुष्ठिता प्रभोराज्ञा। अयं देवस्य सेनापतेः पुष्पमित्रस्य सकाशात्सोत्तरीयप्राभृतको लेखः प्राप्तः। प्रत्यक्षीकरोत्वेनं देवः।

( राजोत्थाय सप्राभृतकं लेखं सोपचारं गृहीत्वा परिजनायार्पयति। )

---

समनियताम् श्रियम् राज्यलक्ष्मीम् उद्वहन्तौ पालयन्तौ यज्ञसेनमाधवसेनौ परस्परावग्रहे अन्योन्यास्कन्दने निर्विकारौ लोभशून्यौ संग्रहीतुः करदीकृत्य नियमनपरायणस्य तव राज्ञोऽमित्रस्य निदेशे वशे स्थास्यतः वर्त्तिष्येते। एकत्र स्थिते विदर्भसाम्राज्ये कदाचित् स्वस्यापि भीतिः सम्भाव्यतेऽतस्तत्साम्राज्यस्य द्विधा विभागेन द्वैराज्यं स्थापितन्तेन तयोरपि कल्याणं स्वस्याधिपत्यञ्चाक्षुण्णं स्थातेति विचारो नीत्यनुगत इति भावः। उपजातिर्वृत्तम् ॥ १४ ॥

लेख्यताम् प्रयोजनकर्त्तृभूतया मन्त्रिपरिषदा प्रयोज्यकर्त्तृरूपेण लेखकरेण लेख्यताम् पत्ररूपेणादिश्यतामित्याशयः। आदेशस्वरूपमाह—एवमिति।

अनुष्ठिता विहिता। प्रभोः भवतः। आज्ञा आदेशः सेनापतये वीरसेनाय पत्रलेखनरूपः। देवस्य राज्ञः। सेनापतेः बृहद्रथसेनानायकस्य। पुष्यमित्रस्य तदाख्यस्याग्निमित्रपितुः। उत्तरीयम् उत्तरीयवसनरूपम् प्राभृतकम् उपढौकनम् प्रेमोपहारः, तेन सहितः सोत्तरीयप्राभृतकः। लेखः पत्रम्। सोपचारम् यथोचितप्रणामादिना सह। गुरुजनपत्रादिकं सप्रणामं गृह्णन्ति पुत्रादयोऽनेन पत्रप्रेषकस्यादरः कृतो भवतीति शिष्टाचारमनुरुध्येत्थं कृतम्।

---

रथाश्व ढोते हैं और एक दूसरेसे नहीं झगड़ते तथा नियन्ता की आज्ञामें रहते हैं॥ १४॥

राजा—मन्त्रिमण्डलसे ऐसा कहदो कि सेनापति वीरसेनके पास इसकी लिखित आज्ञा भेजदें।

कञ्चुकी—जो आज्ञा। ( जाता है, फिर चादर और पत्र हाथमें लेकर प्रवेश ) श्रीमानकी आज्ञाका पालन कर दिया गया। यह चादर और पत्र महाराज सेनापति पुष्यमित्रके पाससे आये हैं, श्रीमान् इसे देखें।

( परिजनो लेखं नाट्येनोद्घाटयति । )

देवी—(आत्मगतम् ।) अम्हो, तदोमुहं एव्व णो हिअअं । सुणिस्सं दाव गुरुअणस्स कुसलाणन्तरं वसुमित्तस्स वुत्तन्तं । अदिघोरे क्खु पुत्तओ सेणावदिणा णिउत्तो । [अहो, ततोमुखमेव नो हृदयम् । श्रोष्यामि तावद्गुरुजनस्य कुशलानन्तरं वसुमित्रस्य वृत्तान्तम् । अतिघोरे खलु पुत्रकः सेनापतिना नियुक्तः । ]

राजा—( उपविश्य लेखं सोपचारं गृहीत्वा वाचयति । ) स्वस्ति यज्ञ-

---

'अम्हो इति हर्षाश्चर्यसूचकमव्ययं शौरसेन्याम् । ततोमुखम् तत्र बद्धभावम् । तद्द्वारा पुत्रवृत्तान्तप्राप्त्याशया ततोमुखत्वं बोध्यम् । अतिभारे नितान्तमहति युद्धकर्मणि । पुत्रकः आत्मजो वसुमित्रः । अनुकम्पायां कन् ।

गृहीत्वा परिजनहस्तात् पुनरादाय । स्वस्ति कुशलम् । अस्त्विति शेषः, अस्य पुत्रमुद्दिश्य लिखिततया प्रथममाशीर्वाचकस्वस्तिप्रयोगः, तथा च वररुचिकृतपत्रकौमुद्याम्:—

'प्राणपुत्रपदं तद्वत्तथा सच्चरितादिकम् । आशीर्वचनसंयुक्तं पुत्रपत्रे पदक्रमम्' ॥

यज्ञशरणात अश्वमेधालयात । 'शरणं गृहरक्षित्रो'रिति कोशः । सेना(१)पतिः

---

( १ ) विम्बकान्वयोद्भवो महावीरः पुष्यमित्रो मौर्यवंशशेषभूतं निजप्रभु बृहद्रथं नाम राजानं निहत्य पाटलिपुत्रे राजत्वं प्राप्तवान् । स बृहद्रथस्य सेनापतिरासीदतो राज्याभिषिक्तमपि तं सेनापतिपदेन सस्मरुर्जनाः । स स्वराजत्वकाल एव पुत्रमग्निमित्रं विदिशायां राजानमकार्षीदित्यपि कल्पन्ति विद्वांसः । अत्र विषये 'भारतीयेतिवृत्त'नामके स्वग्रन्थे महामहोपाध्याया रामावतारशर्माण इत्थमाहुः—

'चत्वारिंशतमब्दानामशोकः शोककर्षणः । प्रायः प्रत्यन्तसहिते भारते शासनं व्यधात् ॥
ततः परं दशरथः सङ्गतश्च तथा नृपः । शालिशूको देववर्मा शतधन्वा बृहद्रथः ॥
षडित्येतेऽभवन्मौर्या निर्वीर्याः प्रायशः क्रमात् । अधुश्च मागधं राज्यं षट्चत्वारिंशतं समाः ॥
दर्शिताशेषसैन्यश्च बलदर्शनकैतवात् । सेनानीः पुष्यमित्रोऽस्य निष्पिपेष बृहद्रथम् ॥
बृहद्रथं विनिष्पिष्य बन्दीकृत्यास्य मन्त्रिणम् । इष्टवानश्वमेधेन पुष्यमित्रो महामनाः' ॥

---

( उठकर चादर और पत्रको प्रणाम पूर्वक स्वीकार करके परिजनको देता है, परिजन पत्रको खोलता है )

देवी—अहा, हमारा हृदय उसीमें है, गुरुजनका समाचार सुनकर वसुमित्रका वृत्तान्त सुनूंगी । सेनापतिजीने हमारे बच्चेको बड़े कठिन कार्य का भार देदिया है ।

राजा—( बैठकर प्रणाम पूर्वक पत्रको पढ़ता है )

शरणात्सेनापतिः पुष्पमित्रो वैदिशस्थं पुत्रमायुष्मन्तमग्निमित्रं स्नेहात्परिष्वज्येदमनुदर्शयति । विदितमस्तु । योऽसौ राजयज्ञदीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य वत्सरोपात्तनियमो निरर्गलस्तुरंगो विसृष्टः, स सिन्धोर्दक्षिणरोधसि चरन्नश्वानीकेन यवनेन प्रार्थितः । तत उभयोः सेनयोर्महानासीत्संमर्दः ।

( देवी विषादं नाटयति । )

राजा—कथमीदृशं संवृत्तम् । ( शेषं पुनर्वाचयति । )

---

बृहद्रथसेनापतिः पुष्यमित्रः । वैदिशस्थम् विदिशैव वैदिशस्तत्र वर्त्तमानम् । परिष्वज्य आलिङ्ग्य । इदम् वक्ष्यमाणम् । अनुदर्शयति सूचयति । योऽसौ तुरङ्गमः अश्वः । राजयज्ञे अश्वमेधे । दीक्षितेन कृतदीक्षणीयेष्टिना । ( कृतसङ्कल्पेनेत्यर्थः ) गोप्तारम् रक्षकम् । आदिश्य नियुज्य । उपात्तः गृहीतः ललाटदेशे जयपत्रधारणादिः येन स तथोक्तः । विसृष्टः नानादेशभ्रमणाय परित्यक्तः । सिन्धोः सिन्धुनदस्य । रोधसि तीरे । चरन् भ्रमन् । अश्वानीकेन अश्वसेनासनाथेन । यवनेन यवनदेशाधिपेन । प्रार्थितः याचितः ( प्रसह्य गृहीत इत्यर्थः ) उभयोः सेनयोः तस्य मम च सेनायाः । सम्मर्दः युद्धम् । 'याञ्चायामभियाने च प्रार्थना कथ्यते बुधैः' इति हलायुधः । विषादम् आन्तरिकं खेदम् । दुर्धर्षयवनसेनया युद्धमाकर्ण्य पुत्रविपदाशङ्का देव्या विषादे बीजम् ।

ईदृशम् यवनेन सह युद्धम् मत्सम्बन्धियज्ञाश्वस्य यवनकर्त्तृकं ग्रहणं वा । मदधिकृते सिन्धुनदस्य दक्षिणतीरे कथमयं यवनप्रादुर्भाव इति चिन्तया राज्ञ इयमुक्तिः । पुनर्वाचयति लेखं पुनः पठति, एतेन पठनप्रमादाशङ्काक्रोडीकारेण स्वपराक्रमविषयकविश्वासप्राचुर्यं ध्वनितम् ।

---

स्वस्ति, यज्ञागारसे मैं सेनापति पुष्यमित्र विदिशामें वर्त्तमान अपने पुत्र अग्निमित्रको स्नेहालिङ्गन पूर्वक सूचित करता हूँ । विदित हो कि राजसूय यज्ञमें दीक्षित होकर मैंने सौ राजकुमारोंसे परिवृत कुमार वसुमित्रकी संरक्षकतामें जिस मुक्तरज्जु अश्वको छोड़ाथा वह यज्ञाश्व समुद्रके किनारे किसी अश्वसैनिक यवन द्वारा खदेड़ा गया इसपर दोनों पक्षकी सेनायें भिड़ गईं ।

( देवी विषाद प्रकाश करती हैं )

राजा—ऐसा कैसे होगया ? ( आगे पढ़ते हैं )

ततः परान्पराजित्य वसुमित्रेण धन्विना ।
प्रसह्य ह्रियमाणो मे वाजिराजो निवर्तितः ॥ १५ ॥

देवी—इमिणा आससिदं मे हिअअं । [ अनेनाश्वस्तं मे हृदयम् । ]

राजा—( शेषं पुनर्वाचयति । ) सोऽहमिदानीमंशुमता सगरपुत्रेणेव प्रत्याहृताश्वो यक्ष्ये । तदिदानीमकालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसेवनायागन्तव्यमिति ।

---

ततः परानिति । ततो युद्धारम्भे जाते धन्विना धनुर्धरेण वसुमित्रेण परान् शत्रून् पराजित्य जित्वा प्रसह्य बलपूर्वकम् ( यवनैः ) ह्रियमाणः नीयमानः मे मम वाजिराजः मेध्यः घोटकश्रेष्ठः निवर्त्तितः परावर्त्तितः । छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिरलङ्कारः । यज्ञाश्वलक्षणं यथा—

कालाम्भोधरसङ्काशः स्वर्णवर्णमुखो बली । यस्य पार्श्वावुभावधचन्द्राकारौ सुशोभनौ'॥

इत्यादि योग(१)याज्ञवल्क्ये ॥ १५ ॥

आश्वसितम् पुत्रविजयश्रवणेन प्रकृतिं प्रत्यापन्नम् ।

अंशुमता अंशुमानिति प्रसिद्धेन । ( स्वपौत्रेण ) पौत्रेण वसुमित्रेण प्रत्याहृताश्वः । परावर्त्यानीतघोटकः । यक्ष्ये यज्ञं करिष्ये ।

अकालहीनम् कालहीनमकृत्वा, समये समागम्येत्यर्थः । विगतरोषम् यवनान् प्रत्यक्रोधम् चेतो यस्य तथाभूतेन । पितृकर्तृकयज्ञावसरे पुत्रेणापि शान्तेरवलम्बनस्यौचित्यादित्थमादेशः । यज्ञसेवनाय अश्वमेधनिरीक्षणाय । इति शब्दः पत्रसमाप्ति-

---

( १ ) 'पुच्छं विद्युत्प्रतीकाशमुदरं कुन्दसन्निभम् ।
पादाश्चैव हरिद्वर्णाः कर्णौ सिन्दूरसन्निभौ ॥
ज्वलदग्निनिभा जिह्वा चक्षुषी भास्करोपमे । विराजितो रोमराज्या सानुलोमविलोमया॥
विचित्रैर्विविधैर्वर्णैश्चित्रो रजतबिन्दुभिः । यो वेगे वायुतुल्यः स्यादुच्चैरुच्चैःश्रवा यथा॥
यस्य गात्रोद्भवो गन्धो गन्धर्वमपि मोहयेत् । एवं लक्षण संयुक्तो यज्ञियः पशुरुच्यते॥

इति समग्रता लक्षणस्य । अधिकं जिज्ञासुभिस्तु शतपथब्राह्मणस्य त्रयोदशं काण्डं द्रष्टव्यम् ।

---

इसके बाद शत्रुओंको परास्त करके धनुर्धर वसुबन्धुने हमारे अपहृत अश्वराज को बलपूवक छीन लिया ॥ १५ ॥

देवी—इससे हमारे हृदयको आश्वासन मिला ।

राजा—( पत्रका शेष अंश पढ़ता है ) जिस तरह अंशुमान् ने घोड़ा लौटाकर ला

राजा—अनुगृहीतोऽस्मि।

परिव्राजिका—दिष्ट्या पुत्रविजयेन दम्पती वर्द्धेते।

भर्त्रासि वीरपत्नीनां श्लाघ्यानां स्थापिता धुरि।
वीरसूरिति शब्दोऽयं तनयात्त्वामुपस्थितः॥ १६॥

---

सूचकः। अत्रेयं पौराणिकी कथा—पुरा सूर्यवंशप्रभवः कश्चन संगरो नाम राजाऽश्वमेधेन यष्टुकामो मेध्यमश्वं यथारीति विसृज्य स्वाधिकारापहाराशङ्किशक्रकृततद्धरणेन क्षुभ्यन् स्वतनयानश्वान्वेषणायादिदेश। मर्त्यलोकेऽश्वमनासाद्य पातालं प्रविष्टवद्भिस्तैः कपिलमुनेराश्रमे लब्धोऽश्वः, स च तत्र तदज्ञातभावेनैवेन्द्रेणाबध्यत। सगरतनयास्तु कपिलमेवाश्वापहारिणं मन्यमानास्तमवमेनिरेऽदाह्यन्त च मुनिक्रोधशिखिना। उचितसमयातिपातेऽपिताननागतानालोक्य सगरः स्वज्येष्ठसुतस्यासमञ्जस्य पुत्रमंशुमन्तं पितृव्यगणप्रवृत्तये प्राहिणोत्। स च पितृव्यखातवर्त्मनाऽधोभुवनमासाद्य यथावृत्तं विज्ञाय च नम्रभावेन कपिलं प्रसाद्याश्वमानयत्, सगरश्च तेनाश्वेन प्रारब्धं यज्ञं समापिपत् इति॥

अनुगृहीतोऽस्मि पितृपादैः सस्नेहमाकारितस्य मम कृतार्थता सम्पन्ना। दम्पती धारिण्यग्निमित्रौ। वर्द्धेते उत्कर्षेण वर्त्तेते।

भर्त्रेति। भर्त्रा स्वामिनाऽग्निमित्रेण श्लाघ्यानाम् प्रशंसनीयानाम् वीरपत्नीनाम् शूरवनितानां धुरि अग्रे स्थापिताऽसि वीरश्रेष्ठस्य भार्याभावेन लोके परिगणिताऽसि। अधुना पुत्रात् तनयात् वसुमित्रात् (हेतुभूतात्) वीरसूः वीरजननी इति अयं शब्दः त्वाम् धारिणीम् उपस्थितः सम्प्राप्तः। पत्या वीरवधूभावेन लोके कीर्त्तितायास्तव पुत्रात् सम्प्रति वीरजननीति मर्यादाऽधिगतेति भावः। पर्यायोक्तालङ्कारः। तेन च सौभाग्यातिशयो द्योत्यते॥ १६॥

---

दिया तब सगरने यज्ञ सम्पन्न किया, उसी तरह पौत्रकी सहायतासे मैं भी यज्ञ करूंगा। इस लिये यथासमय शान्तमनसे सपरिवार यज्ञमें उपस्थित होना।

राजा—अनुगृहीत हुआ।

परिव्राजिका—पुत्रविजयपर महाराजदम्पति को बधाई।

देवि, स्वामीने आपको वीरपत्नी गणमें अग्रगण्य सिद्ध किया, तो पुत्रने भी आपको वीरमाताका गौरव दिया है॥ १६॥

धारिणी—भअवदि, परितुट्ठम्हि जं पितरं अणुजादो मे वच्छओ।
[ भगवति, परितुष्टास्मि यत्पितरमनुयातो मे वत्सकः । ]

राजा—मौद्गल्य, ननु कलभेन यूथपतेरनुकृतम्।

कञ्चुकी—देव, अयं कुमारः

नैतावता वीरविजृम्भितेन चित्तस्य नो विस्मयमादधाति।
यस्याप्रधृष्यः प्रभवस्त्वमुच्चैरग्नेरपां दग्धुरिवोरुजन्मा॥ १७॥

---

पितरमनुजातः पित्रा सदृशः शूरः सञ्जातः।

कलभेन करिशावकेन। यूथपतेः गजयूथप्रधानस्य। अनुकृतम् अनुकरणं शौर्यप्रकाशनरूपम् आचरितम्। 'यूथनाथस्तु यूथपः' इत्यमरः। अनुकृतमित्यत्र भावे क्तः, धात्वर्थोपसङ्गृहीतकर्मकत्वाच्चाकर्मकत्वम्।

नैतावतेति। एतावता अतिविषयेण ( इयता ) यवनपराजयमात्रेण वीरविजृम्भितेन शूरचेष्टितेन नः अस्माकम् चित्तस्य हृदयस्य विस्मयम् आश्चर्यम् न आदधाति नोत्पादयति। एतावत्या यवनजयगतया सफलतया नास्मान् विस्माययत्ययं कुमार इति भावः। ननु स्तनन्धयकल्पस्य तस्य दुर्धर्षयवनपराभवसामर्थ्यं कुतो नाश्चर्यं जनयत्यत्राह—यस्येति। यस्य कुमारवसुमित्रस्य अप्रधृष्यः अजेयः त्वम् अपाम् सामुद्रपयसाम् दग्धुः शोषणकारिणः वह्नेः वाडवाग्नेः ऊरुजन्मा और्वो मुनिरिव उच्चैः महान् प्रभवः जनकः। तातप्रतापमहिम्ना परिचितानामस्माकं हृदये कुमारेऽप्यस्ति वीरभावग्रहोऽतस्तदीयविजये विश्वस्ततयाऽस्माकं न विस्मयोदयः, पद्मरागाणामाकरे काचमणेर्जन्मनोऽसम्भवपराहतत्वात्, इति भावः॥ पूर्ववाक्यार्थं प्रति परार्धवाक्यार्थस्य हेतुतया काव्यलिङ्गमलङ्कारः। पुरा भगवानौर्वो नाम मुनिः पावकप्रवेशितं निजमूरुं तनयाधिगतये कुशैर्ममन्थ, ततो मथ्यमानात्तदूरुदेशाज्ज्वालाजटालोऽग्निरूप सुतः प्रादुर्भूय मुनिमौर्वमुवाच 'तात, विसृज बुभुक्षितोऽस्मि जगद् भक्षयामि' इति। ततश्च ब्रह्मा स्वसृष्टिरक्षार्थं मुनिमनुनीय तमग्निं समुद्रगते वडवामुखे निक्षेपयामास, स च तत्र सामुद्रमम्भो दाहयति येन जगन्न पयसाऽऽप्लाव्यते' इति मत्स्यपुराणगता कथाऽत्रानुसन्धातव्या। उपजातिर्वृत्तम्॥ १७॥

---

धारिणी—भगवति, मेरा पुत्र पिताके अनुरूप हुआ इसकी मुझे खुशी है।

राजा—मौद्गल्य, करिशिशुने गजराजका अनुकरण किया।

कञ्चुकी—देव, बड़वानलके जन्मदाता और्वमुनिके समान अजेय आप जिसके जन्मदाता हैं वह कुमार वसुमित्र इतनी वीरतासे भी हमारे हृदयको आश्चर्यित नहीं कर रहा है॥ १७॥

राजा—मौद्गल्य, यज्ञसेनश्यालमूरीकृत्य मोच्यन्तां सर्वे बन्धनस्थाः ।

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

देवी—जअसेणे, गच्छ । इरावदीपमुहाणं अन्तेवुराणं पुत्तस्स वुत्तन्तं णिवेदेहि । [ जयसेने, गच्छ । इरावतीप्रमुखेभ्योऽन्तः पुरेभ्यः पुत्रस्य वृत्तान्तं निवेदय । ]

( प्रतीहारी प्रस्थिता । )

धारिणी—एहि दाव । [ एहि तावत् । ]

प्रतीहारी—( प्रतिनिवृत्त्य । ) इअ म्हि । [ इयमस्मि । ]

धारिणी—( जनान्तिकम् । ) जं मए असोअदोहलणिओए मालविआए पइण्णादं, तं से अभिजणं च णिवेदिअ मह वअणेण इरावदिं अणुणेहि । तुए अह सच्चादो ण विब्भंसिदव्वे त्ति । [ यन्मयाशोकदोहदनियोगे मालविकायै प्रतिज्ञातम्, तदस्या अभिजनं च निवेद्य मम वचनेनेरावतीमनुनय । त्वयाहं सत्यान्न विभ्रंशयितव्येति । ]

---

यज्ञसेनश्यालम् यज्ञसेनस्य विदर्भाधिपस्य श्यालम् । ऊरीकृत्य यथेष्टं यातुमनुमत्य । बन्धनस्थाः कारागृहगताः । मोच्यन्ताम् बन्धादिति शेषः ।

अन्तःपुराणाम् इरावतीप्रभृतीनाम् अवरोधवधूनाम् । पुत्रस्य वृत्तान्तम् यवनविजयरूपम् ।

अशोके तपनीयाशोकतरौ, दोहदाय चरणप्रहाराय, नियोगे आदेशकाले, प्रतिज्ञातम् मनोरथपूरणं प्रतिश्रुतम् । मालविकायै इति शेषः । तत् प्रतिज्ञातम् । अस्याः

---

राजा—मौद्गल्य, यज्ञसेनके सालेके साथ साथ सभी बन्दी मुक्तकर दिये जांय ।

कञ्चुकी—जो आज्ञा । ( जाता है )

देवी—जयसेने, जाओ, इरावती प्रभृति रानियोंको पुत्र विजयकी सूचना देदो ।

( प्रतीहारी जाती है )

धारिणी—सुनतो लो ।

प्रतीहारी—( लौटकर ) हाजिर हूँ ।

देवी—( धीरेसे ) अशोक दोहदके लिये भेजनेके समय मालविकाके साथ मैंने जो प्रतिज्ञा कीथी वह बात तथा उसके वंशवगैरह बताकर इरावतीको राजोकरो । 'देखो' तुम मुझे सत्यसे मत डिगाओ ।

प्रतीहारी—जं देवी आणवेदि। ( इति निष्क्रम्य, पुनः प्रविश्य। ) भट्टिणि, पुत्तविजअणिमित्तेण परितोसेण अन्तेउराणं आहरणाणं मञ्जूसं संवुत्ता। [ यद्देव्याज्ञापयति। भट्टिनि, पुत्रविजयनिमित्तेन परितोषेणान्तःपुराणामाभरणानां मञ्जूषास्मि संवृत्ता। ]

देवी—एदं किं अच्चरिअं। साहारणो क्खु ताणं मह अ अअं अब्भुदओ। [ एतत्किमाश्चर्यम्। साधारणः खलु तासां मम चायमभ्युदयः। ]

प्रतीहारी—( जनान्तिकम्। ) भट्टिणि, इरावदी उण विण्णवेदि। सरिसं देवीए पहवन्तीए। तुह वअणं संकप्पिदं ण जुज्जदि अण्णहा कादुं त्ति। [ भट्टिनि, इरावति पुनर्विज्ञापयति। सदृशं देव्याः प्रभवन्त्याः। तव वचनं संकल्पितं न युज्यतेऽन्यथाकर्तुमिति। ]

---

मालविकायाः। अभिजनम् वंशञ्च। निवेद्य सूचयित्वा। मम वचनेन मदीयमनुरोधमनुध्याय। सत्यात् कृतात् प्रतिश्रुतात्। न विभ्रंशयितव्या न मिथ्याप्रतिज्ञा करणीया। मालविकामनोरथपूर्तेर्मया प्रतिश्रुतायास्त्वया विरोधं विधाय नाहं मिथ्यावचना कार्येति देव्या अनुरोधः। एतेन राज्ञा सह मालविकाया विवाहो भावी व्यज्यते।

मञ्जूषा पेटिका, यथा मञ्जूषा बहुविधाभरणानि धारयति तथैवाहमपि पुत्रविजयश्रवणप्रसन्नैराजावरोधैर्दीयमानानि बहूनि भूषणानि धारयामीति भावः।

अभ्युदयः पुत्रविजयजनिता वृद्धिः। साधारणः सर्वासां राजपत्नीनां समानः। अतस्ताभिर्दत्तं यत्तदवसरप्राप्तमेवासीदिति भावः। प्रभवन्त्याः समर्थायाः वचनम् सत्यान्न विभ्रंशयितव्येतिवचनरूपोऽनुरोधः। महत्याः प्रभवन्त्याश्च तस्याः स्ववचनरक्षाचिन्तोचितेति भावः।

सङ्कल्पितम् मनोनीतम् ( मालविकाया राज्ञे दानम् ) अन्यथाकर्त्तुम् मिथ्ययितुम्।

---

प्रतीहारी—जो आज्ञा। ( जाकर, पुनः प्रवेश ) महारानीजी, पुत्रविजयकी खबर पाकर दिये गये आभूषणों से रानियोंने मुझे लाद दिया।

देवी—इसमें आश्चर्यकी क्या बात है ? यह अभ्युदयतो सबके लिये तुल्यही है।

प्रतीहारी—( धीरेसे ) देवी, इरावतीने कहा है कि यह समूची पृथ्वीकी स्वामिनी आपकी महत्ता है। प्रतिज्ञातमें अन्यथा करना उचित नहीं होगा।

धारिणी—भअवदि, तुए अणुमदा इच्छामि अज्जसुमदिणा पढम-संकप्पिदं मालविअं अज्जउत्तस्स पडिवादेदुं । [ भगवति, त्वयानुमतेच्छाम्यार्यसुमतिना प्रथमसंकल्पितां मालविकामार्यपुत्राय प्रतिपादयितुम् । ]

परिव्राजिका—इदानीमपि त्वमेवास्याः प्रभवसि ।

धारिणी—( मालविकां हस्ते गृहीत्वा । ) इदं अज्जउत्तो पिअणिवेद-णाणुरूवं पारितोसिअं पडिच्छदु त्ति । [ इदमार्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छत्विति । ]

( राजा व्रीडां नाटयति । )

देवी—(सस्मितम् ।) किं अवधीरेदि अज्जउत्तो । [किमवधीरयत्यार्यपुत्रः ।]

विदूषकः—भोदि, एसो लोअव्ववहारो । सव्वो णववरो लज्जादुरो

अनुमता अनुज्ञाता । आर्यसुमतिना मृतेन तदाख्येन तव भ्रात्रा । प्रथमसङ्कल्पिताम् पूर्वमेव दातुमभिलषिताम् ( मालविकाम् ) आर्यपुत्राय राज्ञेऽग्निमित्राय । प्रतिपादयितुम् । समर्पयितुम् । एतेन राज्ञः कामयमानता ध्वन्यते ।

इदानीमपि न केवलमितः पूर्वम् , किन्त्वधुना वंशपरिचयादिलाभे वृत्तेऽपि । त्वमेवास्याः प्रभवसि मालविकायाः प्रभवसि दातुमधिकारिण्यसि, स्नेहगौरवात्तद्धितानुध्यानात्तद्भ्रातृप्रभुत्वाच्चेति भावः ।

हस्ते कृत्वा दातुं करे कृत्वा । प्रियनिवेदनानुरूपम् यन्मम प्रियं पुत्रविजयं निवेदितवानसि तदुचितमुपहारम् । प्रतीच्छतु स्वीकरोतु । अत्र प्रीत्युत्पादनात् प्रसादो नाम सन्ध्यङ्गमुक्तम् ।

सस्मितम् सेषद्धासम् , हासश्चात्र राज्ञश्चिरप्रार्थिताया अपि मालविकाया ग्रहणावसरे लज्जानाटनाद्बोध्यः । अवधीरयति अवजानाति ।

---

धारिणी—भगवति, यदि आपकी अनुमति हो तो मैं आर्यसुमति के द्वारा सङ्कल्पित मालविकाका विवाह आर्यपुत्रके साथ सम्पन्न करा दूँ ।

परिव्राजिका—इस समय भी आपही इसकी स्वामिनी हैं ।

धारिणी—(मालविकाका हाथ पकड़कर) आर्यपुत्रने मुझे प्रिय संवाद सुनाया उसके पारितोषिकमें इसे स्वीकार करें ।

( राजा लज्जित होते हैं )

देवी—( मुसकिराकर ) क्या आर्यपुत्र इनकार करते हैं ?

विदूषक—देवी, यहतो लोक व्यवहार ही है, सभी नये वर लज्जा किया करते हैं ।

होदि त्ति । [ भवति, एष लोकव्यवहारः । सर्वो नववरो लज्जातुरो भवतीति । ]

( राजा विदूषकमवेक्षते । )

**विदूषकः**—अह देवीए एव्व किदप्पणअविसेसं दिण्णदेवीसद्दं मालविअं अत्तभवं पडिग्गहीदुं इच्छदि । [ अथ देव्यैव कृतप्रणयविशेषां दत्तदेवीशब्दां मालविकामत्रभवान्प्रतिग्रहीतुमिच्छति । ]

**देवी**—एदाए राअदारिआए अहिजणेण एव्व दिण्णो देवीसद्दो किं पुणरुत्तेण । [एतस्या राजदारिकाया अभिजनेनैव दत्तो देवीशब्दः किं पुनरुक्तेन । ]

**परिव्राजिका**—मा मैवम् ।

अप्याकरसमुत्पन्नो रत्नजातिपुरस्कृतः ।
जातरूपेण कल्याणि मणिः संयोगमर्हति ॥ १८ ॥

---

लोकव्यवहारः लोकाचारः । नववरः विवाहार्थमुपस्थितः पुरुषः । लज्जातुरः आपाततो लज्जितः । एतेन लज्जावशादेवास्य मालविकाग्रहणे वैमुख्यं न पुनरवज्ञावशादिति प्रतिपादितम् ।

कृतप्रणयविशेषाम् कृतबहुस्नेहाम् । दत्तदेवीशब्दाम् देवीशब्देनादृताम् । अत्रभवान् माननीयो राजा । प्रतीग्रहीतुम् अङ्गीकर्त्तुम् ।

अभिजनेन कुलेन । अस्याः कुलगौरवादेव प्राप्ता देवीपदव्यवहार्यता, न पुनर्मदीयानुकम्पयेति भावः ।

अप्याकरेति । आकरात् खनेः समुत्पन्नः समुद्धृतोऽपि (सः मणिः) रत्नजातौ रत्नसामान्ये पुरस्कृतः श्रेष्ठभावेन परिगणितोऽपि सः कल्याणि लोकहिते, इदं देव्याः सम्बोधनम्, जातरूपेण सुवर्णेन संयोगं सहवासमर्हति अधिकरोति । अयमाशयः—यथा खनेरुद्धृतस्य रत्नजातौ श्रेष्ठस्यापि मणेः काञ्चनसंयोगेनैव कोऽपि शोभातिशयः सङ्ग्राह्यता च तथाऽस्या मालविकाया अपि न कुलगौरवेण देवीपदव्यवहार्यता किन्तु त्वदनुग्रहादेवेति । अत्राप्रस्तुतात् मणिकाञ्चनसँय्योगात् प्रस्तुतस्य

---

( राजा विदूषककी ओर देखते हैं )

**विदूषक**—देवीजी राजाकी इच्छा है कि आप मालविकाको स्वतुल्य बनाकर देवीपद प्रदान करदें, तब वह उसे स्वीकार करें ।

**देवी**—इस राजकुमारीको इसके उच्चकुलनेही देवी शब्द प्रदान किया है । पुनरुक्ति करनेसे क्या फल ?

**परिव्राजिका**—देवी, आकरसे उत्पन्न तथा श्रेष्ठरत्न जातिमें परिगणित होने परभी किसीभी रत्नको स्वर्णसंयोग चाहिये ही ॥ १८ ॥

देवी—( स्मृत्वा । ) मरिसेदु भअवदी। अब्भुदअकहाए उइदं ण लक्खिदं । जअसेणे, गच्छ दाव। कोसेअपत्तोण्णजुअलं उवणेहि। [ मर्षयतु भगवती । अभ्युदयकथयोचितं न लक्षितम् । जयसेने, गच्छ तावत् । कौशेयपत्रोर्णायुगलमुपनय । ]

प्रतीहारी—जं देवी आणवेदि । ( इति निष्क्रम्य पत्रोर्णं गृहीत्वा पुनः प्रविश्य । ) देवि, एदम् । [ यद्देव्याज्ञापयति । देवि, एतत् । ]

देवी—( मालविकामवगुण्ठनवतीं कृत्वा । ) अज्जउत्तो दाणिं इमं पडिच्छदु । [ आर्यपुत्र इदानीमिमां प्रतीच्छतु । ]

राजा—त्वच्छासनात्प्रवृत्ता एव वयम् । ( अपवार्य । ) हन्त, प्रतिगृहीता ।

विदूषकः—अहो, देवीए अणुऊलदा । [ अहो, देव्या अनुकूलता । ]

( देवी परिजनमवलोकयति । )

---

समस्य मालविकाधारिणीसंयोगस्य प्रतीरे प्रस्तुतप्रशंसाऽलङ्कारः ॥ अत्र लब्धार्थस्थिरीकरणात् कृतिर्नाम सन्ध्यङ्गमुक्तम् ॥ १८ ॥

अभ्युदयकथया पुत्रविजयवार्त्तया । नोपलक्षितम् न चेतितम् । मालविकाया राजपुत्रीत्वे श्रुतेऽपि तस्याः सत्करणं पुत्रविजयश्रवणजनितहर्षव्याक्षिप्तचित्तया मया न चेतितमिति भावः । कौषेयपत्रोर्णयुगलम् धौतकौषेयस्वरूपं परिधानीयमुत्तरीयञ्च ।

इदानीम् अवगुण्ठनेन पूर्णतया प्रदेयकन्यावद्भासमानाम् ।

त्वच्छासनम् त्वदादेशम् । अतः सम्मन्ये त्वदाज्ञप्तं मालविकाग्रहणमिति भावः । अत्र वाञ्छितावाप्तेरानन्दो नाम सन्ध्यङ्गमुक्तम् । अपवार्य प्रकाशोक्तौ लज्जा प्रतिबन्धिकेति कृत्वाऽपवार्य तथोक्तम् । परिजनमवलोकयति मालविकाया देवीभावेनाभ्यर्थनार्थमिति बोध्यम् ।

---

देवी—( याद करके ) आप क्षमा करें । अभ्युदय कथामें लगी रही इससे वस्त्रकी ओर ध्यान नहीं गया । जयसेने, शीघ्र जाकर रेशमी जोड़े तो लाओ ।

प्रतीहारी—जो आज्ञा । ( जाती है, रेशमी जोड़े लेकर फिर प्रवेश करके ) देवी, ले आई ।

देवी—( मालविका को घूंघट देकर ) आर्यपुत्र अब इसे स्वीकार करें ।

राजा—तुम्हारे शासनमें हम सदा अनुरक्त हैं । ( धीरेसे ) स्वीकार किया ।

विदूषक—अहा ! धन्य हैं देवी धारिणी ।

( देवी परिजनोंकी ओर दृष्टिपात करती हैं )

प्रतीहारी—( मालविकामुपेत्य । ) जेदु भट्टिणी । [ जयतु भट्टिनी । ]

( देवी परिव्राजिकां निरीक्षते । )

परिव्राजिका—नैतच्चित्रं त्वयि ।

प्रतिपक्षेणापि पतिं सेवन्ते भर्तृवत्सलाः साध्व्यः ।
अन्यसरितामपि जलं समुद्रगाः प्रापयन्त्युदधिम् ॥ १९ ॥

( प्रविश्य । )

निपुणिका—जेदु भट्टा । इरावदी विण्णावेदि । जं उवआरातिक्कमेण तदा भट्टिणो अवरद्धा, तं सअं एव्व भत्तुणो अणुऊलं णाम मए आअरिदं । संपदं पुण्णमणोरहेण भत्तुणा पसादमेत्तेण संभावइदव्वेत्ति । [ जयतु भर्ता इरावती विज्ञापयति । यदुपचारातिक्रमेण तदा भर्त्रे अपराद्धा, तत्स्वय-

---

प्रतिपक्षेणेति । भर्तृवत्सलाः पत्यनुरक्ताः साध्व्यः साधुवृत्ताः स्त्रियः प्रतिपक्षेण विपक्षेण (शत्रुभूतया सपत्न्या) अपि पतिं स्वामिनं सेवन्ते सुखिनं कर्तुं यतन्ते (तथाहि) समुद्रगाः गङ्गाप्रभृतयः समुद्रपर्यन्तगामिन्यो महानद्यः अन्यसरिताम् अन्यासां लघुनदीनां जलं वारि उदधिम् समुद्रं प्रापयन्ति गमयन्ति । समुद्रो नायकः, महानद्यः साध्व्यस्तदङ्गनाः, लघुनद्यश्च समुद्रप्रियास्तत्सपत्न्य इति बोध्यम् । अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । उदधिसमुद्रगयोर्लिङ्गसाम्योपपादितो नायकनायिकाभावसमारोप इति समासोक्तिश्च तयोस्सङ्करः । साध्वीलक्षणमाहाङ्गिराः—

'आर्त्तार्त्ते मुदिता हृष्टे वियोगे मलिना कृशा ।
मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता' । इति ।

आर्या जातिः ॥ १९ ॥

उपचारातिक्रमेण भर्त्रा कृतस्य पादपतनावधेरनुनयस्य उपचारस्य अतिक्रमेण लङ्घनेन । पादपतितेऽपि भर्त्तरि प्रसादमनासाद्येति भावः । अपराद्धा कृताऽपराधा । भर्त्तुः स्वामिनः । अनुकूलम् प्रियम् । मालविकासमर्पणसमये देव्या सम्मतौ पृष्टायां

---

प्रतीहारी—( मालविकाके निकट जाकर ) जयहो महारानी की, जयहो ।

( देवी परिव्राजिकाकी ओर देखती हैं )

परिव्राजिका—देवि, आपके लिये यह कार्य आश्चर्य जनक नहीं है, साध्वी ललनायें अपनी सौतके द्वारा भी पतिकी प्रसन्नता सम्पादन करती ही हैं, महानदियां दूसरी नदियों को भी समुद्रके अङ्कतक पहुँचाती हैं ॥ १९ ॥

( प्रवेश करके )

निपुणिका—इरावतीने कहा है कि मैंने शिष्टाचारका उल्लङ्घन करके आर्यपुत्रके

मेव भर्तुरनुकूलं नाम मयाचरितम् । सांप्रतं पूर्णमनोरथेन भर्त्रा प्रसादमात्रेण संभावयितव्येति । ]

देवी—णिउणिए, अवस्सं से सेविदं अज्जउत्तो जाणिस्सदि । [ निपुणिके, अवश्यमस्याः सेवितमार्यपुत्रो ज्ञास्यति । ]

निपुणिका—अणुग्गहीदम्हि । [ अनुगृहीतास्मि । ]

परिव्राजिका—देव, अमुना युक्तसंबन्धेन चरितार्थं माधवसेनं सभाजयितुं गच्छामः ।

देवी—भअवदीए ण जुत्तं अम्हे परिच्चइदुं । [ भगवत्या न युक्तमस्मान्परित्यक्तुम् । ]

---

स्वसम्मतिं प्रसन्नतया प्रदाय सोऽपराधो मया क्षालित इति भावः । पूर्णमनोरथेन मालविकालाभात्पूर्णकामेन । प्रसादमात्रेण अनुग्रहेण केवलेन । एतेनेरावत्या मालविकायामनुरक्तस्य राज्ञः प्रागिव स्नेहस्य दौर्लभ्यं ध्वनितम् ।

सेवितम् । अनुगतत्वम् । ज्ञास्यति स्मरिष्यति एतेनेरावत्यां राज्ञः प्रेम्णः सद्भावो ध्वनितः ।

अनुगृहीतास्मि अनुकम्पिताऽस्मि । स्वामिन्यनुग्रहेणैव तदनुचरीणामप्यनुग्रहादिति भावः ।

अमुना अचिरनिर्वृत्तेन । युक्तसम्बन्धेन मालविकायाः परिणयाज्जातेन । अथवा युक्तसम्बन्धेन समुचितराज्यलाभेन । चरितार्थं कृतकृत्यम् । सभाजयितुम् । यथोचिताभिनन्दनाशीर्वादादिना प्रसादयितुम् । सभाजयितुमित्यस्य प्रसादयितुमित्यर्थे प्रयोगो यथा—भवभूतेरुत्तरचरिते 'स्नेहात्सभाजयितुमेत्य दिनान्यमूनि नीत्वोत्सवेन जनकोऽद्य गतो विदेहान् । देव्यास्ततो विमनसः परिसान्त्वनाय धर्मासनाद्विशति वासगृहं नरेन्द्रः' ॥

---

साथ जो अपराध किया था, वह उनके अनुकूल ही हुआ, अतः अब हमारे ऊपर प्रसन्नताका ही व्यवहार करें ।

देवी—निपुणिके आर्यपुत्र उसकी सेवाके लिये अवश्य कृतज्ञ रहेंगे ।

निपुणिका—बड़ी कृपा । ( जाती है )

परिव्राजिका—महाराज, इस समुचित सम्बन्धसे कृतकृत्य माधवसेनको बधाई देने जाती हूँ ।

देवी—आप हमारा परित्याग करें यह आपको नहीं चाहिये ।

राजा—भगवति, मदीयेष्वेव लेखेषु तत्रभवतस्त्वामुद्दिश्य सभाजनाक्षराणि पातयिष्यामः।

परिव्राजिका—युवयोः स्नेहात्परवानयं जनः।

देवी—अज्जउत्त, किं ते भूओ वि पिअं उवहरामि । [ आर्यपुत्र, किं ते भूयोऽपि प्रियमुपहरामि। ]

राजा—त्वं मे प्रसादसुमुखी भव देवि नित्य-
मेतावदेव हृदये प्रतिपालनीयम्।
तथापीदमस्तु ( भरतवाक्यम्। )

---

मदीयेषु मया लेखितेषु। तत्रभवतः माधवसेनस्य। लेखेषु पत्रेषु। त्वामुद्दिश्य तव सन्देशोऽयमिति सूचयित्वा। सभाजनाक्षराणि अभिनन्दनोपयुक्तान् शब्दान्। पातयिष्यामः लेखयिष्यामः। माधवसेनसविधे मया प्रेष्यमाणे पत्रे आर्यकौशिकीदं सन्दिशतीति पृथक् प्रकृत्य त्वयाऽभिमतानि सभाजनोपयुक्तानि शुभाक्षराणि लेखयिष्यामीत्याशयः। एतेन गमनस्यानावश्यकत्वं समर्थितम्।

युवयोः धारिण्यास्तव चेत्यर्थः। परवान् परतन्त्रः। 'परतन्त्रः पराधीनः परवान्नाथवानपी'ति नामलिङ्गानुशासनम्।

भूयः पुनः। मालविकादानेनैकस्य प्रियस्य कृतत्वाद्भूय इत्युक्तम्। उपहरामि प्रतिपादयामि।

त्वं मे प्रसादेति। हे देवी त्वं मे मम नित्यं सर्वदा प्रसादेन प्रसन्नतया शोभनम् अकुटिलम् मुखं यस्यास्तथोक्ता भव भूयाः। एतावदेव इत्येव ( मम ) हृदये मनसि प्रतिपालनीयम् अपेक्षणीयम्। विद्यते इति शेषः। त्वं मयि सदा प्रसन्ना तिष्ठेरित्येतावन्मात्रं प्रियमपेक्षे नातः परं किमपि कामय इति भावः। अतःपरं भर-

---

राजा—भगवति, हम अपनी चिट्ठीमें आपकी ओरसे बधाईके शब्द लिखवा देंगे।

परिव्राजिका—आप दोनोंके स्नेहके सामने परवश हूँ।

देवी—आर्यपुत्रका और क्या प्रिय करूं, आर्यपुत्र आदेश करें।

राजा—मेरे लिये यही प्रिय है, आप प्रसन्न तथा अनुकूल रहें, इतनीही कामना मेरे हृदयमें है।

आशास्यमीतिविगमप्रभृति प्रजानां
संपत्स्यते न खलु गोप्तरि नाग्निमित्रे ॥ २० ॥

---

तवाक्यम् आशास्यमिति । ईतिविगमप्रभृति ईतयः अतिवृष्ट्यादयः षट् प्रजोपद्रवास्तेषां विगमःअभावस्तत्प्रभृतितदादि आशास्यम् काम्यम् गोप्तरि रक्षकेऽग्निमित्रे मयि सति न सम्पत्स्यते न सेत्स्यतीति न अपित्ववश्य सेत्स्यतीति भावः । नञ्द्वय संभाव्यनिषेधव्यावर्त्तनपरम् अनेन आशास्यसिद्धिकथनरूपेण शुभशंसनात् प्रशस्तिर्नाम सन्ध्यङ्गमुक्तम् । 'अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः । प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः । इति षडीतयः ॥ सर्वनाटकावसाने भरतेन सर्वकालसाधारणे शुभाशंसने कर्त्तव्ये गोप्तुरग्निमित्रस्य विशिष्य नामग्रहणं तत्कालराजोपलक्षणं बोध्यम् ॥ २० ॥

यो जातो धरणीसुरान्वयसरोहंसात्प्रसर्पद्यशो
ज्योत्स्नाद्योतितदिङ्मुखान्मधुरिपुध्यानैकबद्धाशयात् ।
मिश्राख्यान्मधुसूदनाज्जयमणौ सीमन्तिनीनां मणौ
तस्य श्रीयुतरामचन्द्रसुधियो व्याख्या प्रसिध्यादियम् ॥ १ ॥
वाह्व्योमखबाहुसम्मितशरद्याशातिथौ माघगे
चन्द्रे पुष्यति भार्गवस्य दिवसे श्रीशारदानुग्रहात् ।
सम्राड्धमसमाजसंस्कृतमहाविद्यालये पूर्णता-
मानीतेयमुमामहेश्वरपदाम्भोजेषु विश्राम्यतु ॥ २ ॥
'विद्वांसो वसुधातले परवचःश्लाघासु वाचंयमाः'
उक्त्वैतद्विमुखीभवामि न मनागालोचनावर्त्मनः ।
ते हि स्वर्णपरीक्षणैकनिकषा निष्पक्षपातां दृशं
प्रक्षिप्यात्मगुणोचितादरभुवं कुर्युर्ममेमां कृतिम् ॥ ३ ॥
छिद्रान्वेषणमात्रसक्तधिषणानप्यत्र दोषान्बहू-
न्ग्रन्थे दर्शयतो न मत्सरितया निन्दामि किन्त्वर्थये ॥

---

( भरत वाक्य )

प्रजाओंकी कोई इच्छा पूर्ण नहीं होगी, ऐसी बात तो अग्निमित्रके राजत्वकालमें होगी ही नहीं ।

( इति निष्क्रान्ताः सर्वे । )

इति श्रीकालिदासस्य कृतौ मालविकाग्निमित्रे पञ्चमोऽङ्कः ।



निर्दोषेण पथा प्रशस्तरचनां निर्माय काञ्चित्कृतिं
लोकेभ्यः समुपाहरन्तु भविता भूयो यशोऽनेन वः ॥ ४ ॥
मान्यान्यानहमाद्रिये नतशिरास्ते ते सखायश्च मे
येषामाग्रहतो विदन्नपि निजाशक्तिं प्रवृत्तोऽभवम् ।
व्याख्यानेऽत्र न तैरियं मम कृतिः कार्याऽन्यथादृक्पदं
सर्वानिन्दितकीर्त्तिलाभसुभगं भाग्यं कुतोऽस्मादृशाम् ॥ ५ ॥

इति मुजफ्फरपुरमण्डलान्तःपाति'पकड़ी' ग्रामवासिना धर्मसमाजसंस्कृतमहाविद्यालये वेदान्तदर्शनाध्यापकेन व्याकरणवेदान्तसाहित्याचार्याद्युपाधिप्रसाधिना मैथिलपण्डितश्रीरामचन्द्रमिश्रशर्मणा विरचितायां मालविकाग्निमित्रस्य प्रकाशाभिधायां व्याख्यायां पञ्चमाङ्कप्रकाशः ।



( सभी चले जाते हैं )

पञ्चम अंक समाप्त



समाप्तोऽयं ग्रन्थः ।



मालविकाग्निमित्र'प्रकाश' व्याख्यायामुक्तानि यथास्थानमिहागतानि

## सन्ध्यङ्गादीनि नाटकीयवस्तूनि सलक्षणानि ।

| सन्ध्यङ्गानि | तल्लक्षणानि |
|---|---|
| १—आदानम्, | कार्यसङ्ग्रह आदानम् । |
| २—आनन्दः, | आनन्दो वाञ्छितागमः । |
| ३—उद्वेगः, | नृपादिजनिता भीतिरुद्वेगः परिकीर्त्तितः । |
| ४—उपक्षेपः, | काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः । |
| ५—उपन्यासः, | उपन्यासः प्रसादनम् । |
| ६—करणम्, | प्रकृतार्थसमारम्भः करणम् । |
| ७—त्रोटकम्, | संरब्धवाक् त्रोटकम् । |
| ८—नर्म, | परिहासवचो नर्म । |
| ९—परिकरः, | समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः । |
| १०—परिन्यासः, | तन्निष्पत्तिः परिन्यासः । |
| ११—परिसर्पः— | इष्टनष्टानुसरणं परिसर्पश्च कथ्यते । |
| १२—पर्युपासनम्, | कृतस्यानुनयः पुनः स्यात् पर्युपासनम् । |
| १३—पुष्पम्, | पुष्पं विशेषवचनं मतम् । |
| १४—पूर्ववाक्यम्, | पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थोपदर्शनम् । |
| १५—प्रगमनम्, | प्रगमनं वाक्यं स्यादुत्तरोत्तरम् । |
| १६—प्ररोचना, | प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी । |
| १७—प्रशस्तिः, | नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते । |
| १८—समाधानम्— | वीजस्यागमनं यत्तु तत्समाधानमुच्यते । |
| १९—प्राप्तिः— | प्राप्तिः सुखागमः । |
| २०—कृतिः | लब्धार्थगमनं कृतिः । |
| २१—प्रसादः, | शुश्रूषादिः प्रसादः स्यात् । |

| सन्ध्यङ्गानि | तल्लक्षणानि |
|---|---|
| २२—युक्तिः, | सम्प्रधारणमर्थानां युक्तिः । |
| २३—विरोधः, | विरोधो व्यसनप्राप्तिः । |
| २४—विलोभनम्, | गुणाख्यानं विलोभनम् । |
| २५—सन्धिः, | वीजोपगमनं सन्धिः । |
| २६—उद्भेदः, | वीजार्थस्य प्ररोहः स्यादुद्भेदः । |

एतानि सन्ध्यङ्गानि प्रकाशे लक्ष्ये सङ्गमितानि, तदर्थं तत्रैव दृष्टिर्देया। अन्यानि सन्ध्यङ्गानि त्वत्रानपेक्षितत्वान्नाम्नाऽपि नोक्तानि, सत्यां जिज्ञासायां साहित्यदर्पणदशरूपके निभालनीये ।

**मुख-प्रतिमुख-गर्भ-विमर्शो-पसंहृतिनामकाः पञ्च नाटके सन्धयः ।**

१—मुखसन्धिः— 'यत्र वीजसमुत्पत्तिर्नानार्थरससम्भवा ।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम् ' ॥

२—प्रतिमुखसन्धिः—'फलप्रधानोपायस्य मुखसन्धिनिवेशिनः ।
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखं च तत' ॥

३—गर्भसन्धिः— 'फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन ।
गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः' ।

४—विमर्षसन्धिः— 'यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः ।
शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृतः ॥

५—उपसंहृति (निर्वहण) सन्धिः—वीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत्' ॥

एषां बहूनि प्रत्येकमङ्गानि, तेष्वत्र टीकायां लक्ष्येषु सङ्गमितानामङ्गानां लक्षणान्यत्रोपयुक्तानि ।

सलक्षणाः

# कतिपये 'मालविकाग्निमित्र' गता नाटकीया विषयाः ।

स्वगतम् ( आत्मगतम् )—'अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्' ।

प्रकाशम्— 'सर्वश्राव्यं प्रकाशं स्यात्' ।

अपवार्य— 'तद् भवेदपवारितम् ।
रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते ।
त्रिपताककरेणान्यानपवार्यान्तरा कथाम् ॥

जनान्तिकम्— 'अन्योन्यामन्त्रणं यत्स्याजनान्ते तज्जनान्तिकम्' ॥

नेपथ्यम्— 'नटानां वेशपरिग्रहस्थानम्' ।

नाटकम्—'नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसुसंयुतम् ।
विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ॥
सुखदुःखसमुद्भूति नानारसनिरन्तरम् ।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः ॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥
एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।
अङ्गमन्ये रसाः सर्वे कार्यं निर्वहणेऽद्भुतम्' ॥

अङ्कः—'प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः ।
भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ।
नानेकदिननिर्वर्त्यकथया सम्प्रयोजितः ।
आवश्यकानां कार्याणामविरोधाद्विनिर्मितः ।
प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः ।
अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः' ॥

नान्दी—'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संमता ॥
मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी ।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत' ॥

सूत्रधारः—'नाट्योपकरणादीनि सूत्रमित्यभिधीयते ।
सूत्रं धारयते यस्तु सूत्रधारः स उच्यते' ।

प्रस्तावना—'नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ।
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा' ॥

विष्कम्भकः—'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः' ।

प्रवेशकः—'प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा' ।

वीजम्—'अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति ।
फलस्य प्रथमो हेतुर्वीजमित्यभिधीयते' ॥

विन्दुः—'अवान्तरार्थविच्छेदे विन्दुरच्छेदकारणम्' ।

नायकः—'त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता' ।

धीरललितनायकः—'निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्' ।

विदूषकः—'कुसुमवसन्ताद्यभिधः कर्मवपुर्वेशभाषाद्यैः ।
हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः[१]' ॥



१ स्वकर्म भोजनम् ।

# मालविकाग्निमित्रनाटकगतानां पद्यानां सलक्षणानि च्छन्दांसि

छन्दसां नामानि — तेषां लक्षणानि

१—स्रग्धरा—'म्रभ्नैर्यानां त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्'।

२—उपजातिः—'स्यादिन्द्रवज्रा यदि तौ जगौ गः। उपेन्द्रवज्रा प्रथमे लघौ सा। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः'॥

३—आर्या—'यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या'। अस्या अनेके भेदाः।

४—शार्दूलविक्रीडितम्—'सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्'।

५—पुष्पिताग्रा—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा॥

६—वसन्ततिलकम्—'ज्ञेयं वसन्ततिलकं तभजा जगौ गः'।

७—अनुष्टुप्—पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः। गुरु षष्ठं च जानीयाच्छेषेत्वनियमो मतः। अस्य वक्त्रमिति नामान्तरम्।

८—प्रहर्षिणी—'म्याशाभिर्मनजरगाः प्रहर्षिणीयम्'।

९—मालिनी—ननमयययुतेयं मालिनी भोगिलोकैः'।

१०—मन्दाक्रान्ता—''मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्'।

११—पथ्यावक्त्रम्—'युजोश्चतुर्थतो येन पथ्यावक्त्रं प्रकीर्त्तितम्।

१२—शिखरिणी—'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी'।

१३—सुन्दरी—'अयुजोर्यदि सौ जगौ युजोः सभरा ल्गौ यदि सुन्दरी तदा'॥

१४—मालभारिणी—'विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणी।

१५—शालिनी—'मात्तौ गौ चेच्छालिनी वेदलोकैः'।

१६—वंशस्थम्—वदन्ति वंशस्थविल जतौ जरौ'।

१७—पृथ्वी—'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः'।

१८—अपरवक्त्रम्—'अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ।

१९—हरिणी—'नसमरसला गः षड्वेदैर्हयैर्हरिणी मता'।

२०—द्रुतविलम्बितम्—'द्रुतविलम्बितमाह नभौ भरौ'।

२१—रुचिरा—'जभौ सजौ गिति रुचिरा चतुर्ग्रहैः'।

# मालविकाग्निमित्रनाटकगतानि सुभाषितानि ।

१—पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद् भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥

२—आकृतिविशेषेष्वादरः पदं करोति ।

३—सर्वस्यापि कुलविद्या बहुमता ।

४—अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् ।
नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्त्तुम् ॥

५—अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव ।
दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥

६—पत्तने सति ग्रामे रत्नपरीक्षा ?

७—सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय ।

८—सुशिक्षितोऽपि सर्व उपदेशने निष्णातो भवति ।

९—प्रायः समानविद्याः परस्परयशःपुरोभागाः ।

१०—मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥

११—उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः ।
श्यामायते न युष्मासु यः काञ्चनमिवाग्निषु ॥

१२—नहि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गजः ॥

१३—अनुरागोऽनुरागेण परीक्षितव्य इति सुजनवचनम् ।

१४—भ्रमरसन्निपातो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूतप्रसवोऽवतंसितव्यः ।

१५—इष्टाधिगमनिमित्तं प्रयोगमेकान्तसाध्यमपि मत्वा ।
सन्दिग्धमेव सिद्ध्यै कातरमाशङ्कते हृदयम् ॥

१६—नहि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।
कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते ॥

१७—कुतूहलवानपि निसर्गशालीनः स्त्रीजनः ।

१८—यो न बिभेति स मया भट्टिनीदर्शने दृष्टसामर्थ्यो भर्त्ता ।

१९—दर्दुरा व्याहरन्तीति किं देवः पृथिव्यां वर्षितुं विरमति ?

२०—कातरो बालभावः ।

२१—बन्धनभ्रष्टो गृहकपोतो विलाडिकाया आलोके पतितः ।

२२—चन्दनं खलु मया पादुकोपयोगेन दूषितम् ।

२३—स्नानीयवस्त्रक्रियया पत्रोर्णं नोपयुज्यते ।

२४—कलभेन यूथपतेरनुकृतम् ।



## 'प्रकाश' कर्त्तुर्वंशपरिचयः ।

माण्डरसंज्ञकमैथिलभूसुरवंशेऽजनिष्ट कृती ।
श्रीमान् 'कन्हाइ'मिश्रो हृतजनताऽज्ञानतामिस्रः ॥ १ ॥
उदित'शङ्कीतन'शर्मा ततः सुमेरोरिवादित्यः ।
योऽमानि मानिनिवहश्रेयान् सुकृतावदातात्मा ॥ २ ॥
मृतपितृकः स बाल्ये मातुलकुलमाश्रितः शरणम् ।
ग्रामे 'पकडी'नामनि गृहस्थतां प्रापितो न्यवसत् ॥ ३ ॥
तत्तनयेषु प्रथमो वयसा ज्ञानेन यशसा च ।
'मधुसूदन'मिश्राख्यो भक्तश्चतुराग्रणीरभवत् ॥ ४ ॥
तत एव श्री'जयमणि'संज्ञायां मातरि प्रापम् ।
जनिमब्धिरामवसुभूमितशाके 'रामचन्द्रो'ऽहम् ॥ ५ ॥
प्रभवादष्टमशरदि स्नेहान्मामुपनिनीषन्तम् ।
तातं सदा स्वतन्त्रा नियतिरकार्षीत्कथाशेषम् ॥ ६ ॥

बाल्ये पण्डित'झिङ्गुर'शर्मकृपाप्राप्तबोधस्य ।
मम चक्षुषी चमत्कृतसंस्कृतभाषाप्रयोगेषु ॥ ७ ॥
उन्मीलिते अभूतां श्री'श्रीनाथाख्यविबुधस्य ।
मम मातुलस्य चरणौ निषेवमाणस्य न चिरेण ॥ ८ ॥
गूढं शास्त्ररहस्यं ज्ञातुं निखिलं निबद्धकक्षस्य ।
उपदेशको ममाभू–'दीश्वरनाथो विद्वद्वन्द्यः ॥ ९ ॥
स्वाभाविक्या कृपया स्नेहेनान्तःप्ररूढेन ।
ममताद्दशा च योमामपुषत्सोदर्यभावेन ॥ १० ॥
तत्कृपयाऽधिगताखिलसंस्कृतसाहित्यमर्माणम् ।
बुधवर'किशोरिशर्मा' मां व्यधिताचार्यपदभाजम् ॥ ११ ॥
श्रीयुत'जटेश्वरा'भिधविद्वद्वरपादमुपजीव्य ।
दर्शनशास्त्ररहस्यं न चिरेणाशेषमाचकलम् ॥ १२ ॥
एतानन्यांश्च गुरून्मनसि ममावस्थितान् सततम् ।
ध्यायामि यत्कृपा मे मानुष्यकमञ्जसाऽस्राक्षीत् ॥ १३ ॥
द्वाविंशद्वर्षवयः समधिगताध्यापनावसरः ।
अध्यापयामि दर्शनशब्दालङ्कारशास्त्राणि ॥ १४ ॥
येन व्यरचि निबन्धः प्रबन्धविषयः[1], प्रकाशश्च ।
आचार्यहेमचन्द्रप्रणीत–'काव्यानुशासने'ऽकारि ॥ १५ ॥
सङ्गृह्य 'सूक्तिमुक्तावलिकां' 'प्रतिमां' प्रकाश्यापि ।
'आर्यालहरी'नामा सुधियामानन्दमेषयितुम् ॥ १६ ॥
काव्यग्रन्थो रचितो नव्या टीका च 'कौमुद्याः' ।
प्राणायि श्रीवाणीसेवा–सन्तोषमधिगन्तुम् ॥ १७ ॥
सोऽहं 'प्रसन्नराघव'टीकाऽवरजं प्रकाशममुम् ।
निरमामिह विद्वांसः कृपास्पृशः स्वाद्दशो दध्युः ॥ १८ ॥

शुभमस्तु ।

---

१ प्रबन्धपारिजातः ।